JAIDEV

महाकविश्रीजयदेवविरचितं

# गीतगोविन्दकाव्यम्

## (GITAGOVINDA)

श्रीकुम्भनृपतिप्रणीत-रसिकप्रियाव्याख्यया, महामहो-
पाध्याय-श्रीशङ्करमिश्रनिर्मित-रसमञ्जरीव्याख्यया,
दीपिका-पद्योतनिका-सञ्जीविनी-
बालबोधिनीव्याख्याविशिष्टांशैः,
तत्पाठान्तरैः, परिशिष्टैश्च
समन्वितम्






•

श्रीमदिन्दिराकान्तचरणान्तेवासिना
नारायण राम आचार्य 'काव्यतीर्थ'
इत्यनेन संशोधितम्






नवमं संस्करणम् : १९४९

निर्णयसागर-मुद्रणालयम्, मुंबई नं. २

मूल्यं ३ रूप्यकाः

# प्रथमसंस्करणस्य प्रस्तावना.

श्रीमहाकविजयदेवविरचितं मृदुलपदसरणिललितं रुचिरार्थसंहतिबहुलं सरसरागनिबद्धसुप्रबन्धप्रधानं शृङ्गाररसभाण्डागारसदृशमिदं गीतगोविन्दकाव्यं कैश्चिद्बुधैर्मुद्रयित्वा प्रकाशितमपि सहृदयाह्लादिन्या साहित्यसंगीतविवेकप्रचुरया टीकया समेतं केनापि प्रकाशितं नैव दृश्यते । अतस्तद्रसध्वन्यलंकाररागतालादिलक्षणानुगतिद्योतकेन टीकाद्वयेनालंकृत्य संप्रति रसिकजनविनोदाय प्रकाश्यते ।

अस्य गीतगोविन्दकाव्यस्य प्रणेतुर्जयदेवकवेर्देशकालादिकं जीवितवृत्तं चान्येषां बहूनां कवीनामिव सम्यङ् न ज्ञायते । तथाप्यस्माभिर्यत्किंचिन्मधुकरवृत्त्यसंकलितं तदत्र विद्वत्कौतुकाय संगृह्यते ।

गीतगोविन्दकाव्यादेव यदस्य कवेः पितृनामादिकं लभ्यते तदेवम्—जयदेवस्य पितुर्नाम श्रीभोजदेव इति । मातुर्नाम राधादेवी रामादेवीति वा । पराशराभिधः कोऽपि रसिकोऽस्य सुहृदासीत् । जयदेवकवेर्भार्याया नाम पद्मावतीति । उमापतिधरः शरणः, गोवर्धनाचार्यः, धोयीकविराज इत्येते कवयो जयदेवसमकालीना आसन् । जयदेवस्य कुलवृत्तिग्रामः किन्दुबिल्वाख्य आसीदिति ।

जयदेवकविः परमः कृष्णभक्त आसीत् । अतो लोकेऽयं महासाधुत्वेन सर्वस्मिन्नपि भरतखण्डे विख्यातो बभूव । एतद्विषयकमस्य चरितं श्रीमच्चन्द्रदत्तकृतभक्तमालाख्यग्रन्थे ३९ तमसर्गमारभ्य ४१ तमसर्गपर्यन्तं त्रिभिः सर्गैर्वर्णितमस्ति । तदत्र बालबोधाय यथामूलमुपन्यस्यते । तद्यथा—

"पुनरग्रे प्रवक्ष्यामि भक्तिमाहात्म्यमुत्तमम् ।
यच्छ्रुत्वा जायते भक्तिर्वासुदेवे महात्मनि ॥
जगन्नाथपुरीप्रान्ते देशे चैवोत्कलाभिधे ।
बिन्दुबिल्व इति ख्यातो ग्रामो ब्राह्मणसंकुलः ॥
तत्रोत्कले द्विजो जातो जयदेव इति श्रुतः ।
विद्याभ्यासरतः शान्तः पुरुषोत्तमपूजकः ॥

---

१ गीतगोविन्दस्थे 'श्रीभोजदेव' इत्यादिपद्ये (पृ० २००) द्रष्टव्यम् ।

२ गीतगोविन्दस्यैकोनविंशप्रबन्धस्यान्तिमपदस्य 'जयति पद्मावतीरमणजयदेव' इत्यादि (रत्नकर्णादि) पाठान्तरदर्शनात् (पृ० १२१) भक्तमालग्रन्थेऽपि तथैव कथनाच्च ।

३ गीतगोविन्दस्थे 'वाचः पल्लवयत्युमापतिधरः' इत्यादिपद्ये (पृ० ५) द्रष्टव्यम् ।

४ गीतगोविन्दस्य सप्तमप्रबन्धस्यान्तिमपदे (पृ० ६८) 'किन्दुबिल्वसमुद्रसंभवरोहिणीरमणेन' इति दर्शनात् । टीकाद्वयेऽपि किन्दुबिल्वशब्दस्य जयदेवकुलवृत्तिग्रामत्वेन व्याख्यातत्वाच्च । भक्तमालग्रन्थे तु 'बिन्दुबिल्व' इति पाठो दृश्यते ।

५ अयं भक्तमालग्रन्थः श्रीमद्भिः खेमराजश्रीकृष्णदाससमाह्वयैः स्वकीये श्रीवेङ्कटेश्वरमुद्राख्ये मुद्रयित्वा प्रकाशितः । तत उद्धृतमेतदध्यायत्रयम् ।

अथ तत्रैव विप्रोऽन्यो देवशर्मेति विश्रुतः ।
अनपत्यो बभूवासौ जगन्नाथमुपागतः ॥
नमस्कृत्य हरिं मूर्ध्ना स्वीचकार कृताञ्जलिः ।
यदि मे संततिर्नाथ ! त्वत्प्रसादाद्भविष्यति ॥
अपत्यं प्रथमं तुभ्यमर्पयिष्याम्यसंशयम् ।
प्रतिश्रुत्य मनस्येवं स यातो निजमन्दिरम् ॥
तत्र कालेन कियता कन्यैका प्रथमाजनि ।
ततः पुत्रानलभत साधुवृत्तान्मनोहरान् ॥
ततः स मनसा स्मृत्वा सपत्नीको द्विजोत्तमः ।
कन्यां गृहीत्वा हर्षेण जगन्नाथमुपागतः ॥
नमस्कृत्य जगन्नाथं देवशर्माब्रवीद्वचः ।
'देवदेव ! जगन्नाथ ! प्रसादः फलितो मम ॥
प्रथमा तनया जाता पुत्रास्तु तदनन्तरम् ।
अतः प्रतिश्रुतां कन्यां ददामि प्रतिगृह्यताम् ॥'
इत्युक्त्वा तां करेणासौ गृहीत्वा तां प्रदर्श्य च ।
पूजकेभ्योऽथ वृत्तान्तमादितो व्याजहार सः ॥
ततो बहिः समागत्य सोऽवतस्थे क्वचिद्द्विजः ।
रात्रौ तस्य च विप्रस्य पूजकस्य जगत्प्रभुः ॥
स्वप्ने तं कथयामास जगन्नाथो द्रुतं वचः ।
'देवशर्मन् ! प्रसन्नोऽस्मि स्वीकृता ते सुता मया ॥
परंतु जयदेवाय दीयतां मत्प्रियो ह्यसौ ।
अहमेव स विज्ञेयो नात्र कार्या विचारणा ॥'
पूजकोऽप्येवमेवाथ स्वप्नं दृष्ट्वा प्रबोधितः ।
देवशर्माणमागत्य स्वप्नं प्रोवाच हर्षितः ॥
श्रुत्वैवं देवशर्मापि स्वप्नं सत्यममन्यत ।
पूजकं तं नमस्कृत्य गृहीत्वा तनयां निजाम् ॥
जगाम जयदेवस्य संनिधौ हृष्टमानसः ।
तं तु पर्णकुटीमध्ये ग्रामाद्बहिरवैक्षत ॥
दरिद्रं निरपेक्षं च शान्तं पश्यन्तमादरात् ।
मनसा तु जगन्नाथं ध्यायन्तं मुदिताननम् ॥
प्रणम्य जयदेवं तं देवशर्माब्रवीद्वचः ।
'इयं मे तनया ब्रह्मञ्जगन्नाथाज्ञया मया ।
नाम्ना पद्मावती तुभ्यं दीयतेऽनुगृहाण ताम् ॥'
इत्युक्तो जयदेवस्तमुवाच मधुरं वचः ॥
अहं न कन्यादानस्य पात्रं दीनोऽनिकेतनः ।
ममापि न जिघृक्षास्ति किमिदं भाषसे वृथा ॥

जगन्नाथाज्ञयेत्युक्त्वा यन्मां वक्ष्यति स्फुटम् ।
कुत एवं मतिर्भ्रान्तो गच्छ गच्छ यथासुखम् ॥
आनाय्य पुत्रकं तत्तु देवशर्मातिनम्रतः ।
निवेदयामास मुहुर्वा च न स्वीचकार सः ॥
ततः स्वतनयां तत्र स्थापयित्वा द्विजोऽब्रवीत् ।
'अयं तु ते पतिः पुत्रि ! त्वया पूज्यश्च सर्वदा ।
पतिसेवापरा नारी सुखमक्षय्यमश्नुते ॥'
इत्युक्त्वा तां देवशर्मा ययौ पत्न्या सहाश्रमम् ।
सापि कन्या स्थिता तत्र जयदेवस्य संनिधौ ॥
जयदेवस्तु तां प्राह 'गतौ तौ पितरौ तव ।
त्वां विहाय त्वमन्येका कथं स्थास्यसि कानने ? ॥'
अथ पद्मावती प्राह 'भगवन्किं ब्रवीषि भोः ! ।
स्वमातृपितृदेवो वै स मां तुभ्यं ददौ पिता ॥
अतस्तवाहं त्वं चेन्मामतिभक्तामनागसम् ।
त्यक्ष्यसीत्यत्र किं कुर्यां नाहमेका त्वयि स्थिते ॥'
पद्मावतीवचः श्रुत्वा जयदेवोऽप्यचिन्तयत् ।
अनया सत्यमुक्तं हि त्यागे दोषो महान्मम ॥
तस्मादस्याः पितुर्गेहं गत्वाऽहमनया सह ।
इमां प्रतिग्रहीष्यामि विधिना नात्र संशयः ॥
इति निश्चित्य मनसा जयदेव उवाच ताम् ।
एह्यागच्छ मया सार्धं गच्छामि त्वत्पितुर्गृहम् ।
विधिना तत्र ते पाणिं ग्रहीष्यामि न संशयः ॥
इत्येवं वचनं श्रुत्वा प्राह पद्मावती पुनः ।
त्वदाज्ञाकरणं धर्मं इत्येवं मां पिताब्रवीत् ॥
अतो महाप्रसादोऽयमित्युक्त्वाग्रे स्थिताभवत् ।
जयदेवस्तया सार्धं देवशर्मगृहं गतः ॥
तद्युक्त्या मद्दत्तं सर्वं प्रतिगृह्य यथाविधि ।
पद्मावत्या तया सार्धमाजगाम निजं गृहम् ॥
उभौ तौ दम्पती तत्र एकप्राणौ बभूवतुः ।
पठन्तौ चापि गायन्तौ श्रीकृष्णार्चनतत्परौ ॥
एकदा जयदेवस्तु मनस्येवमचिन्तयत् ।
स्वयंकृतेन गीतेन तोषयिष्याम्यहं हरिम् ॥
इति निश्चित्य निर्माय गीतगोविन्दनामकम् ।
गायंस्तु देवदेवाग्रे पद्मया सह ननर्त ह ॥
एवं नित्यमतं तस्य तत्रैकस्मिन्दिने पुनः ।
बबन्ध रासचरितं कृष्णोक्तौ राधिकां प्रति ॥

शिरस्याधेहि मे पादमित्यर्धं च कृतं हृदि ।
समाधान्तं न तद्दातुं शशाकेश्वरतां स्मरन् ॥
अन्यदन्वेषमाणोऽपि न लेभे तादृशं पदम् ।
संस्थाप्य पुस्तकं स्नातुं जगामाम्बुद्धिचिन्तयन् ॥
तावज्जयदेवरूपेण कृष्णस्तत्र समागतः ।
पद्मावतीमुवाचाथ पुस्तकं देहि मे प्रिये ! ॥
पद्मावती समानीय ददौ तत्पुस्तकं द्रुतम् ।
गृहीत्वा पुस्तकं तत्र जयदेवेन यत्कृतम् ॥
मनसा तल्लिलेखासौ जयदेवस्वरूपधृक् ।
पुनरुत्थाय स स्नातुं जगामातित्वरान्वितः ॥
कंचित्कालमतीत्याथ जयदेवः समागतः ।
देवानभ्यर्च्य भक्त्या च गृहीत्वा पुस्तकं पुनः ॥
मनसा कल्पितं पद्यं लिखितुं तु समुद्यतः ।
ददर्श तत्र तत्पद्यं नालिखद्यदयं पुरा ॥
अन्येन लिखितं ज्ञात्वा प्राह पद्मावतीं प्रियाम् ।
अये ! केनेदमालेखि त्वं जानासि शुचिस्मिते ! ॥
नाहमेतत्पदं पूर्वमलिखं नाक्षरं मम ।
इति श्रुत्वा वचस्तस्य प्राह पद्मावती प्रिया ॥
नाथ कोऽयं भ्रमस्तेऽद्य जयदेवं वचोऽब्रवीत् ।
स्नातुं गतस्तु तत्काले पुनरागत्य सत्वरम् ।
गृहीत्वा पुस्तकं मत्तो लिखित्वा त्वं पुनर्गतः ।
स्नातुमेवं तु जानामि कोऽन्यस्त्वत्तोऽत्र लेखकः ॥
इति श्रुत्वा प्रियावाक्यं जयदेवोऽतिविस्मितः ।
अहर्निशं तमेवार्थं चिन्तयन्नालभत्सुखम् ॥
तस्मिन्दिने रात्रिशेषे स्वप्ने श्रीपुरुषोत्तमः ।
उवाच जयदेवं तु स स्वप्ने मुमुदे भृशम् ।
सपत्नी सुभगां मेने पुरुषोत्तमदर्शनात् ॥
तदारभ्यातिभक्त्या वै पत्न्या सह हरिं भजन् ।
गायन्वै गीतगोविन्दं तोषयामास केशवम् ॥
निर्माय गीतगोविन्दपुस्तकं पुरुषोत्तमे ।
निवेश्य कृतकृत्योऽभूज्जयदेवो महामनाः ॥
पुनर्वक्ष्यामि तस्यैव चरितं परमाद्भुतम् ।
जयदेवस्य विप्रस्य गीतगोविन्दसंभवम् ॥
एकदा गीतगोविन्दं श्रुत्वा राजातिहर्षितः ।
निजाभे स्थापयित्वा तत्काव्यं तादृशमेव च ॥

स्वयं निर्माय विद्वद्भ्यो ददावाज्ञां नृपः पुनः ।
अद्यारभ्य ममैतद्धै गीतगोविन्दनामकम् ॥
पठ्यतां गीयतां सर्वैरन्यथा दण्डभाग्भवेत् ।
इत्याज्ञाप्य द्वितीयं तद्गीतगोविन्दनामकम् ॥
प्रख्यापयामास नृपः काव्यं स्वकृतमेव तु ।
जयदेवकृतं कोऽपि न जगौ नृपशासनात् ॥
अथैकस्मिन्दिने राजा द्रष्टुं श्रीपुरुषोत्तमम् ।
आगतस्तत्र देवाग्रे जयदेवं ददर्श ह ॥
नृत्यन्तं स्वकृतं काव्यं गायन्तं नृप आह तम् ।
अहो मदीयं काव्यं त्वं कुतो न स्वीकरोषि भोः ॥
श्रुत्वैवं जयदेवस्तु राजानं प्राह भीतवत् ।
स्वीकृतं भवदीयं तु काव्यं राजन्न संशयः ॥
परंतु मत्कृतेनायं यथा तुष्यति केशवः ।
न तथा त्वत्कृतेनेति परीक्षा क्रियतामिह ॥
एतच्छ्रुत्वा तु वचनं जयदेवकृतं स्वकम् ।
उभयं स्थापयामास जगन्नाथाग्रतः स्वयम् ॥
उवाच देवं भोः स्वामिन् ! किं तवातिप्रियं द्वयोः ? ।
तत्स्थापयोपरिष्टात्तु यामः सर्वे बहिर्गृहात् ॥
इत्युक्त्वा ते बहिर्याता द्वारे दत्त्वा कपाटकम् ।
राजा च जयदेवश्च ये चान्ये तत्र वै द्विजाः ॥
अग्रे स्थित्वा क्षणं तत्रोद्घाटितं स्वयमेव हि ।
कपाटं मन्दिरे याताः सर्वे राजपुरःसराः ॥
ददृशुस्तत्र ते सर्वे जयदेवेन निर्मितम् ।
उपरिष्टात्स्थापितं तु तदधो राजनिर्मितम् ॥
दृष्ट्वा तत्परमाश्चर्यं राजा शोकसमन्वितः ।
त्यक्त्वान्नं च पानीयं रात्रौ तत्रैव तस्थिवान् ॥
नृपः स्वप्ने ददर्शाथ पुरुषोत्तमरूपधृक् ।
कश्चित्समागतो ब्रूते किमर्थं शोचसे वृथा ? ॥
गीतगोविन्दसदृशं नान्यत्काव्यं प्रियं मम ।
त्वत्कृतेनापि तुष्यामि भक्तस्त्वं नात्र संशयः ॥
परंतु गीतगोविन्दं स्वीकरोतु भवानपि ।
प्रख्यापयतु लोकेऽस्मिन्मम प्रीतिविवर्धनम् ॥
एवं पश्यन्नृपः स्वप्ने जहौ निद्रां मुदान्वितः ।
कृष्णं ननाम मनसा स्वापराधं क्षमापयन् ॥
तदारभ्य नृपो जातो जयदेवेऽतिभक्तिमान् ।
स्वयं तु गीतगोविन्दं प्रपठन्भक्तिपूर्वकम् ॥

प्रख्यापयामास पुनर्देशे देशे नृपोत्तमः ।
अथापरं प्रवक्ष्यामि तस्यैव चरितं शुभम् ॥
एकदा उत्कले देशे पुरुषोत्तमसंनिधौ ।
कस्मिंश्चिन्नगरे काचिच्छाकविक्रयिणी मुदा ॥
शरत्काले निशीथिन्यां चन्द्रिकाचितदिग्दशे ।
गायन्ती गीतगोविन्दं वृन्ताकवनमभ्यगा ॥
वृन्ताकं च विचिन्वन्ती विक्रयार्थमितस्ततः ।
गायन्ती कृष्णचरितं जयदेवविनिर्मितम् ॥
श्रुत्वा गानं तु भगवांस्तस्याः पश्चादितस्ततः ।
शृण्वन्गीतं स बभ्राम व्रजन्ती सा यतो यतः ॥
एवं भक्तिवशः कृष्णो वृन्ताकविपिने हरिः ।
वृन्ताककण्टकैश्छिन्नं परिधानीयमम्बरम् ॥
वृन्ताकानि गृहीत्वा सा मन्दिरं स्वं ययौ मुदा ।
तदा जगाम चैत्यान्तो निशि श्रीपुरुषोत्तमः ॥
प्रभाते तत्र पूजार्थमायातः पूजको हरेः ।
पूजार्थभारमादाय द्रष्टुं राजाप्युपागतः ॥
प्रोद्घाट्य स कपाटं तु गत्वा देवस्य संनिधौ ।
श्यामस्यपरिधानीयमपश्यत्खण्डशः कृतम् ॥
वृन्ताककण्टकैर्विद्धं किमेतदिति चिन्तयन् ।
आहूय स तु राजानं दर्शयामास चाम्बरम् ॥
कथमेतद्भवद्राजन्परमाश्चर्यमित्यहो ।
मयैवागत्य च पुनः कपाटोद्घाटनं कृतम् ॥
न चौरो नापि चोन्मत्तः कश्चिदत्रागतो निशि ।
कथमेतद्विजानीयां केनेदं कृतमीदृशम् ॥
इत्युक्त्वा पूजयित्वा तं सह राज्ञा स पूजकः ।
विस्मितो बहिरागत्य परां चिन्तामुपागतः ॥
मुहुर्मुहुश्चिन्तयानो न केनेऽद्भुतकारणम् ।
तदा राजापि तत्रैव पूजकाग्रहेण वै ॥
उवाच रात्रौ श्रीकृष्णं प्रार्थयन्मनसा मुहुः ।
केनेदमासीद्वस्त्रस्य खण्डशः करणं विभोः ॥
एवं चिन्तापरौ तौ तु त्यक्ताशनजलावुभौ ।
रात्रौ सुषुपतुस्तत्र लेभाते नैव तौ सुखम् ॥
तदा निशावशेषे तु स्वप्ने श्रीपुरुषोत्तमः ।
ददृशातुरुभौ देवं तत्स्वरूपिणमागतम् ॥
राजानं ब्राह्मणं चापि वदन्तं मधुराक्षरम् ।
विषीदसि किमर्थं भो ! मद्वस्त्रच्छेदनादिना ? ॥

शृणुष्व कारणं वासो येन छिन्नमनेकधा ।
इतोऽविदूरे वृन्ताकवाट्यां काचिज्जगौ मुदा ॥
फलविक्रयिणी गीतगोविन्दं मम वल्लभम् ।
तच्छ्रोतुमगमं चाहं वाट्यां सार्धं यया पुनः ॥
इतस्ततो ह्यधावं तु ततो वृन्ताककण्टकैः ।
खण्डशः स्फुटितं वस्त्रं सत्यमेतन्न संशयः ॥
मा विषादं कुरुष्वात्र नैव दोषोऽस्ति कस्यचित् ।
इति श्रुत्वा वचः स्वप्ने भूपतिः स च पूजकः ॥
उत्थाय च ततो विप्रो राजसंनिधिमागतः ।
राजानमुक्तवान्सर्वं स्वप्ने यद्यदवैक्षत ॥
श्रुत्वा राजा च तत्सर्वं सत्यमेतदिति ब्रुवन् ।
उवाच स्वप्ने यद्दृष्टं राजापि सत्यमेव हि ॥
परस्परं प्रशंसन्तौ शाकविक्रयिणीगुणौ ।
जयदेवकविं चैव राजा तु ब्राह्मणः स च ॥
अथ राजा तु तां शाद्वीं शाकविक्रयिणीं तदा ।
आनाय्य जीविकां दत्त्वा वासयैव पुरे सदा ॥
गायन्ती गीतगोविन्दं नित्यं श्रीपुरुषोत्तमम् ।
तोषयेति नृपस्त्वाज्ञां दत्त्वा संपूज्य केशवम् ॥
भुक्त्वा प्रसादं देवस्य जगाम भवनं निजम् ।
जयदेवं ततो राजा भक्तराजममन्यत ॥
मुहुस्तद्दर्शनाकाङ्क्षी कविवेश्म ययौ नृपः ।
एवं भक्तिवशः कृष्णः किं किं न कुरुते प्रभुः ॥
तस्मादद्यापि भक्तिर्हि नृणां सर्वार्थसाधिनी ।
अथापरं प्रवक्ष्यामि पद्मावत्या विचेष्टितम् ॥
जयदेवस्य चरितं महादाश्चर्यसंयुतम् ।
एकदा तत्र नृपतेर्भ्राता कश्चित्सगोत्रजः ॥
ममार कालधर्मेण तत्पत्नी सुव्रता सती ।
अनुगन्तुं मनश्चक्रे निश्चितं पतिदेवता ॥
ततो राजा ददौ सर्वं संभारमौर्ध्वदैहिकम् ।
स्वयं तत्र गतो राजा पुरवासिजनैर्वृतः ॥
तस्मिन्नेव क्षणे राज्ञीं द्रष्टुं पद्मावती ययौ ।
राज्ञी प्रणम्य तां प्राह सतीं द्रष्टुं किमेषि भोः ? ॥
इति श्रुत्वा वचो राज्याः प्राह पद्मावती सती ।
अहो 'पाषण्ड' इत्येव मृते पत्नी मनस्विनी ॥
एवं भर्तुमुपायं यत्प्रसाधयति सुव्रता ।
अहं तु मन्ये भो राज्ञि पत्युर्मरणसंश्रुतम् ( तौ ? ) ॥

तत्क्षणाद्देहजे वह्नौ भस्मीभूता न साभवत् ।
का भक्तिः का च तत्प्रीतिर्मतं तस्याश्च किं पुनः ॥
इति श्रुत्वा वचस्तस्या राज्ञी विस्मयमागता ।
किमिदं भाषसे साध्वि ! कथमेवं भविष्यति ? ॥
परीक्षां कारयिष्यामि किञ्चित्कालं प्रतीक्ष्य च ।
इति श्रुत्वा वचस्तस्य राज्ञी विस्मयमागता ॥
पद्मावत्यपि तां राज्ञीं समाभाष्य गृहं ययौ ।
अथैकस्मिन्दिने राजा द्रष्टुं श्रीपुरुषोत्तमम् ॥
जगाम जयदेवं तं पुरस्कृत्यातिभक्तितः ।
उवास तत्र तां रात्रिं जयदेवेन संगतः ॥
अथ प्रभाते संजाते यावद्राजा न चागतः ।
तावदेव तु सा राज्ञी कविपत्नीं समाह्वयत् ॥
पद्मावती समायाता राज्ञीं प्राह करोमि किम् ?
तां दृष्ट्वा राजपत्नी सा रुरोदाह च विह्वला ॥
राज्ञा सह कविस्तत्र देवं द्रष्टुं गतः किल ।
तत्राकस्माद्विना दुःखं पतितो देहमत्यजत् ॥
तद्दुःखवशगो राजा नायाति स्वगृहं पुनः ।
अमी समागता भृत्याः कथयन्तीदमप्रियम् ॥
इति श्रुत्वा वचस्तस्या राज्ञ्याः पद्मावती सती ।
अहो किमिदमित्युक्त्वा तूष्णीं तस्थौ क्षणार्धतः ॥
निपपात पृथिव्यां सा गतासुरभवत्तदा ।
अथ राज्ञी समागत्य हाहाकारं मुहुर्मुहुः ॥
कुर्वन्ती स्वयमेवार्ता तामुत्थाप्य पतिव्रता ।
नोत्तस्थौ तां मृतां ज्ञात्वा राज्ञी शोकसमाकुला ॥
भृशार्ता विललापाथ गर्हयन्ती निजां क्रियाम् ।
अथ तत्र गताः सर्वे राजदाराः समन्ततः ॥
चुक्रुशुः शोकसंतप्ताः किं जातमिति चाब्रुवन् ।
अथ राजापि कविना समायातोऽतिविस्मितः ॥
श्रुत्वा कोलाहलं शीघ्रं ययावन्तःपुरं स्वकम् ।
जयदेवेन सार्धं च तत्र गत्वा ददर्श ह ॥
पद्मावतीं मृतां भूमौ राजा प्राह प्रियां प्रति ।
किं जातमस्या येनेयं मृता कस्मात्कविप्रिया ? ॥
श्रुत्वा राज्ञी नृपवचो भीता प्राह कृताञ्जलिः ।
मम दुश्चरितं नाथ ! क्षम्यतां कथयामि ते ॥
तव भ्राता मृतः पूर्वं तत्पत्नी सा तमन्वगात् ।
तां दृष्ट्वा प्राह मामेषा कोऽयं पाखण्ड इत्यहो ॥

मृते पत्यौ तत्क्षणात्तु भस्मसादभवच्च या ।
तस्या वृथा मतं प्रीतिरित्थेवं मम निश्चयः ॥
इति श्रुत्वा वचस्तस्याश्चिकीर्षन्ती परीक्षणम् ।
अवदं ते पतिः साध्वि ! मृतोऽकस्मादिति श्रुतम् ॥
तच्छ्रुत्वैव पपातोर्व्यां मृता तत्क्षणमेव हि ।
इदानीं त्वमिहायातः कविना सह पैशतः ॥
अतः परं यत्कर्तव्यं तत्कुरुष्व मम प्रभो !
इति श्रुत्वा वचस्तस्या राजा शाह्यातिविस्मितः ॥
वृथेयं घातिता देवि ! त्वया पद्मावती सती ।
निवत्स्यति कथं गेहे जयदेवोऽनया विना ? ॥
अतस्त्वद्वधमहमपि त्वां वधेयच्छ मयाधुना ।
घातने स्त्रीवधो मे स्यादयश्या हि स्त्रियो नृणाम् ॥
इति राजवचः श्रुत्वा जयदेवोऽब्रवीद्वचः ।
राजन्नपराधेयं महिषी तव सुव्रता ॥
न त्यागमर्हत्येषा वै नैवं ब्रूहि ममाग्रतः ।
कौतुकेन मृषावाक्यं भवत्येव न संशयः ॥
वाक्यालेन न तत्रास्ति पातकं कस्यचिन्नृप ।
किं च क्षणं जगन्नाथं स्मर त्वं सुमना भव ॥
भजेऽहमपि तं देवं कल्याणं स करिष्यति ।
इत्युक्त्वा जयदेवस्तु माधवमाप्य सर्वेषाः ॥
प्रिये ! चार्चिति यत्श्लोकं गीतं तत्परमानसः ।
जगौ ततः क्षणादेव पद्मावत्याः कलेवरम् ॥
चेतनाच्च ततः सर्वे विस्मयोत्फुल्ललोचनाः ।
साधु साध्विति च प्रोचुः कैश्चित्कालं व्यतीत्य वा ॥
समुत्थाय जगौ पत्या सार्धं तु पश्यतां नृणाम् ।
ततो राजा जहर्षाथ राज्ञी चापि पुनः सतीम् ॥
प्रणनाम मुहुर्भक्त्या क्षम्यतामिति भाषिणी ।
ततः प्रसन्नः स कविः स्नात्वा भुक्त्वा नृपाज्ञया ॥
स्वगृहं प्रययौ हृष्टः पद्मावत्या महोत्सुकः ।
एवं भगवतो भक्तिर्ह्यतसंजीविनी नृणाम् ॥
अद्यापि वर्तते लोके निश्चयोऽपेक्षितः किल ।

इति श्रीभगवद्भक्तिमाहात्म्ये जयदेवचरितं
नाम चत्वारिंशः सर्गः ॥

अपरं शृणु वक्ष्यामि कवेः सुचरितं महत् ।
जयदेवसमः साधुर्न भूतो न भविष्यति ॥
सर्वभूतसुहृल्लोके समभावसमं पुनः ।
पश्चात्प्रारब्धभोगस्तु मनुते कर्मबन्धनम् ॥

एकदा स क्वचिद्ग्रामे निमन्त्रणवशाद्गतः ।
तत्र संमानितः शिष्यैर्वस्त्रालंकरणादिभिः ॥
भोजयित्वा सुवर्णानि दत्त्वा प्रातर्विसर्जितः ।
आगच्छद्विपिने मार्गे चिन्तयन्पुरुषोत्तमम् ॥
ततः शस्त्रधरास्तत्र लुण्टाकाः समुपागताः ।
चत्वारो निर्दयास्तीव्राः कालान्तकयमोपमाः ॥
तान्दृष्ट्वा जयदेवस्तु धनलोभाज्जिघांसतः ।
उपायमकरोत्तत्र प्राणत्राणाय केवलम् ॥
तानुवाच कविः प्रेम्णा वत्सा ! यूयं क्व गच्छथ ? ।
पुरुषोत्तमपुरीं याम इत्युक्तैः पुनः स तु ॥
उवाच तान्मधुरया वाचा भद्रमभूदिह ।
मयापि तत्र गन्तव्यं भवद्भिः साकमेव हि ॥
परं तु वृद्ध एकाकी गृहीत्वैतद्धनानि भो ।
गन्तुं न शक्तो यूयं चेद्धनमेतत्प्रगृह्य च ॥
गच्छताथ मया सार्धं तदा मे गमनं भवेत् ।
इत्युक्त्वा तानि वस्त्राणि सुवर्णानि च सर्वशः ॥
तेभ्यो दत्त्वा सुखं मेने प्राणत्राणं मुदान्वितः ।
शनैः शनैस्ततः पश्चात्ततः सोऽप्यगमत्कविः ॥
गृहीत्वैतानि वस्तूनि सुखं गच्छन्त्वमी पुनः ।
यास्यामि स्वगृहं दैवान्महारिष्टाद्विमोचितः ॥
अन्यथा माममी लोभाद्घातयेयुर्न संशयः ।
इत्येवं चिन्तयन्तं तं जयदेवं शनैः शनैः ॥
गच्छन्तं पुरतश्चौरा दीर्घनादैः समाह्वयन् ।
अहो शीघ्रं समागच्छ गृहाणेदं निजं धनम् ॥
त्वं तु गन्तुं न शक्तोऽसि दूरं गन्तव्यमस्ति नः ।
इति श्रुत्वा वचस्तेषां जयदेवोऽतिशङ्कितः ॥
किं करिष्यन्त्यमीत्येत(न्मनसाचि)चिन्तयद् पथि ( ? ) ।
तावत्ते मन्त्रयामासुरयं धूर्तोऽस्ति वै द्विजः ॥
अस्माभिरेव वस्तूनि प्रापयिष्यति नः पुनः ।
घातयिष्यति गत्वायं स्वग्रामे नात्र संशयः ॥
तस्मादेनं निहत्याथ गमिष्यामो न चान्यथा ।
एवं केनचिदुक्ते च तन्मध्ये कोऽप्यभाषत ॥
अहो किं मारणेनास्य बद्ध्वा संस्थाप्यतां क्वचित् ।
इत्युक्त्वा जयदेवं तु गृहीत्वा तेऽतिनिर्दयाः ॥
हस्तौ पादौ तथैकत्र बद्ध्वा चिक्षिपुरन्धतः ।
पुनस्तन्मध्यतः कोऽपि महादुष्टोऽतिनिर्दयः ॥

खड्गेन पाणिपादं तद्दुर्दं चिच्छेद यत्नतः ।
ततस्ते गन्तुमनसश्चौरा जग्मुर्यथेच्छया ॥
जयदेवोऽपि प्रारब्धभोगोऽयमित्यमन्यत ।
चिन्तयानो जगन्नाथं तत्रारण्ये क्षुधार्दितः ॥
अथ तत्रैत्य नृपतिर्मृगयां पर्यटन्वने ।
एकाकी हयमारूढो धावन्तं मृगमन्वगात् ॥
राजा तत्राजगामाथ जयदेवसमीपगम् ।
मृगं दृष्ट्वा न विव्याध जयदेवेन शङ्कितः ॥
आरोप्य शिबिकायां तमानिनाय निजं पुरम् ।
तत्र पद्मावतीं साध्वीमानाय्य नृपतिस्तदा ॥
सेवयामास सर्वैश्च जयदेवं नृपोत्तमः ।
ततो राजा प्रतिदिनं जयदेवदिदृक्षया ॥
जगाम तद्गृहं तस्य तदातिथ्यं चकार सः ।
एवं गतेषु कालेषु कियत्सु च ततः कविः ॥
समाजग्मुस्तु ते चौरा मुद्रामात्रविभूषिताः ।
साधुवेषधरास्ते तमुपकारं दिदृक्षवः ॥
आगच्छन्तो भगवतो गृहमायान्स्वसंशयम् ।
पद्मावतीं समाहूय पाद्याद्यैस्तानपूजयत् ॥
ततस्तान्भोजयित्वा तमाजुहाव नृपं कविः ।
राजा तत्रागतस्तं च जयदेवोऽभ्यभाषत ॥
पुरस्कृत्य च तान्दुष्टानदुष्टेनान्तरात्मना ।
राजन्नेते गुरुसमा महान्तः शास्त्रपारगाः ॥
एतेभ्यो देहि वित्तानि पात्रमेते न संशयः ।
इति श्रुत्वा ततो राजा रत्नानि विविधानि च ॥
वस्त्राण्याभरणादीनि ददौ परमभक्तितः ।
गृहीत्वा तद्धनं ते वै यथेष्टं गन्तुमुद्यताः ॥
तदा प्राह नृपं भूयो जयदेवोऽतिहर्षितः ।
अहो मार्गे कियद्दूरे वनमत्यन्तभीषणम् ॥
तस्य संतारणार्थाय भृत्यं तेभ्यो नियोजय ।
वनाद्बहिरिमान्कृत्वा पुनरायातु मेऽन्तिकम् ॥
इति श्रुत्वा ततो राजा पदातीन्पञ्च तान्प्रति ।
नियोजयामास तदा ते जग्मुस्तैः सहाद्भुतम् ॥
ततो सर्वैर्नगैस्ते ( ? ) तु तरुच्छायामुपाश्रिताः ।
राजभृत्याः कथाशेषे तानूचुश्च विनीतवत् ॥
अहो कर्मैर्भवन्तः के तद्भूत कृपया मुदा ।
युष्मदर्थं तु भक्त्या यद्राजानं प्रार्थयत्कविः ॥

इति श्रुत्वा वचस्तस्य राजभृत्यस्य ते खलाः ।
ऊचुः प्रशस्य ते सर्वे शृणु कारणमत्र भो ॥
कर्णाटराजनिकटे वयं भिक्षाशिनः स्थिताः ।
तत्रायमपि चायातो धनार्थी काव्यकृद्द्विजः ॥
तत्रैकस्य गृहे चौर्यं चकारायं द्विजाधमः ।
धनिकेन गृहीत्वाथ प्रापितो राजसंनिधौ ॥
राजानं प्राह धनिको नायं विप्रकुलोद्भवः ।
चौरोऽयं नित्यचौर्येण कदापि पतितः प्रभो ॥
इदानीं मद्गृहे भृत्यैर्धृत्वा नीतस्त्वदन्तिके ।
इति श्रुत्वा ततो राजा चाण्डालाय समार्पयत् ॥
गृहीत्वेमं दुरात्मानं मम राज्याद्बहिष्कुरु ।
अन्यराज्ये तु प्रापय्य जहि खड्गेन पापिनम् ॥
इत्याज्ञां शिरसा कृत्वा चाण्डालस्तं प्रगृह्य च ।
गच्छंश्च प्रार्थितो भूयो द्रव्येणापि वशीकृतः ॥
अस्माभिरुक्तो नायं भो वध्यो युष्माभिरेव च ।
देशान्तरमवश्यं तु प्रापयित्वाङ्गुलिद्वयम् ॥
छित्त्वा यान्तु नृपद्वारं प्रत्ययार्थं प्रदर्श्यताम् ।
इत्येतदुक्तं स्वीकृत्य नीत्वा तं राज्यतो बहिः ॥
अत्र राज्ये वने क्वापि छित्त्वा तत्पाणिपादकम् ।
राज्ञे प्रदर्शयामासुरिति यातं पुरा स्म भो ॥
ततोऽस्मानर्चयामास राज्ञः स्वसुतरक्षणम् ।
इति तेषां कथयतां तुमुलः खेऽभवद्ध्वनिः ॥
संपपाताशनिर्घोरं तेषां मूर्धसु तत्क्षणात् ।
ततस्ते राजभृत्यास्तु दृष्ट्वा तन्महदद्भुतम् ॥
क्षणात्तूष्णीं स्थिताः सर्वे संज्ञां संप्राप्य ते पुनः ।
तत्र श्रुत्वा नृपं यान्तं जयदेवस्य मन्दिरे ॥
तत्रैव ते गताः सर्वे गृहीत्वा धनसंचयम् ।
राजानं प्रणिपत्योचुस्ते बद्धकरसंपुटाः ॥
राजंस्ते साधवोऽरण्ये मृता वज्रापघाततः ।
वस्त्रादिकं गृहीत्वा तु वयमेव समागताः ॥
इति श्रुत्वा ततो राजा किं जातमिति चाब्रवीत् ।
ततस्ते निजप्रश्नादि वज्रपातान्तमब्रुवन् ॥
श्रुत्वाथ जयदेवस्तु हाहा कृत्वा मुहुर्मुहुः ।
रुरोद पत्न्यां हस्ताभ्यां छिन्नाभ्यां ताडयन्महीम् ॥
तत्क्षणाज्जयदेवस्य पाणिपादं तु पूर्ववत् ।
प्रादुर्बभूव सर्वेषां पश्यतां नात्र संशयः ॥

अमतां तादृशानां तु मृत्युं श्रुत्वा तु दुःखितः ।
रुरोद चक्षुषा तस्मात्तुतोष पुरुषोत्तमः ॥
ददौ हस्तौ च पादौ च किमाश्चर्यमिदं हरेः ।
अथ राजातिचिन्तार्तो जयदेवं प्रणम्य च ॥
पप्रच्छ किमिदं चित्रं ब्रूहि मत्कृपया द्विज ! ।
उवाच जयदेवस्तं वृत्तान्तं पूर्वतः स्वकम् ॥
चौराणां च यथातत्त्वं ततो राजा मुमोद ह ।
तुष्टाव जयदेवं तं धन्योऽसि त्वत्समो न वै ॥
दृष्टः श्रुतो वा लोकेऽस्मिन्मित्रशत्रुसमः पुमान् ।
धन्योऽहमतिनीचोऽपि त्वत्संसर्गान्न संशयः ॥
इत्यादिवचसा राजा स्तुत्वागत्य स्वमन्दिरम् ।
आश्चर्यं पुत्रदारेभ्यो मन्त्रिभ्यः प्रोक्तवान्स्वयम् ॥
अथ कालेन कियता जयदेवो जरां गतः ।
तथापि नित्यकर्मादि न तत्याज कदाचन ॥
गङ्गास्नानव्रतं तस्य नित्यसंकल्पितं पुरा ।
एकदा कृतशौचादिश्चलितो जाह्नवीतटम् ॥
स्नानमार्गे जराक्रान्तो विशश्राम क्वचित्क्वचित् ।
गत्वा कथंचिद्गङ्गायां स्नात्वा पीत्वा जलं पुनः ॥
आगच्छन्पथि चश्राम निपपात मुमूर्छ च ।
ततस्ते पथिकाः सर्वे सिषिचुस्तं च वारिणा ॥
वार्तां चक्रुस्ततो राजा ज्ञात्वा तत्राजगाम ह ।
दृष्ट्वा तं जयदेवं तु तामवस्थामुपागतम् ॥
आरोप्य शिबिकायां तु प्रापयामास मन्दिरम् ।
स्वयमागत्य च पुनः कृताञ्जलिरुवाच तम् ॥
अहो जीर्णतरं चेदं शरीरं ते महामते ! ।
मया हि पादचारेण स्नातुमद्यागतं पुनः ॥
ददामि शिबिकां तुभ्यं कुरुष्व मम भाषितम् ।
इति श्रुत्वा तु राजानं जयदेव उवाच सः ॥
ममैव शिबिका राजन् ! संरक्ष भवनेऽधुना ।
पादाभ्यामेव गत्वाहं स्नास्यामीति व्रतं मम ॥
यथा शक्तिस्ततो यामि मा कुरुष्वाग्रहं पुनः ।
इति श्रुत्वा ततो राजा जगाम भवनं स्वकम् ॥
संपूज्य देवतां भुक्त्वा राजकार्यपरोऽभवत् ।
अथ तस्यां तु राज्यां वै राजमान्यः पुरोहितः ॥
राजाहता महान्तो ये तत्र प्रान्ते द्विजाः स्थिताः ।
ते सर्वे ददृशुः स्वप्ने जयदेवोऽपि चाद्भुतम् ॥

शुक्लाम्बरधरा काचिच्छुक्ला मकरवाहना ।
पद्महस्तारविन्दाक्षी समागत्याब्रवीदिदम् ॥
अहं भागीरथी देवी प्रातरादिनिरन्तरम् ।
जयदेवस्य वाप्यां वै निवसिष्याम्यसंशयम् ॥
जानीहि प्रत्यहं तत्र पद्ममेतन्मया सह ।
आविर्भविष्यति जले द्रष्टव्यं भवता पुनः ॥
अयं तु जयदेवो मे भक्तोऽतीव प्रियः सदा ।
नैतस्य व्रतभङ्गोऽस्ति वाप्यां स्नानं करोत्वयम् ॥
तथापि बोधनीयः स नान्यथा मम भाषितम् ।
किं चान्यः प्रत्ययस्तत्र प्रोच्यते तन्निशामय ॥
जयदेवेन सार्धं तु गलत्कुष्ठोऽपि तत्र चेत् ।
कुष्ठरोगात्प्रमुच्येत स्नातः तद्दिनादपि ॥
एवं स्वप्नं प्रपश्यन्तः प्रबुद्धास्ते समागताः ।
एकाग्रे स्वप्नमूचुर्वै कथां कृत्वा परस्परम् ॥
नृपोऽमात्यैर्गणवृद्धैर्जयदेवस्य मन्दिरम् ।
समागत्याब्रवीत्सर्वं जयदेवाय भूपतिः ॥
श्रुत्वा तज्जयदेवस्तु निजस्वप्नं स्मरन्हृदि ।
नृपादीन्प्राह धन्या वै भवन्तो नात्र संशयः ॥
यैर्दृष्टा जाह्नवी देवी स्वप्ने श्रीरिव रूपिणी ।
किमाश्चर्यं भवद्भिर्यद्दृष्टं स्वप्नेऽतिदुर्लभम् ॥
जगन्मान्या जगन्माता जगदुद्धारकारिणी ।
आगमिष्यति वाप्यां सा सत्यमेतन्न संशयः ॥
इत्युक्त्वा नृपतिस्तूर्ष्णीं सामात्यः सपुरोहितः ।
सदारस्तत्र स्नानीयं गृहीत्वा समुपाययौ ॥
जयदेवोऽपि पूजार्थमर्घादीन्परिकल्प्य च ।
जगाम तत्र वाप्यां तु स्नातुं पद्मावतीपुतः ॥
तत्र वापीसमीपे तु गत्वा ते तु नृपादयः ।
जयदेवं पुरस्कृत्य सर्वे तत्रावतस्थिरे ॥
जयदेवोऽथ स्नानीयं मन्त्रं भक्त्या पठन्शठे ।
प्रविवेश तदा गङ्गा तत्र प्रादुर्बभूव ह ॥
अमिलं तज्जलं जातं दुग्धकुन्देन्दुनिर्मलम् ।
तादृशी सिकता जाता यथा गङ्गासरित्स्थिता ॥
प्रादुर्बभूव पद्मं तज्जले दृष्ट्वातिहर्षिताः ।
राजा च जयदेवश्च तथान्ये ये समागताः ॥
तुष्टुवुस्तां जनास्तत्र गङ्गां त्रिपथगामिनीम् ।
जयदेवोऽपि हर्षाश्रुपरिक्लिन्नदृगम्बुजः ॥

स्नात्वा पाद्यादिभिश्चैव पूजयामास भक्तितः ।
तस्मिन्नेतदिने तत्र दिव्यदेही बभूव सः ॥
एवमन्येऽपि ये तत्र यं यं कृत्वा मनोरथम् ।
स्नानपूजादिकं चक्रुरापुस्तेऽखिलमीप्सितम् ॥
इत्येतज्जयदेवस्य माहात्म्यं कथितं मया ।
यः पठेच्छृणुयादेतत्तस्य भक्तिर्दृढा भवेत् ॥
कामी कामानवाप्नोति जगन्नाथप्रसादतः ।
उत्तमां गतिमाप्नोति दुर्लभामपि योगिनाम् ॥
इति श्रीभगवद्भक्तिमाहात्म्ये जयदेवचरितं नामैकचत्वारिंशः सर्गः ॥" । इति ।

---

श्रीयुतमहामहोपाध्यायश्रीदुर्गाप्रसादपण्डितैः काव्यमालायां प्रकाशितायाः श्रीगोवर्धनाचार्यप्रणीतार्यासप्तशत्याष्टिप्पणे जयदेवकविसमयो युक्त्या निर्णीतः । तथा हि—'जयदेवकविश्च वङ्गदेशाधिपस्य बल्लालसेनसूनोर्लक्ष्मणसेनस्य सभायामासीदिति श्रीसनातनगोस्वामिनां मतम् । 'गोवर्धनश्च शरणो जयदेव उमापतिः । कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥' इत्ययं श्लोको लक्ष्मणसेनसभागृहद्वारोपरि शिलायामुत्कीर्ण आसीत् । तस्माद्गोवर्धनजयदेवादयः सर्वेऽपि लक्ष्मणसेनसभायामासन्निति केचित् । लक्ष्मणसेनश्च खिस्तसंवत्सरस्यैकादशशतकसमाप्तिपर्यन्तं वङ्गदेशं पालयामासेति केचिदितिहासविदः' इति । अतो जयदेवकविजीवनसमयोऽपि खिस्तसंवत्सरस्यैकादशशतक आसीदिति फलितार्थः ।

जयदेवकविकृतो गीतगोविन्दकाव्यादन्यः कोऽपि ग्रन्थो लोके न क्वापि श्रुतो नापि प्रसिद्धः । प्रसन्नराघवनाटककर्ता जयदेवस्तु कौण्डिन्यगोत्रोद्भवः सुमित्राकुक्षिजन्मा महादेवतनयः । शृङ्गारमाधवीयचम्पूप्रणेता जयदेवश्च अज्ञातपितृनामादिकः कृष्णदासैरुपपदवान् । अत उभावप्येतौ गीतगोविन्दकाव्यप्रणेतुर्जयदेवाद्भिन्नावितिसुविशदमेतत् ।

गीतगोविन्दकाव्यस्थं 'उन्मीलन्मधुगन्धलुब्ध' ( १।३।११ ) इत्यादिपद्यं खिस्तवर्षीयचतुर्दशशतकसमुद्भवेन वङ्गदेशीयेन श्रीविश्वनाथकविराजेन स्वकृतसाहित्यदर्पणाख्यग्रन्थस्य दशमपरिच्छेदे वृत्त्यनुप्रासोदाहरणतयोपन्यस्तं दृश्यते । एतेन तत्कालीना विद्वांसोऽपि गीतगोविन्दकाव्यं सत्काव्यतया स्वीचक्रुरिति ज्ञायते ।

---

१ काव्यमालायां प्रकाशितस्य आर्यासप्तशतीग्रन्थस्य प्रथमपृष्ठस्थटिप्पण्यां द्रष्टव्यम् ।

२ प्रसन्नराघवनाटकप्रस्तावनायां 'विलासो यद्वाचां' इत्यादि तथा, 'लक्ष्मणस्येव' इत्यादिश्लोकद्वयं द्रष्टव्यम् । ( निर्णयसागरमुद्रितपुस्तकस्य पृ० ५ ).

३ शृङ्गारमाधवीयचम्प्वादौ मङ्गलाचरणश्लोके द्रष्टव्यम् । इयं चम्पूः नाद्यापि क्वापि मुद्रयित्वा प्रकाशिता च । अस्या हस्तलिखितपूर्णपुस्तकमेकं मया दृष्टमासीत् ।

अत्र प्रकाशितयोष्टीकयोर्मध्ये प्रथमा तावद्रसिकप्रियाख्या श्रीकुम्भनृपतिविरचिता । अस्या आदर्शपुस्तकद्वयमस्मत्सुहृत्तमैः महामहोपाध्यायश्रीमद्दुर्गाप्रसादपण्डितैः कतिपयसंवत्सरेभ्यः पूर्वं मदभ्यर्थनयैव मन्निकटे प्रेषितमासीत् । लेखकप्रमादप्रचुराभ्यां निजचादर्शपुस्तकाभ्यां यथामति संशोध्य प्रकाशितेयं टीका रसिकमनोविनोदनाय । एतट्टीकाकर्ता श्रीकुम्भनृपतिस्तु संप्रति लोके 'मेवाड' इति नाम्ना प्रसिद्धे मेदपाटदेशे राज्यं चकारेति टीकावतरणिकात एव ज्ञायते । अस्य राज्यसमयस्तु विक्रमसंवत्सरस्य चतुर्दशशतकस्य प्रथमपाद आसीदितीतिहासतोऽवगम्यते ।

अत्र प्रकाशिता द्वितीया टीका रसमञ्जर्याख्या तु महामहोपाध्यायश्रीदिनेश्वरात्मजेन महामहोपाध्यायश्रीशंकरमिश्रेण संप्रख्यातकुलादिविशेषणस्य श्रीकालिनाथाभिधानस्य पुरुषस्याज्ञया विरचितेति टीकापुष्पिकातो ज्ञायते । एतट्टीकाया आदर्शपुस्तकमेकमस्मत्सुहृद्वरैः श्रीमद्भिः पञ्जाबीकरोपाह्वैर्वासुदेवशास्त्रिभिर्महता प्रयत्नेन संपादितम् । तदनुरोधेन च संशोध्य प्रकाशितेयमपि टीकात्र बालोपयोगितया ।

एतत्पुस्तकस्य मुद्रितपत्रसंशोधनकर्मणि प्रथमं श्रीमद्भिर्वासुदेवशास्त्रिभिः कियत्साहाय्यं कृतम् । किंतु अग्रे मानुषस्वभावसुलभशरीरानारोग्यवशात्कैश्चित् प्रतिमासेषु तेषु निरुक्तसंशोधनकर्म मय्येवापतत् । अतः प्रमादाद्यत्किंचिन्न्यूनमत्र दृश्येत तत्परमदयालुभिः सुधीभिः क्षन्तव्यमिति सविनयं प्रार्थयति—

विद्वदनुचरः
तैलङ्गोपाख्यो रामकृष्णसूनुर्महेशशर्मा ।

# उपोद्घातः

आसीत् प्राग्माळवीयावनितलवनिताभूषणे तिन्दुबिल्व-
ग्रामे सर्वर्द्धिपूर्णे द्विजवरतिलको शेषरत्नाकराख्यः ।
तत्पुत्रः पारिजातः सकलगुणनिधिः सत्कवेश्चक्रवर्ती
तस्माद्विद्याधरोऽभूत् सुरगुरुसदृशो विष्णुभक्तो वरिष्ठः ॥ १ ॥
यथार्थनामा विविधागमज्ञो वेदान्तविद्काव्यकलासु दक्षः ।
समस्तविद्यासु विशारदोऽसौ नैयायिको नाटकनीतिवेत्ता ॥ २ ॥
विख्यातराजन्यकचारित्रचित्रचमत्कृताखण्डमहीतलोऽभूत् ।
यस्याध्वरे देवगणाः स्वभागान् साक्षादगृह्णन् पुरुहूतमुख्याः ॥ ३ ॥
तत्पुत्रो जयदेव एव जगतामाराध्य उद्यन्मतिः
श्रौतस्मार्तविचारसारचतुरः श्रीमान् सुभक्तो हरेः ॥
साहित्येषु कृतश्रमः कविवरो धर्मार्थकामाधिको
दाता सिद्धिसमृद्धिसाधनपटुः कौण्डिन्यगोत्रोऽभवत् ॥ ४ ॥
द्वे भार्ये विजया जयेति ललनारत्ने रमाभे उभे
तस्याऽऽसन्नुरुगायकीर्तनकलाकौशल्यदक्षा जया ॥
नाम्ना साऽप्यपरेण लोकविदिता पद्मावतीत्युच्यते
पत्युः प्रेमरसाधिकाऽतिसुभगा लावण्यलीलावती ॥ ५ ॥
पुत्रौ सद्वंशजातौ सकलगुणभृतौ प्रेयसी (?) प्राप्य पुण्ये
यः स्वात्मानं कृतार्थं सकलमपि निजं जन्म मेने कवीन्द्रः ॥
ख्यात्याऽस्यां गेहकृत्यं निपुणमतिरसावाप नैश्चिन्त्यमर्थ-
व्यापारापारभारो धुरमपि च धुरं क्षिप्य तन्मूर्ध्नि सर्वम् ॥ ६ ॥
पद्मावत्यतिसुन्दराऽतिचतुरा जाताऽधिका पद्मिनी
गान्धर्वोदितगीतवाद्यकुशला विज्ञानपारङ्गमा ॥
शृङ्गारैकपरायणा रसकलाभावैकनिष्ठा सती
साध्व्याचारपतिव्रताऽतिविमला पत्युर्मनोहारिणी ॥ ७ ॥
भर्तुस्तोषणतत्पराऽतिचतुरा त्रैलोक्यसंक्षोभिणी
दिव्यस्त्रीरिव कामकेलिकुशला मोदावहा योगिनाम् ॥

---

1 उपोद्घातोऽयं दीपिकाटीकाकृता गोपालेन प्रणीय स्वटीकावसाने निविष्ट आसीदित्यनेनैवोपोद्घातेन स्फुटं भवति । टीकेयं १५८० विक्रमसंवत्सरे प्रणीतासीदिति टीकाकृत्प्रशस्तितोऽवगम्यते । 2 अनेकः श्लोको कुत्र इत्यर्थतः प्रतीयते, 'तत्पुत्रो' इत्यस्याग्रे जयदेवपितुर्भोजदेवस्य नामनिर्देशविरहात् ।

सोऽपि श्रीजयदेवपण्डितवरो भोगप्रयोगप्रभु-
र्यो वात्स्यायनकामशास्त्रचतुरः स्त्रीणां प्रियोऽनङ्गवत् ॥ ८ ॥
शाल्यां रेमे बहूनि स्मरभरचतुरो हायनान्यष्टषष्टिः
प्राप्तज्ञानो विवेकोदयविमलमना भुक्तभोगो विरागी ॥
सोऽभूत् कालेन वृद्धः कृतसुकृतचयोद्धूतदुर्मोहदोषो
मोक्षार्थी भूमिपीठं सकलमपि धियालोक्य सम्यग्विचार्य ॥ ९ ॥
सद्यो मुक्तिप्रदं किं भुविभव(वे?) पुंसां पापपुण्यान्वितानां
ध्यात्वेत्थं शिविकायामभयपदमिदं प्रेक्ष्य विज्ञानदृष्ट्या ॥
भूवैकुण्ठं विदित्वा सुदृढतरमतिः क्षेममानन्दवाटी-
मध्ये वाराणसीति त्रिपुररिपुहराधिष्ठितं श्रीभवान्या ॥ १० ॥
पञ्चक्रोशप्रमाणं त्रिपथगतटिनीतीर आस्ते विविक्तं
स्थानं विश्वेश्वरस्य त्रिपथमसमराज्यमाकाशुपमार्दैः ॥
शूलाग्रारोपितं यत्त्रिभुवनगुरुणा क्रूरकल्पान्तकाले
नाशं नाप्नोत्यशेषं कलिमलरहितं पालितं भैरवेण ॥ ११ ॥
यत्र श्रीमणिकर्णिका तनुभृतां प्राणप्रयाणोत्सवे
तच्छ्रीरामनिजाभिधानं श्रुतिपुटे मन्त्रोत्तमं तारकम् ॥
विश्वेशो जपति ध्रुवं पशुजनौघान्धकारापहा-
स्ते मुक्ताः स्फुरतीव चित्रमधुना प्रायश्चनेकाद्भुतम् ॥ १२ ॥
यत्रान्नपूर्णाऽभिमतार्थदात्री सर्वार्तिहृद्धी विजयप्रसिद्धी ॥
ढुण्ढाढुपूर्णोदनपाणिराजौ ढुण्ढाभिप्रकर्षी फलसाधविधी ॥ १३ ॥
महाश्मशानं यमुदाहरन्ति भूतिवैकुण्ठपदं विशिष्टम् ॥
अनन्तविद्याप्रभवैकखानिः सायुज्यमोक्षद्रुमजन्मभूमिः ॥ १४ ॥
अपुनर्भवरत्नरोहणाद्रिरसमजन्मसुखानुभूतिसिन्धुः ॥
सचराचरविश्वपावनी या जयति सा त्रिपुरारिराजधानी ॥ १५ ॥
यत्र साधनचतुष्टयोद्भवः शीघ्रमेव भवतीति निश्चितम् ॥
स्वात्मतत्त्वमुपदिश्य तारकं ब्रह्मभावमभयं नयत्यजः ॥ १६ ॥
गिरिसुतापतिरत्र मन्त्रराजं जपति दक्षिणकर्णमन्तराले ॥
गमयति तु समात्मतनौ लयं परमकारुणिको हि जगद्गुरुः ॥ १७ ॥
नातः परतरं क्षेत्रं त्रिषु लोकेषु विद्यते ॥
जन्तुर्निर्मुक्तिसोपानं प्रत्यक्षानर्थनाशनम् ॥ १८ ॥
ये काशीं न निषेवन्ति वञ्चितास्ते नरा भुवि ॥
चाण्डालपण्डितानां च गतिर्यत्र समेऽस्समा ॥ १९ ॥
याम्यायपाशान्विच्छिद्य शीघ्रं वाराणसीं पुरीम् ॥
यत्र नो यमदूतेभ्यो न मनाक् क्वापि भीर्भवेत् ॥ २० ॥

इत्थं व्यवस्य जयदेवकवीन्द्रवर्यः
सम्यग्विचार्य हृदि निश्चयमादरेण ॥
काशीं पुरीमभिससार सभार्य आरात्
कोशान्वितः सपरिवारगणैः सुहृद्भिः ॥ २१ ॥
तत्रावासीत् कतिपयसमाः सख्यमासाद्य सम्यक्
स्नेहाधिक्यादतुलमथो काशिराजेन सार्धम् ॥
तावन्योन्यं नरपतिकवी एककाव्यासनस्थौ
नानाक्रीडाविलसनरतौ सद्विहारैकनिष्ठौ ॥ २२ ॥
ऐश्वर्योत्सौ तुल्यभूषावलंबौ वासोऽलंकाराम्बितौ यानसंस्थौ ॥
नित्यं सन्तौ साहचर्ये विभाव्याविशिष्टौ नास्तां तौ क्षणार्धं वनेऽपि ॥ २३ ॥
जयदेवस्य सामर्थ्यात् माहात्म्यं प्रोच्यते कियत् ।
कवेरलौकिकी शक्तिर्दृष्टा प्रत्यक्षतो बुधैः ॥ २४ ॥
अनावृष्टिरभूत्तयोरा पुरासीत्तदा दैवयोगात्प्रजाः क्षुत्परीताः ॥
समभ्यर्च्य विश्वयोनिं हरिं शंभुमर्कं गणेशं च दुर्गां प्रजन्येदमूचुः ॥ २५ ॥
महेन्द्रं दिवाप्तं महावृष्टिहेतोः स्तुवन्तो यथार्थं सुरान्सूक्तवर्यैः ॥
वयं स्वामिनोऽत्यन्तदुःखार्दिता घोरवृष्ट्या कुटुम्बार्तिवृद्धेश्च भीताः ॥२६॥
तच्छ्रुत्वा जयदेव आह सहसाऽभ्येत्य द्रुतं सत्कविः
भो लोकाः ! शृणुतेन्दिरापतिरसौ क्षीराब्धिशायी विभुः ॥
योऽनङ्गस्य पिता जगद्गुरुवरः पूर्णः पुराणः परः
पर्जन्येन किमस्य कृत्यमवनप्राणेहयो सज्जनः ॥ २७ ॥
किं विद्याधिपतेर्विधातुरथ किं भर्गस्य कारणा क्वचि
रत्नेशाय महत्प्रयोजनमसत्यन्नीप्सते भूभुजः ॥
चन्द्रकायानकुञ्जराननपितुर्दिग्वाससः क्षुध्यतो
भस्मव्यालकपालभूषितवपोर्वृद्धोक्षगस्योन्मतेः ॥ २८ ॥
भूतप्रेतपिशाचवीरनिचयैरावेष्टितस्याविशु-
र्भिक्षाशाः शवदाहभूमिवसतेर्दैन्यप्रकृत्योऽस्थिरः ॥
रङ्कस्योरुकुटुम्बिनो धनिरसाशुष्का भवेत्किञ्चित्
पर्जन्यप्रिय एष एव विदितोऽस्मीशः क्षुधो दुःखवित् ॥ २९ ॥
तस्मात्तं स्तौमि शंभुं त्रिभुवनजनकं वृष्टिहेतोरिदानीं
मद्वाक्पीयूषसारश्रवणसमुदितो धूर्जटीप्रीतिर्यदा स्यात् ॥
गङ्गाशुभ्रप्रवाहोच्छलितसुललितैः प्लाव्यते विश्वमेतत्
दुर्भिक्षार्तीः कुतो वः कथयत जगतामार्तिहन्त्री तदैव ॥ ३० ॥
कुलेशानं सुललितगिरीन्दुस्थमनसो[1]...........
...........................................

1 अत्र मूलादर्शे द्वादश श्लोका लुप्ताः ।

आलोक्य तां भुवि गतां प्रसृतां विरूपां
स्रस्तांगकोमललतां हृतलब्धसंज्ञाम् ॥
हा हा हतास्मि किमहो मम मातृतुल्या
कस्मात्पतस्यपि तदाशु महीतलेऽस्मिन् ॥ ४७ ॥
हा हेति कृत्वा विललाप बाला स्नेहाच्च प्रोच्चैरसकृद्रुदन्ती
मातः स्वसर्हेति गतासि कुत्र हित्वाऽनुजां मामनुशोचमानाम् ॥ ४८ ॥
यावच्चिद्दहनं शवस्य सुहृदः कुर्वन्ति दाहादिकं
तावत्प्रागुजयदेवपण्डितवरो गेहं प्रविष्टोऽचिरात् ।
द्राक्खोचया विदितांगनामृतिरसौ म्लानेन्द्रियो निःश्वसन्
मूर्च्छामाप मुहुर्मुहुर्भुवि पतन् खिन्नमनो दीनधीः ॥ ४९ ॥
हा कीर्ते ! क गताऽसि हा प्रियतमे ! हा मानिनि ! क्वासि हा
कामिन्यम्बुजलोचने शशिमुखि ! क्वा[1]······
··· ··· ··· ··· ··· ··· ··· ··· ··· ··· ···
निर्निमित्तं कदाचित्त्वा कुपितासीत्पराङ्मुखी ।
त्वं चाटुवचनैः क्षीणानुनयं प्रोक्तवानिति॥ ५० ॥
नाभवत् सानुकूला सा यदा त्वं दुःखितस्तदा ।
प्रेम्णा च भक्तिवात्सल्यात् वियोगी कामपीडितः ।
संस्मृत्य सरस्वतीं तूर्णं प्रीतिसन्धानसिद्धये ।
विनीतः प्रेषयामास नम्रां गिरमुदीरयन् ॥ ५१ ॥
एतस्मिन्नन्तरे देवी शारदा शोकपारदा ।
आगत्य त्वरया साक्षात् दौत्यं चक्रे तयोर्मिथः ॥ ५२ ॥
पुनः कृष्णं पुना राधां गत्वा वाग्वादिनी मुदा ॥
वचोऽस्यान्योन्यनामयं प्रोवाच विनयान्विता ॥ ५३ ॥
राधाया दुरवस्थितिः प्रकटिता कृत्वा तयाग्रे हरेः
कृष्णस्य स्मर विह्वलत्वमुदितं तद्राधिकायाः पुरः ।
अन्योन्यं विरहाग्नितप्तवपुषोः प्रीत्यर्थमाहोस्विता-
न्यापद्वाक्यचयानि सन्धिविधये व्यापारिता भारती ॥ ५४ ॥
सा दीनाऽतिभयार्दिता विरहिणी त्वद्विप्रयुक्ताऽच्युत !
श्रीमन्नाथ ! हरे ! मुहुर्जपति ते नामानि वैक्लव्यतः ॥
राधायाः पुरतस्तु मामियमिति त्वं चारुशीले ! प्रिये !
कृष्णस्योक्तिमयो यदि शुभयतो दीप्ते पदे गीः स्थिता ॥ ५५ ॥
यादृशी विरहिणां दशा भवेत् तादृशी स्थितिरुदाहृता तयोः ॥
एत्य गत्य पुरतो मिथस्तयोर्दैन्यभाषणपुरःसरं पुनः ॥ ५६ ॥
जातिव्यक्तिगुणाभिधानसहजाभ्यासः स्वभावोत्तम-
व्यापारास्त्वथ लक्षणान्यभिहितान्याचारसारक्रिया ॥
स्त्रीपुंसोः कविभिर्यथाक्रममलंकारे यदुक्तं बुधै-
स्तत्सर्वं जयदेवपण्डितवरेणोक्तं समुद्देशतः ॥ ५७ ॥

---

1 अस्माग्रे पञ्चपत्रात्मको ग्रन्थो लुप्तः इति मूलादर्शपृष्ठांकतः श्लोकसंख्यादितश्चावगम्यते । मादर्शान्तरानुपलब्धेः······इति चिह्नानि तत्र विन्यस्तानि ।

शृंगारतिलकग्रन्थे शुंखियोऽलक्ष्म परकृतम् ।
प्रकाशितं हि तत्सर्वमत्रापि कविनाऽमुना ॥ ५८ ॥
कालिन्द्या विरहाग्नितप्तवपुषा किं गीतमित्थं प्रिये !
चार्वित्यादि हतोऽस्मि हैति बहुधा दैव ! त्वयाऽपत्रपम् ॥
नो लज्जस्यथ मां प्रभो ! कलनया विश्लेषयन् दुःखवित्
प्रायो निःकरुणा भवन्ति कृपणे त्रातुं समर्था अपि ॥५९॥
ईदृक्पर्यनुयोगपूर्वमसकृद्भंगैः सपेषच्छपा-
कारैर्वाक्यभरैश्च सत्कृतमनास्तुष्टस्त्रिलोकीपतिः ॥
तज्जायां प्रमृतामजीवयदसौ पद्मावतीं सत्वरीं
काशीशश्च चमत्कृतोऽस्य महती विष्णोः कृपा त्वीदृशी ॥ ६० ॥
कृपां चक्रे सम्यक् तदुपरि हरिगीतिमुदितो
दयालुर्भूतात्मा व्रजदयननामाक्षमरणात् ॥
स्वचरणा प्रोल्लासार्पणपदमुखनेतामसुदृशीं
सुरूपां सत्कान्तां कविनिकरकोटीरमणये ॥ ६१ ॥
पद्मावतीरमणजीवनमेतदुक्तं ग्रन्थप्रबन्धरचनासमयोचितं च ।
आख्यायिकां हि जयदेवकवीश्वरस्य संबन्धपूर्वकमिदं प्रकटीकृतं मे ॥ ६२ ॥
कथेयं यथा संश्रुता किंवदन्त्या निबद्धा मया श्लोकपद्यैः सुहृद्यैः ।
श्रुत्वा सा हृदयंगमाऽपथ्यैवेऽर्जां नमः पायितुमेनं चिरस्थादभानः ॥ ६३ ॥
सद्गीतगोविन्दमहाप्रबन्धपूर्वप्रसंगोऽभिहितो मयैषः ।
ग्रन्थस्य तात्पर्यमुदीर्य सम्यक् रहस्यमेतैरुपसंहरिष्ये ॥ ६४ ॥
तस्मै प्रसन्नो जगदीश्वरोऽसौ संदर्श्य चात्मानमचिन्त्यरूपम् ।
प्रदत्तवांस्तत्प्रियं ततोऽन्ते सायुज्यमुक्तिं स जगाम शान्तः ॥ ६५ ॥
पूर्वं पुरासीज्जयदेवनामा कवीश्वरस्तेन महाप्रबन्धम् ।
सद्गीतगोविन्दपराभिधानं अष्टाभिरिष्टाष्टपदीभिरत्र ॥ ६६ ॥
त्रिषु लोकेषु तथास्ति यद्गीतेन न लभ्यते ।
गानप्रियाः सुराः सर्वे भवन्ति वरदाः सदा ॥ ६७ ॥
जयदेवकवीन्द्रस्य हरिभक्तशिरोमणेः ।
मृतैवं जीविता कान्ता यथा पूर्वं मदालसा ॥ ६८ ॥
निरर्गलोऽयं हि हरेर्विलासः शृंगार उद्घाटित एव केवलः ।
प्रकल्पविन्यास कथाप्रसंगमाख्यायिकेयं स्वकपोलकल्पिता ॥ ६९ ॥
ग्रन्थस्य बीजं कथितं हि सम्यक् यथाश्रुतं पण्डितवक्त्रकोशात् ।
आद्यप्रसंगः कतिचित् पुराणैर्जगत्प्रतीताः कविभिः प्रणीताः ॥ ७० ॥
गोपाः सर्वे विपिनमगमन्नेकदा घोषमध्यात्
कृष्णं भीरुं चकितनयनं प्रावृषि प्रेक्ष्य तस्याम् ॥
राधां प्राह व्रजपतिरितो याह्युपादाय गे:
प्रागेनं त्वं शशिमुखि ! तथाऽचीकरत्साऽतिहृष्टा ॥ ७१ ॥

मेघैर्मेदुरमित्यादि ध्वान्तच्छन्ना निशाभ्रमात् ॥
व्रजं नयाशु गोविन्दं नन्दः प्राहेति राधिकाम् ॥ ७२ ॥
नीलाम्बुदैर्व्योम समीक्ष्य सम्यक् छन्नं तमालैर्विपिनं च घोरम् ॥
निशाभ्रमान्नन्द उवाच भीत्या राधामितस्त्वं व्रजमापयैनम् ॥ ७३ ॥

धृत्वा श्रीशं स्वहृदि कुचयोरन्तरं चञ्चलाक्षी
कुञ्जाम्यध्वन्यनुपदमुपालक्ष्य जाता त्वरार्ता ॥
चेतश्चक्रे झटिति हरिणा रन्तुमानंदपूर्णा
सार्धं रेमे रुचिरमलकुञ्जैर्भृशं तेन रामा ॥ ७४ ॥

सा सौभाग्यं सकलमतुलं मन्यमाना स्वकीयं
संप्रेक्ष्याहंकृतिपदमिताऽऽत्मानमज्ञानभावात् ॥
गर्वेणाच्छाद्य दुस्तरं क्लेशदुःखाभिभूता (?)
श्रीदीरम्भाद्धरिविरहिता एवेहा श्रीमुखीह ॥ ७५ ॥

संपूर्णेऽभिजलितरभसभरादुस्तये प्रेक्ष्य कृष्णा
जातेऽकस्मात्प्रणयकलहेऽमर्षचैतन्यमासीत् ॥
खेदेनैव स्खलितमनसो मौनमाश्रित्य शोका-
क्रान्तौ दूरेऽश्रुकलितदृशौ बाष्पकण्ठावभीक्ष्णम् ॥ ७६ ॥

तत्रान्योन्यं दैन्यमालक्ष्य चार्वी देवी दक्षा प्रोक्तसंदेशवल्ली ।
आविर्भूता प्रेम सन्धातुमाराद् यातायाति श्रीपतिं राधिकां च ॥ ७७ ॥

अष्टाध्या विहितो मिथो सुतरां सन्धिस्तयोः पूर्ववत्
प्रीतिः संघटिताऽथ सा स्वभवनं प्राप्ता प्रमोदान्विता ॥
इत्थं वर्णितमादरेण कविना सद्गीतगोविन्दके
ग्रन्थे श्रीजयदेवपण्डितवरेणाराध्य पद्मावतीम् ॥ ७८ ॥

तालप्रस्तारवद्याक्षरगमकभृता नादघोषोत्थरागा
भाषाभिर्भिन्नभिन्ना श्रुतिस्वरगुणग्रामरोहावरोहाः ।
आलापस्तेनपाठश्रवणविवरणा शुद्धयः सामवेदे
गीयन्ते विप्रवर्यैस्तदखिलमिह मया शक्यते नापि वक्तुम् ॥ ७९ ॥

गोपालेन महत्प्रसंगत उपोद्घातः कृतः कौतुकात्
चातुर्याच्च महाकवीन्द्रविहितस्यास्य प्रबंधस्य यः ॥
विद्वद्भ्योऽप्यवगम्य वृत्तकथया श्लोकैर्निबद्धोत्तमै-
रुक्तः सोऽस्तु मुदे सदैव जगतामानन्दहेतूदयः ॥ ८० ॥

संवद्विक्रमभूभुजः समयतः खाष्टेषुभूभिर्मिते
वर्षे बाणचतुःश्रुतीन्दुगणिते शाके खरे वत्सरे ॥
मासे श्रावणसंज्ञितेऽसितधवले पक्षे नवम्यां तिथौ
शीतांशोर्दिवसे व्यधीकरमिमां गोपालनामा कथाम् ॥ ८१ ॥

## सांकेतिकचिह्नानां परिचयः

| | चिह्नानि | ग्रन्थः | | कर्ता |
|---|---|---|---|---|
| RM. | रस० | रसमञ्जरी गी० गो० टीका | | शङ्करमिश्रः |
| RP. | र. प्रि. | रसिकप्रिया | ,, | कुम्भनृपतिः |
| S. | संजी० | संजीविनी | ,, | वनमालीभट्टः |
| P. | पद्० | पद्द्योतनिका | ,, | नारायणभट्टः |
| B. | बाल० | बालबोधिनी | ,, | कर्तृनामरहिता |
| D. | दीपि० | दीपिका | ,, | गोपालः |
| | का. प्र. | काव्यप्रकाशः | | |
| | औ. वि. | औचित्यविचारचर्चा | | |
| | शृं. ति. | शृङ्गारतिलकम् | | |
| | पा. | पाणिनीयं सूत्रम् | | |
| | मालती. | मालतीमाधवम् | | |
| | का. सू. | काव्यालंकारसूत्राणि | | |
| | का. | काव्यादर्शः | | |
| | ग. | गणसूत्रम् | | |
| | ना. शा. | नाट्यशास्त्रम् | | |

C. मुद्रितादर्शः Ed: Christianus Lassen, Proffessor Bonnensis P. E. BONNAE AD RHENUM 1836.

श्रीजयदेवकविविरचितं

# गीतगोविन्दकाव्यम्

## प्रथमः सर्गः

–सामोददामोदरः–

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे ! गृहं प्रापय ।

---

### रसिकप्रिया ।

कल्याणं कमलापतिर्दिशतु मे यः कौस्तुभे राधया
वीक्ष्य स्वं प्रतिबिम्बितं प्रतियुवत्येवेति शङ्काकुलम् ।
आक्षेपोन्मुखयापि मानपरया मन्दाननया कैतवं
तिर्यग्वलितकन्धरं वलितया सासूयमालोकितः ॥ १ ॥
सोऽव्यान्मामरविन्दनाभ उदयद्भक्ताभिषक्तालया
पद्मा पद्मविनिद्रमीलनविधिप्रावीण्यवक्षोद्वयोः ।
योगार्धैर्निमीलिताम्बुजवशात्संभोगभोगेतरा-
वस्थाद्वन्द्वभयानुभूतिजनितक्रीडासुखान्यन्वभूत् ॥ २ ॥
छित्वाम्भोऽर्धशिखातनुः स भगवांस्त्रिलोदितो संपदं
शम्भुर्विश्वजयश्रियः परवशीकारैकसत्कार्मणम् ।
यत्रैकाङ्गनवीनविभ्रमरसादेकाङ्गगुहेरता-
स्वादात्संभवदद्भुतैकपरमा जागर्ति हैमाद्रिजा ॥ ३ ॥
नत्वा मतङ्गभरतप्रमुखान्सुगीतसंगीतशास्त्रनिपुणाञ्जयदेववाचाम् ।
श्रीकुम्भकर्णनृपतिर्विवृतिं तनोति गानं निधाय सरसं रसिकप्रियाह्वाम् ॥ ४ ॥
श्रीवैजवापसगोत्रवर्यः श्रीबप्पनामा द्विजपुङ्गवोऽभूत् ।
हरप्रसादादपसादराज्यप्राज्योपभोगाय नृपोऽभवद्यः ॥ ५ ॥
यदन्वये निर्जिततर्कवादिपदः पदं तत्परमा व्यभाति (?) ।
श्रीमेदपाटे गुहिलप्रधाने यत्राभवन्भूपतयः प्रसूताः ॥ ६ ॥

---

### रसमञ्जरी ।

शंकरजगदम्बिकयोरङ्के पङ्केन खेलन्तम् ।
लम्बोदरमवलम्बे यं वेद न तत्त्वतो वेदः ॥ १ ॥
श्यामतामरसदामसुन्दरः पादपङ्कजनमत्पुरन्दरः ।
वर्धमानभवदावपावकः पातु कोऽपि वसुदेवशावकः ॥ २ ॥

इह खलु प्रारिप्सितसमाप्त्यर्थमेतत्काव्यप्रतिपाद्यं राधामाधवकेलिस्मरणरूपं मङ्गलमादावाचरति—मेघैरिति । राधामाधवयो रहःकेलय एकान्तक्रीडा जयन्ति

## रसिकप्रिया ।

तत्र क्रमाद्वंश्यपरम्पराख्ये हम्मीरनामा नृपतिर्बभूव ।
चन्द्रादिरत्नमकरक्रमेण रत्नाकरे कल्पतरुर्यथासीत् ॥ ७ ॥
दानानि संगतवनीपकमात्रपात्रमासाद्य यो दृदिरनन्तगुणानि कामम् ।
पञ्चाननो विषमघाटिषु यः प्रसिद्धश्चक्रे मृधान्यखिलशत्रुभयावहानि ॥ ८ ॥
तस्माद्बभूव्सतनयः प्रभूतनयः परायः सदयः शतायुः ।
श्रीक्षेत्रसिंहः प्रतिपक्षनागसिंहः पराहंकृतिमत्तसिंहः ॥ ९ ॥
ततोऽभवल्लक्ष उदीतकक्षविपक्षपक्षक्षयकारदक्षः ।
गयाविमोक्षाखिलधर्मरक्षः स्वक्षः कृतन्यक्षसमस्तलक्ष्यः ॥ १० ॥
तन्नन्दनो निर्जितपूर्वराजचारित्रसंपादितमेदिनीकः ।
श्रीमोकलेन्द्रः प्रणतारिमौलिमाणिक्यभाभासितपादपद्मः ॥ ११ ॥
श्रीकुम्भकर्णस्तनु क्षितीन्द्रः क्षितिं बिभर्तीन्द्रसमानसारः ।
शेषादिकेभ्यो धरणे धरित्र्या भरस्य विश्रामितविभ्रमः सन् ॥ १२ ॥
स श्रीशभक्तिप्रवणः प्रवीणः संगीतशास्त्रेऽखिलशास्त्रवेत्ता ।
श्रीगीतगोविन्दसुगीतकस्य नव्याकृतिं व्याकृतिमातनोति ॥ १३ ॥

जित्वा तु पृथिवीं कृत्वा तत्पतीन्करदायिनः ।
राधामाधवसारस्य रसिको रमतेऽधुना ॥ १४ ॥
प्रख्यातापि प्रबन्धो यो जयदेवेन धीमता ।
न तस्य विद्यते लक्ष्म सर्वाङ्गैरुपलक्षितम् ॥ १५ ॥
अतः स्वरादिभिः षड्भिरङ्गैः संयोज्य तथ्यताम् ।
नीत्वा गीत्वा तदा हित्वा कुटीकासु ( स्तु ) प्रवर्त्यते ॥ १६ ॥

शृङ्गारे सप्रपञ्चे रस इह रुचिरौचित्ययुक्तौ प्रकृष्टे-
ऽलंकारे नायिकाया गुणगणगणने वर्णने नायकस्य ।
गीतौ प्रीतौ च वृत्तौ लयमनु रसिकः कौतुकं चेत्तदेमा
दोषैर्मुक्ता गुणाढ्याः शृणुत नरपतेः कुम्भकर्णस्य वाचः ॥ १७ ॥

स किं बन्धः श्लाघ्यो व्रजति शिथिलीभावमसकृ-
द्विचारेणाक्षिप्तो ननु भवति टीकापि किमु सा ।
न या ग्रन्थग्रन्थिप्रकटनपटुः किं तु तदृशो
द्वयं युक्तं कर्तुं प्रभवतितरां कुम्भनृपतिः ॥ १८ ॥

शृङ्गारोत्तरसत्काव्यवैविध्ये मुदे मया ।
मेघैर्मेदुरमित्यादिपद्यं व्याक्रियतेऽधुना ॥ १९ ॥

गमकालापपेशलतया मध्यमग्रामे षाडवेन मध्यमग्रहेण मध्यमादिरागेण गीयते ।

गणपतिमभिमतफलदं वरदं प्रणिपत्य सिद्धिगुणविशदम् ।
गीतौ जयदेवकृते धातुं कुम्भो नृपस्तनुते ॥ २० ॥
अथ कुम्भकर्णनृपतिः स्तुत्वा नत्वा सरस्वतीं देवीम् ।
स्वरपाटतेनकानां करोति गुम्फं सुमानार्थम् ॥ २१ ॥

मेघैरिति ॥ जयन्ति सर्वोत्कर्षेण वर्तन्ते । सर्वोत्कृष्टत्वेन नमस्करणीयत्व-सूचकम् । तेन नमस्क्रिया काव्यमुखे द्योतितम् । आशीर्वा । कास्ताः ? रहः-

इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥ १ ॥

---

केलयः सुरतक्रीडाः । 'रहो गुह्ये रहो रते' इति । तासां विषयं निर्दिशति—क ? यमुनाकूले प्रत्यध्वकुञ्जद्रुमम् । अध्वनि कुञ्जद्रुमोऽध्वकुञ्जद्रुमः । अध्वकुञ्जद्रुमं प्रतीति प्रत्यध्वकुञ्जद्रुमम् । ननु चात्र नित्यसमासत्वाद्वाक्येन न भवितव्यम् । नैतदस्ति । प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञा विहिता । तद्योगे यथा स्यादित्येवमर्थः । तस्याश्च वाक्य एव प्रयोगो नान्यत्रेति वाक्यमपि स्यात् । 'अर्थमर्थं प्रति' इत्यादि भाष्यकारप्रयोगाच्च । कस्मिन्सति ? रह एकान्ते । एकान्तं कयोः ? राधामाधवयोः । अत्र राधाया जगद्गुरुपरिग्रहेण सकलमातृत्वेनाभ्यर्हितत्वादल्पाक्षरतरत्वाच्च पूर्वनिपातः । किंलक्षणयोः ? इत्थं वक्ष्यमाणप्रकारेण, कृष्णोक्तिरत्र नन्दनिदेशत इति, नन्दसमीपाच्चलितयोः ? तमेव प्रकारमाह—हे राधे ! तत्तस्माद्धेतोरिमं मल्लक्षणं जनं त्वमेव गृहं प्रापय । सामान्यनारीव्यावृत्त्या गृहिणीनिर्वर्त्यं संभोगादिकर्मणि समुदिता भवेत्यर्थः । अत्र 'गृह'शब्देन तात्स्थ्याद्गृहिण्युच्यते; 'गृह'शब्दच्छलेन तामेव पुरस्कृत्य वनविहारदर्शनात् । अत्र प्राप्नोतिरन्वयार्थे वर्तते । 'प्रजाभोद्य-युक्तिषु' इति चूडामणिः । त्वयैवाहं गृहिणीमान् स्यामिति यावत् । एवकारोऽन्ययोगव्यावृत्त्यर्थः । तस्मादिति किम् ? यतोऽयं मल्लक्षणो जनो भीरुः, भीरुरिति एभिर्भावहेतुभिः स्मराहतीः सोढुमसमर्थः । तानेव भावानाह—अम्बरमाकाशं मेघैर्मेदुरं सान्द्रस्निग्धं वर्तते । अपरं च,–तमालद्रुमैः श्यामा वनभुवो वर्तन्ते । अपरं च,–नक्तं रात्रिकालः । एवं देशकालवस्तुलक्षणा विभावाः सूचिताः । किमुक्तं भवति ? अत्र काव्ये शृङ्गाररसप्राधान्यात्तस्य मेघादयस्त्वयोऽप्युद्दीपनभावा उक्ता भवन्ति । राधाया आलम्बनविभावाः । भीरुरित्यस्यानुभावः । हर्षावेगशङ्कौत्सुक्यव्रीडाचपलतादयो व्यभिचारिणः । इत्थं कार्य-

---

सर्वोत्कर्षेण वर्तन्ते । किंभूतयोः ? इत्थमनेन प्रकारेण नन्दनिदेशतो नन्दाज्ञया चलितयोः प्रस्थितयोः । कीदृशो नन्दनिदेश इत्यत आह—त्वमेवेत्यादि । हे राधे ! तत्तस्मात्त्वमेवेमं कृष्णं गृहं प्रापय । अत्रैवकारः कोपोक्तौ । बाल्येऽयं त्वयैतावद्दूरमानीतस्तस्मात्त्वमेव गृहमपि प्रापयेत्येवाभिप्रायात् । कुतः ? यतोऽयं कृष्णो नक्तं रात्रौ भीरुः विद्युल्लाञ्छनशीलः । भयहेत्वन्तरमाह—मेघैरित्यादि । अम्बरमाकाशं मेघैर्मेदुरं स्निग्धम् । तथा च वनभुवः काननभूमयस्तमालद्रुमैस्तमालवृक्षैः श्यामाः । कुत्र जयन्तीत्यत आह—प्रत्यध्वेति ।

---

टिप्प०–1 ये हि स्वयोगेन परगतं रत्यादिभावं विशेषेण भावयन्ति नामोद्बोधनं कुर्वन्ति ते विभावाः । 2 उद्बुद्धकत्वं हि रसमतिशयेनोद्दीपयन्तो देशकालादय उद्दीपनविभावाः । यथा शृंगाररसे मेघवसन्तसमयादिवर्णनम् । 3 यमालम्ब्य प्रवृत्तानां रत्यादीनामुद्बोधनं भवति ते हि आलम्बनविभावाः, यथात्र शृङ्गारे माधवगता रती राधामालम्ब्योद्बोधिता भवतीति सात्र आलम्बनम् । विशेषस्तु शृङ्गारतिलके द्रष्टव्यः । 4 विभावैरुद्बोधितो रत्यादिहेतुकः स्वेदस्तम्भरोमाञ्चादिः बहिः स्फुटं प्रकाश्यते सोऽनुभावः । 5 ये च कुत्रचित्प्रकाशिताः कुत्रचन तिरोहिताः स्थायिना समं चरन्ति ते सहचारिणः, त एव च विशेषत आभिमुख्येन चरन्तस्त एव व्यभिचारिण इत्याख्यायन्ते ।

कारणसहकारिभी रतिस्थायिभावः सकलरससम्राट् समपद्यः संभोगाख्योऽभिलाषविरहेर्ष्यासूयाख्यस्रगो विप्रलम्भः शृङ्गारः साङ्गोपाङ्गः समुन्मीलितो भवति। तदुक्तम् (का. प्र. उ. ४)—'कारणान्यथ कार्याणि सहकारीणि यानि तु। रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥ विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः। व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः॥' तथा चाभाणि भरतेन—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः—' इति। एवमेतेन यथा श्रीजयदेवेन कविना रसमुख्ये स्थिरीकृते तदाशयमबुद्ध्वा कैश्चिद्व्याख्यातं तत्तावन्न विचक्षणपरीक्षाक्षममीक्षामहे। तथा हि—इत्थं नन्दनिदेशतो नन्दादेशाच्चलितयोः केल्यो जयन्ति। इत्थमिति किम्? राधा काचन गोपिका तस्या नन्देन संबोधनम्। हे राधे! इमं मम शिशुं रात्रौ भीरुं त्वमेव गृहं प्रापय, त्वय्येव मम विश्वास इति। तदा नायकस्य शिशुत्वेन परवशत्वं, तस्याश्च धात्रीत्वं नेदस्य दूतीकर्म, शृङ्गारविभावानां भयानकहेतुत्वं, कविनिरूपितरसस्यान्यथात्वं चापद्यते। तत्र तेषामायुष्मतां क उपालम्भः? यतः—'निर्देशो भाषणादेशसामीप्यार्थमजानतः। आदेश एव विश्रान्तमतेर्व्याख्या भवेन्न किम्?॥ लोके किं कूपमण्डूकः समुद्रमपि तत्समम्। न वेद वेदवादोऽयमिति श्रुतिभिया किल?॥' अथैवं नन्दादेशात्तु तथा ग्राम्यतायां शृङ्गारो विनाशितो भवति। यथाह—'अथ शृङ्गारपरता सुवर्णा सा तिरस्कृता। यतः कुलवधूवत्स चमत्काराय संभृता॥ मधुरे वदति प्रायः सूनौ रसमत्र सुधाम्। सा नाम ग्राम्यतापीडा क्वापि नेष्टा विपश्चितः॥ प्रयुक्तं कविना ह्यित्थं तदाशयमजानता। नन्दनिर्देशहारिण्याख्याता एकत्वमिष्यते॥ नायकत्वं यदाम्नातं हरेः काव्यकृता कवौ। तस्यां तस्मिन्निबनिक्षिप्ते गतिः का नाम तस्य ते?॥ यो गीतगोविन्द इति प्रबन्धो गोविन्दनेतारमनुप्रबद्धः। राधावशो तत्र कृतेऽर्भकत्वात्स गीतराधः कथमत्र न स्यात्?॥ प्रामाण्यं सुधियोऽवदन्कविगिरां धर्मोपदेशे बुधा यत्नो भवितुं मुदार्हति गुरोराज्ञा विचार्या न यत्। तथेदं तु विचारणीयमिह यो यस्याः करे दीयते रक्षार्थं स च कामयेत यदि तां तत्किंचिदत्रावधि॥ शृङ्गारोपक्रमे चात्र भयानकनिमित्तता। मेघाडम्बरतादेस्तन्महद्व्याख्यानकौशलम्॥ अन्यहेतुभिरन्यस्योत्पत्तिश्चेद्दृश्यते तदा। विस्मयस्थायिभावत्वादद्भुतोपस्थितिर्न किम्?॥ धात्रीयोगाच्च शृङ्गारो न हास्यो रहसीङ्गितैः। न भयानकता तस्माद्रसः कोऽत्रावतिष्ठताम्?। तस्मादत्र विभावानुभावसंचारिभिर्भवेत्। शृङ्गारो नन्दसामीप्यात्तयोश्चलितयोः स्वतः॥ यथा गुम्फानि नानात्वं भावान्तर-

---

यमुनायाः कूले प्रत्यध्वकुञ्जद्रुमम्। अध्वन्यध्वनि कुञ्जे कुञ्जे द्रुमे द्रुम इत्यर्थः। यद्वा,—अध्वनः कुञ्जान् द्रुमांश्चाभिक्रम्येत्यर्थः। न च 'नक्तं भीरुरयं त्वमेव तदिमं' इत्यत्र 'द्वितीयाटौस्स्वेनः' (पा० २।४।३४) इति सूत्रेणैनादेशः कथं न भवतीति वाच्यम्; अन्वादेशविषयत्वाभावात्। किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। किंचित्कार्यं विधातुमिति। अपूर्वं बोधयितु-

विभावतः । व्रजन्ति नाशेऽरसतां तथा भावास्त एव हि ॥ एवं मेघाद्योऽपि स्युः शृङ्गारे च भयानके । विभावाद्यविमुक्तेन भावकेन विभाविताः ॥' तस्मात्काव्याभिप्रायसूचितशृङ्गारपरत्वेनात्र कृतं व्याख्यानमेव व्याख्यमिति । अत्र 'मेघैः' इति बहुवचनेनाक्रममेव नवभिरप्यवस्थाभिराक्रमणाच्चेतसोऽन्यथावृत्तिः सूचिता । 'अम्बरम्' इति स्वच्छन्दविहारभङ्गकाङ्क्षां मा कृथा इति । 'वनभुवः' इति बहुवचनेन नानावस्थारतक्षमं प्रदेशबाहुल्यं द्योतितम् । 'नक्तम्' इति कालस्य स्वच्छन्द प्रच्छन्नकामुकयोग्यत्वमुक्तम् । 'माधव' शब्दः सत्यामपि लक्ष्म्यां तस्यामनुरागातिशयद्योतनार्थः । 'यमुनाकूल' इति रतिश्रमनिरासमाधनशिशिरसमीरसद्भावार्थम् । 'अयम्' इति रत्युद्रेकाकुलतया स्वाङ्गेष्वप्यौदासीन्यद्योतनाय । यथा श्रीहर्षमिश्रस्य हंसेन स्वात्मनि निराशीभूतेन 'गतिलयोरेकतरस्तमर्दयन्' (नैषध. २।१२५) इत्याद्यभाणि । यथा वा श्रीकालिदासस्य ईश्वरेण तथावगणिते आत्मन्यनास्थापरत्वेन 'अयं जनः प्रष्टुमनास्तपोधने' (कुमार. ५।४०) इत्याद्यवादि । अत्र वर्णवृत्त्यनुप्रासः शब्दालंकारः । पूर्वार्धे समुच्चयोऽर्थालंकारः । तल्लक्षणं तु (का. प्र. १०।११६) 'तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् । समुच्चयोऽसौ' । यथा—'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे' (शार्ङ्ग. प.) इत्यादि । उत्तरार्धे चाशीः । तद्योजनं च—सर्वोत्कृष्टास्ताः केलयो विलासकलासु कुतूहलिनः पान्तु । अत्र शब्दार्थालंकारयोरर्थालंकारयोश्च संसृष्टिः—'सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः' (का. प्र. १०।१३९) इति । अत्र 'अयम्' इत्यात्मन्यौदासीन्यद्योतकं सर्वनामपदं तिलकायमानं बिभ्राणा सूक्तिः समुचितपरभागातिशयेन रुचिरतामावहन्ती शरदिन्दुसुन्दरवदनेव श्यामतिलकेन श्यामेव शुभविशेषकेण विभूषिता अर्थौचित्यचमत्कारकारिणी सकलकविकुलललामभूता कामपि विच्छित्तिमातनोति । यथा (सा. द. ) 'भग्नानि द्विषतां कुलानि समरे त्वत्खड्गधाराजले नाथास्मिन्निति वन्दिवाचि बहुशो देव! श्रुतायां पुरा । मुग्धा गुर्जरभूमिपालमहिषी प्रत्याशया पाथसः कान्तारे चकिता विमुञ्चति मुहुः पत्युः कृपाणे दृशौ ॥' अत्र 'मुग्धा'पदं कैश्चित्काव्यलिङ्गमित्यलंकारोऽभाणि । तन्न; तल्लक्षणाभावात् ॥ लक्षणं तु—'तदेवोक्तं काव्यलिङ्गं हेतोर्वाक्यपदार्थता' (का. प्र. १०।११४) इति । नात्र 'वपुःप्रादुर्भावात्—' इतिवद्धेतोर्वाक्यार्थता । नापि 'प्रणयिसखीसलीलपरिहासरसाधिगतैः' (मालती. ५।२१) इतिवदनेकपदार्थता । नापि 'भस्मोद्धूलन भद्रमस्तु भवते' इतिवद्धेतोरेकपदार्थता । तस्य गतिं त एव प्रष्टव्याः । एवमिह सुनिपुणमपि निरूप्यमाणोऽलंकृतिगुणो न विच्छित्तिचमत्कृतिमातनोति ॥ तर्हि काव्यचारुतानिबन्धनशृङ्गाररसस्वीकारेण

---

सोऽर्थः । नीरूपस्य अनुवाच्यत्वेन विवक्षितत्वात् । 'अम्बरं व्योम्नि वाससि' इत्यमरः । 'दोषा नक्तं च रजनी' इति च । 'त्रस्नौ भीरुभीरुकभीलुकाः' इत्यपि ।

---

टिप्प०—1 एतच्चिह्नाङ्किताः सर्वेऽपि श्लोका ग्रन्थान्ते संपूर्णतयोट्टङ्किता द्रष्टव्याः ।

वाग्देवताचरितचित्रितचित्तसद्मा
पद्मावतीचरणचारणचक्रवर्ती ।

---

रसवदलंकारत्वेऽपि नाशङ्कनीयम् । यतोऽत्र शृङ्गारस्य प्राधान्यान्नालंकारत्वं येनालंकारता स्यात् । यदाह—'प्रधाने यत्र वाक्यार्थे यत्राङ्गानि रसादयः । काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः' ॥ प्रकृते तु शृङ्गारस्य प्राधान्यमपि प्रतिपन्नम् । अत्र वैदर्भी रीतिः (का. सू. १।२।११) 'अस्पृष्टा दोषमात्राभिरनल्पगुणगुम्फिता । विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥' शृङ्गाराख्यानसूचिका कौशिकी वृत्तिः । संभाविता गीतिः । तस्याश्च लक्षणम् 'संभाविता भूरिगुर्वङ्किता वार्तिके पथि' । मध्यो लयः । प्रसादो गुणः । अनुकूलो नायकः । स्वाधीनपतिका नायिका ॥ पूर्वार्धेऽभिलाषलक्षणो विप्रलम्भः । अपरार्धे संभोगश्च शृङ्गारः । एवं 'केलय' इति कथाबीजलक्षणं वस्त्वपि निर्दिष्टं भवति ॥ एवं च त्रिविधमपि काव्यमुखं महाकविना समुन्मीलितं भवति ॥ यदत्र कश्चित्संभोगशृङ्गारलक्षणं वस्त्ववदद्, स एव चास्य विवेचनक्षमः ॥ शार्दूलविक्रीडितं छन्दः । यथा—'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' ॥ १ ॥ कविरिदानीं सकलकलिकलुषहारिहरिचरितानुसरणसरसतापादनेन तद्गानानुगृह्णन्समुचितेष्टदेवताभावनाभावितान्तःकरणस्तत्फलभूतं शृङ्गारोत्तरं प्रबन्धं कर्तुं प्रतिजानीते—वाग्देवतेति । जयदेवकविरेतं गीतगोविन्दाभिधं प्रबन्धं करोति । अत्र जगदानन्दकन्दलीकन्दगोविन्दपदारविन्दमकरन्दामोदमधुरतरास्वादमधुकरमधुरचेता भागवतप्रधानः परमकारुणिको जयदेवकविर्देवदेवे भगवत्यावेष्टचित्तः कलिकलुषान्तःकरणत्वेनेतस्ततः परिविक्षिप्तान् सुखेन तदभिमुखीकरणाय कलावतीकेलिकुतूहलिनं हलिसोदरं निरूपयितुं निर्गुणं निरूपयिषुः 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥' इति दर्शयितुं धर्मार्थकामाः स्वनुष्ठिता मोक्षायेति मोक्षोपायतया धर्मार्थयोरुपरि वर्तमानस्य पुरुषार्थविशेषस्य निदानत्वेन पितॄणामानृण्यहेतुभूता-

---

'निदेशः शासनं च सः' इति च । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इति च । 'रहश्चोपांशु चालिङ्गे एकान्तार्थे रहोऽव्ययम्' ॥ १ ॥ अत्र रसिकमुकुलसाधारणप्रवृत्त्यर्थं सकलजनमनोहरं शृङ्गाररसगर्भं भगवत्केलिवर्णनरूपं काव्यं क्रियत इत्यभिधेयं प्रतिजानीते—वाग्देवतेति । जयदेवकविरेतं गीतगोविन्दाख्यं प्रबन्धं करोति । कीदृशम् ? श्रीः लक्ष्मी राधारूपेणावतीर्णा, वासुदेवः कृष्णस्तयो रतिकेलिकथया सुरतक्रीडानुवर्णनेन समेतं युक्तम् । ननु वासुदेवकेलिवर्णनं बहुषु ग्रन्थेषु वर्तत इति किमनेनेत्यत आह—वाग्देवतेति । वाक्स्वरूपा या देवता सरस्वती तस्याश्चरितेन प्रसादमाधुर्यादिगुणसंपन्नलोकोत्तरकाव्यरचनारूपेण चित्रितं चित्रमाश्चर्यं तद्युक्तं कृतं चित्तरूपं सद्म गृहं यस्य सः । अत्र सकलजनाह्लादकारित्वेन नानावर्णमयत्वेन वाग्देवताचरितस्य चित्रत्वेन निरूपणम् । चित्तं च

श्रीवासुदेवरतिकेलिकथासमेत-
मेतं करोति जयदेवकविः प्रबन्धम् ॥ २ ॥

पत्न्योत्पत्तिद्वारेण नितम्बिनीमूलत्वमुपदर्शयितुं तद्विशिष्टं वासुदेवं विवर्ण-यिषुरिमं प्रबन्धमुपनिबध्नाति । तथा चोक्तमभियुक्तैः—'संसारे यदुदेति किंचन फलं तत्कृष्णकृत्याख्यं नृणां किं त्वेतत्सुखसाध्यमस्ति युगलं सम्यग्यदि ज्ञायते । तल्लक्ष्मीसमुपार्जनं पुलकिनां रक्तस्वरं गायतां तत्कान्तारति-निस्तरङ्गमनसामुत्पद्यते नन्दनः ॥' इति । कामशास्त्रेऽपि—'किं स्यात्परत्रे-त्याशङ्का यस्मिन्कार्ये न जायते । न चार्थघ्नं सुखं चेति शिष्टास्तस्मिन्व्य-वस्थिता ॥' इति । परस्त्रीगतोऽप्ययं रस उपनिबध्यमानो न पातकाय । यतः—'कान्तासंमिततया' इत्युपदेशप्रामाण्यात् । यथा—एवं श्रीवासुदेव-रतिकेलिकथासमेतम् । श्रीश्च वासुदेवश्च तौ; तयो रतिकेलिकथासमेतम् । अत्र 'श्रीनामलाञ्छितं सर्वं 'श्री'रिति 'श्री'शब्देन राधाभिधीयते । अथवा श्रीः शोभा लक्ष्मीर्वा तद्युतो वासुदेवस्य । तदनुचि पूर्वपदे 'माधव'शब्देन रतिकेलीति सुरतक्रीडाकथनेन वा । रत्या शृङ्गाररसस्थायिभावेनानुरागेण वा, केल्यः कथाः परस्परसंकथनानि तत्समेतम् । अथ कविरात्मनो विशेषण-द्वारेण सरस्वतीचरणकिंकरत्वं, अनु च प्रबन्धस्य पद्मावतीदेवतासमाराधन-फलत्वमाह—वाग्देवतेति । वाग्देवताचरितेन चित्रितं संजातचित्रं चित्तसद्म यस्य स तथा । सरस्वत्यनुसरणपरहृदय इत्यर्थः । अपरं च,—लक्ष्मीचरणसेवकाग्रणीः । पद्मं करेऽस्ति यस्याः सा पद्मावती लक्ष्मीः । 'शरादीनां च' (पा. ६।३।१२०) इति दीर्घः । अथ पद्मावती अष्टाक्षरमन्त्राधिदैवतं तस्याश्चरणचारणेन परिचर्याविशेषेण चक्रवर्ती । कविराज इत्यर्थः । 'पद्मावती तस्य कलत्रमेके वदन्ति यत्तत्र विचारचारु ।

विचित्रकविताख्यमहाधननिधानत्वेन कृष्णकेलिवर्णनादिना संसारतापसंतप्तक-विजनविश्रामस्थानत्वेन सघतया निरूपितम् । अपरमपि एवं विविधयुक्तिभि-रालेख्यैर्मण्डितं भवतीति ध्वनिः । तथा च यद्यपि कृष्णकेलिवर्णनमन्यत्रापि ग्रन्थे वर्तते तथापि पूर्वैर्वर्णितमपि लोकोत्तरापूर्वसत्काव्यरचनानिबद्धमति-चमत्कारकारि भविष्यति । यथा पुरुषैरभिधीयमान एवार्थोऽन्येषां वाग्भङ्गीवचन-भङ्गिमारूढोऽन्यथैव श्रोत्रचमत्कारं करोतीति नानर्थको मे प्रयास इति भावः । पुनः कीदृशः कविः? पद्मावती नाम जयदेवपत्नी तस्याश्चरणयोर्यच्चारणं संचारणम्; नर्तनमिति यावत् । तेन चक्रवर्ती नटसार्वभौम इत्यर्थः । एतेन कवेः कृष्णभक्त्याधिक्यं शृङ्गारित्वं च ध्वनितम् । तेन सरसकाव्यकरणेऽधिकारः सूचितः । तदुक्तम्—'शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् । स एव यत्राशृङ्गारी सर्वं विरसतां व्रजेत् ॥' इति । केचित्तु पद्मा इति संज्ञां विधत्ते ।

पाठा०—1 'कैर्न' A.

टिप्प०—1 शृंगारैकप्रधानो यो गीतताळादिसंयुतः । अभिसारार्थनिपुणः प्रबन्धः स प्रकीर्तितः' इति भोजः—इति संजीविनी ।

यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम् ।
मधुरकोमलकान्तपदावलीं शृणु तदा जयदेवसरस्वतीम् ॥ ३ ॥

---

यतः सदाचारपरम्परैषा शुद्धन्ति तत्राम न नाम सन्तः ॥ कर्मादिसद्दैवत-संप्रयोगे तत्कीर्तनं किं न विशेषगर्हम् ? । रहो विहाय क्व च नापि दृष्टं सतां स्वकान्ताप्रणयादिकं तु ॥' अतस्तत्राप्यपेक्षा । एवं यद्यप्यस्ति तर्हि तथापि महतामिहालौकिकचमत्कारि चरितं किंचिदीक्ष्यते—'तथा हि सत्यभामाग्रे ननर्त नरकान्तकृत् । देहार्धे च धराधरेशमामीसो योगिवरोऽपि सन् ॥ अथवा भक्तियोगस्य स्वभावः कोऽप्यनीदृशः । यतस्तद्योगयुक्ता हि गणयन्ति न लौकिकम् ॥ अथात्मा जायते यस्यां सा जायेति श्रुतीरणात् । तत्स्वरूपपरस्वात्मा भक्तिर्या तया सह ॥ तथा हि धर्मकार्याणि न सन्त्यत्र तया विना । सर्वेषु धर्मकार्येषु पत्नीयुक्ता दक्षिणाङ्गना ॥ किंतु सा भक्तिरत्रोक्ता योपचारेण वर्जिता । तां विनाऽतोऽनुरज्यन्ति सन्तः स्वेष्टदैवते ॥ शृङ्गारित्वादथ स्वीयां जायां नर्तयतीह सः । परार्थनिष्ठबुद्धीनां न हि लोकव्यतिक्रमः ॥ लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् । तत्र लोकस्य मुख्यत्वाद्युक्तिर्नान्यथा भवेत् ॥ अतः पद्मावती तस्य कलत्रमिति नान्यथा । परमाभागवतस्यास्य जयदेवस्य युज्यते ॥ लोकातीतचरित्रस्य कौतुकस्य पुनः सदा । स्वजायानर्तनं युक्तमिति युक्ततरं वचः ॥' अत्र चित्तमधुमनोरभेदारोपाद्रूपकालंकारः, अनुप्रासश्च । 'उक्ता वसन्ततिलका तभजा जगौ गः' ॥ ओजो गुणः । गौडीया रीतिः । भारती वृत्तिः । भूरिगुरुत्वात्संभाविता गीतिः ॥ अत्र वसुभिर्दीयत इति तदपत्याभिधानेन प्राक्पितृधनस्य केलिकरणमुचितमिति अम्लानप्रतिभाप्रकर्षोत्प्रेक्षितेन 'वासुदेव'पदेन सकलप्रबन्धस्यापि पीयूषवर्षेणेव समुचितार्थविशेषेण प्रबन्धः स्फुरदिव चमत्कारकारितामापद्यते । तथा चोक्तम्—'उचितार्थविशेषेण प्रबन्धार्थः प्रकाशते । गुणप्रभावभव्येन विभवेनेव सज्जनः ॥' यथा—'जातं वंशे भुवनविदिते पुष्करावर्तकानाम्–'(मेघ. पू. ६) इत्यत्राचेतनस्य चेतनाध्यारोपेण मेघस्य दूत्ययोग्यताभिधानाय प्रथितपुष्करावर्तकवंशत्वायुपन्यस्तम् ॥ २ ॥ कविरिदानीं स्वप्रबन्धस्य प्रयोजनमाविष्करोति—यदीति । हे श्रोतृनित्यध्याहार्यम् । तदा तर्हि जयदेवसरस्वतीं

---

पद्मावती लक्ष्मीस्तस्याश्चरणयोर्विषयभूतश्चारणचक्रवर्ती नटसार्वभौमः । नृत्यादिना सदा लक्ष्म्याराधनपर इत्यर्थः । एतेन दारिद्र्यराहित्यं सूचितम् । दरिद्रेण हि शृङ्गारादिरसो न ज्ञायत इति भावः । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' इति च । 'चारणास्तु कुशीलवाः' इत्यपि ॥ २ ॥ संप्रति प्रेक्षावत्प्रवृत्त्यर्थमितरकाव्यापेक्षया स्वकाव्यस्योत्कर्षं कथयन्नेव प्रकृतकाव्यस्याधिकारिप्रयोजनमाह—यदीति । हे सज्जनाः ! यदि हरिस्मरणे कृष्णानुचिन्तने मनः सरसं सानुरागम् । यदि विलासकलासु विलासः स्त्रीणां

वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः।

---

प्रबन्धरूपां वाणीं शृणु। किंलक्षणाम्? मधुरकोमलकान्तपदावलीम्। मधुरा कोमला कान्ता पदानामावलिर्यस्यां सा। एतेन माधुर्यौजःप्रसादाद्या दशापि गुणा उक्ता भवन्ति। तदेति किम्? यदि हरिस्मरणे मनः सरसं एकाग्रं सरागं वर्तते। अपरं च,—यदि विलासकलासु कुतूहलम्। विलासिनां शृङ्गारिणां कलास्तासु। 'विलासो गमनादिः स्याच्चेष्टा श्लिष्टाङ्गया कृता' इति। एतेनास्य प्रबन्धस्य प्रयोजनाभिधेयसंबन्धाधिकारिण उक्ता भवन्ति। विलासकलाशिक्षा अवान्तरप्रयोजनम्। हरिस्मरणं परमं प्रयोजनम्। साध्यसाधकलक्षणः संबन्धः। वैष्णवा अधिकारिणः। दीपकमलंकारः। द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ'। पाञ्चाली रीतिः। कौशिकी वृत्तिः॥ अत्र मधुरकोमलकान्तपदावलीत्यादिपदैर्विलासकलासु कुतूहलमौचित्योद्भावनेन शृङ्गाररसस्वरूपानुरूपो वाक्यार्थ उचितो भवति। तथा चोक्तम् (औ. १२) 'औचित्यरचितं वाक्यं सततं संमतं सताम्। त्यागोदग्रमिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम्' ॥ ३ ॥ इदानीं कविः कविगणनायां परैरपि कविभिरहं परिगणित इति स्वप्रशंसार्थं क्षेपकमपि तत्कृतं श्लोकं स्वप्रबन्धस्य कुर्वन्नाह—वाच इति।

---

हावविशेषलास्यसंबन्धिनीषु कलासु कुतूहलं कौतुकं तदा जयदेवस्य कवेः सरस्वतीं शृणु। कीदृशीम्? मधुरकोमलकान्तपदावलीम्। मधुरत्वं द्विविधं—शब्दाश्रितमर्थाश्रितं च। तत्र शब्दमधुरत्वं पृथक्पदत्वं; अर्थमधुरत्वं चोक्तिवैचित्र्यं तद्युक्ता मधुरा। तथा कोमलत्वमपि द्विविधम्। तत्र शब्दकोमलत्वं बन्धस्यापरुषत्वम्। अर्थकोमलत्वं परुषेऽप्यर्थेऽपरुषत्वं तदुभययुक्ता कोमला। कान्तत्वमपि द्विविधम्। तत्र शब्दगतमुज्ज्वलबन्धविशेषाद्विना मनःश्रोत्रप्रीतिप्रदत्वं, अर्थगतं च दीप्तरसत्वं तदुभययुक्ता कान्ता रमणीया एतादृशी पदावली पदपरम्परा यत्र तादृशीम्। 'शृङ्गारादौ रसे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः। विलासलक्षणं दशरूपके (२।३८)—'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियाक्षिषु'। 'कला चन्द्रकलायां स्यात्कौशलात्' इति कोषः। शब्दमाधुर्यादिलक्षणानि तु वामनेन लिखितानि 'बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः। अनेनैव पदन्यासः कामं धारामधुच्युतः॥ बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम्। एतेन वर्जिता वाचो रूक्षत्वान्न श्रुतिक्षमाः॥ औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविपश्चितः। पुराणचित्रस्थानीयं तेन वन्ध्यं कवेर्वचः[2]॥' (का. सू. ३।१।२५) इति। अर्थमधुरत्वादिलक्षणं तु वामने। तथा च तत्सूत्राणि (३।२।११,१२,१५) 'उक्तिवैचित्र्यं माधुर्यं' 'अपारुष्यं सौकुमार्यं' 'परुषेऽर्थेऽप्यपारुष्यम्। यथा मृते यशःशेष इत्यर्थः'। 'दीप्तरसत्वं कान्तत्वम्' इति ॥ ३ ॥ तद्गुणविशिष्टापि सरस्वती लक्ष्मणसेनमहाराजसभासु महाकवीनामुमापतिधरादीनामस्ति सा किं श्रोतॄणां न सुखावहेत्यत आह—वाच इति। उमापतिधरनामा लक्ष्मण-

---

पाठा०—१ 'दुरूहद्रुते' B. २ 'कवेर्यशः' A.

शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन-[1]
स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी[2] कविक्ष्मापतिः[3] ॥४॥

## अष्टपदी १

### मालवगौडरागेण रूपकतालेन गीयते ।

प्रलयपयोधिजले धृतवानसि वेदम्
विहितवहित्रचरित्रमखेदम् ।

---

तानेव परिगणितान्कवीन्स्वस्वगुणेनोपश्लोकितानाह—उमापतिधरनामा कविः वाचो वाणीः पल्लवयति विस्तारयति । साकूतैर्विशेषणैर्गद्यादिप्रबन्धे चतुरः । अपरं च,-गिरां वाचां संदर्भशुद्धिं गुम्फवैशद्यं जयदेव एव जानीते । शरणसंज्ञः कविः दुरूहद्रुतेः श्लाघ्यो दुर्विचारपदपदार्थज्ञानात्मकस्य । शृङ्गारप्रधाननिर्दोषार्थनिर्माणैराचार्यगोवर्धनस्पर्धी कोऽपि न । एतेन तस्य सर्वाधिक्यमुक्तं भवति ॥ अपरं च,-श्रुतिधरनामा कविर्विश्रुतो विख्यातः; स तु तस्य गुणैरेव प्रसिद्धः । अपरं च,-धोयीनामा कविः कविक्ष्मापतिः । कविराज इत्यर्थः । धोयीति तस्य नाम देशरूढ्या व्युत्पन्नं प्रातिपदिकम् । इति षट् पण्डितास्तस्य राज्ञो लक्ष्मणसेनस्य प्रसिद्धा इति रूढिः । शार्दूलविक्रीडितं छन्दः । समुच्चयोऽलंकारः ॥ ४ ॥ इदानीं केलिं विवर्णयिषुर्नायकस्य वर्णनेन तद्गुणाकर्णनप्रवीणाञ्छ्रोतॄन्विधातुं तदवान्तरकेलीरपि वर्णयितुं श्रीकृष्णं नायकं दशभिरवतारैस्तास्ताः केलीः कुर्वाणमुपश्लोकयति ॥ आदितालेन गीयते । लघ्वादितालः । मालवरागेण—प्रलयेति । हे हरे! धृत-

---

सेनामाख्यो वाचः पल्लवयति विस्तारयति । तथा चोमापतिधरस्य वाङ्माधुर्यशून्यं शब्दार्थगुणशून्यं सविस्तरमधमकाव्यं न सहृदयहृदयाह्लादजनकमिति भावः । शरणनामा कविर्दुरूहस्य काव्यस्य शीघ्ररचने श्लाघ्यः स्तुत्यः । तथा च शरणकवेरपि काव्यं गूढार्थत्वादिदोषयुक्तं प्रसादादिगुणरहितं चेति तदपि न विदग्धमनोविनोदास्पदमिति भावः । तथा शृङ्गारोत्तरेति शृङ्गाररस एवोत्तरः श्रेष्ठो यत्र, शृङ्गारेणोत्तरं प्रधानं वा यत्सत्प्रमेयमुत्तमं वस्तु तस्य रचनैः कवितायां प्रबन्धैराचार्यगोवर्धनस्पर्धी गोवर्धनाचार्येण सह स्पर्धावान्कोऽपि न विश्रुतो न ख्यातः । अत्र शृङ्गारेत्यादिना शृङ्गाररसप्रधानकाव्यरचनायामेव तस्य सामर्थ्यम् । रसान्तरवर्णने तु सोऽप्यप्रौढ एवेति तत्काव्ये वर्णनीयार्थस्य शुद्धत्वेऽपि माधुर्यगुणसंवलपदरचनायां सोऽप्यशक्तश्चेति ध्वनितम् । इतरविद्याध्ययनादिनाचार्यत्वं सत्काव्यरचनायामप्रयोजकमिति सोपहासमुक्तमाचार्येति । तथा च स न सत्कविर्नापि सत्कविहृदयं तस्येति भावः । धोयी कविक्ष्मापतिः धोयीनामा

---

पाठा०—१ 'सत्प्रमेयवचनै' C. २ 'धोई' P. ३ 'कविः' S.

टिप्प०—1 तल्लक्षणं यथा—'नितम्बिनीचुम्बितवक्त्रपद्मः शुकद्युतिः कुण्डलवान् प्रमत्तः । संगीतशालां प्रविशन्प्रदोषे मालाधरो मालवरागराजः ॥'—इति दीपिका ।

केशव धृतमीनशरीर
जय जगदीश हरे ॥ ध्रुवपदम् ॥ १ ॥

---

मीनशरीर ! केशव ! जगदीश ! असीति । त्वं अखेदं विहितवहित्रचरित्रं यथा स्यात्तथा प्रलयपयोधिजले कल्पान्तसागरवारिणि वेदं धृतवान् । अतो जय ॥ अत्र 'जय'शब्देन सर्वोत्कृष्टत्वम् । तेन सर्वदाऽसाधारण्येन जगत्पाहीति योजना । एवं सर्वत्रासीति तिङन्तप्रतिरूपकं पदं युष्मदर्थेऽव्ययम् । अखेदं । अनु च । विहितवहित्रचरित्रमित्युभयमपि साधारणक्रियाविशेषणम् । तेन पोतचेष्टितमङ्गीकृत्यापि मनागप्यायासं नाप्तवानित्यर्थः । इति प्रथमं पदम् । केशव हरे जगदीश इति संबोधनत्रयमादरातिशयद्योतनार्थम् । अत्र 'केशव धृतमीनशरीर जय जगदीश हरे' इति पाठः ॥ इति ध्रुवपदम् ॥ गानवेलायां केशव केशव इति द्विरुक्तिः ॥ अत्रार्धमागधी रीतिः ॥ अत्र केशवस्य केवलशब्दवाच्यत्वं हरिशब्दसहितकेशवशब्दवाच्यत्वं इति व्याख्यानम् । तत्पाठमात्रमप्यजानतां प्रमादेन क्रियाविशेषणानां कर्मसंज्ञा नपुंसकता च । 'धृतमीनशरीर' इति मत्स्यावतारः । अत्रोपमातिशयोक्ती अलंकारौ । उत्साहस्थायिभावो वीरो रसः । दशस्वपि पदेषु धीरललितो नायकः ॥ १ ॥ अथ कूर्मः । केशवे-

---

कविराजः । श्रुतिधरः श्रुतिः श्रवणं तन्मात्रादेव ग्रन्थग्राही । तस्योच्चारितमात्रग्राहित्वेनैव न सत्कवितायां कौशल्यमिति भावः । महाहंकारकथनाय दाशोपना । तथाऽहंकारादेव स्वस्य कविराजपदवीमानीतवान् । सत्कविमध्ये तु तस्य गणनापि नेति भावः । गिरां वचसां संदर्भशुद्धिं गुणालंकारसंपन्नग्रन्थरचनाविशेषं जयदेव एव जानीते, नान्यः । यतोऽन्यकाव्यश्रवणे तथा न संतोषो यथा जयदेवकविताश्रवणेनेत्येतदेव श्रोतव्यमिति भावः । 'पल्लवः किसलये पिङ्गे विटपे विस्तरे बले' इति विश्वः । 'लघु क्षिप्रमरं द्रुतम्' । 'उत्तरं प्रतिवाक्ये स्यादूर्ध्वे दिव्ये भवेऽन्यवत्' इति च ॥ ४ ॥ भक्तजनमनोरथपूरणाय भगवतः सदावतारपरिग्रह इहीहापि मम मनोऽभिलषिते भगवत्केलिवर्णनरूपे कर्मणि, संभावितबहुमायूहनिराकरणं स एव करिष्यतीत्याशयेन भगवतोऽवताराणामसंख्यत्वेऽपि प्रधानतया दशावतारपुरस्कारेणैव कृष्णस्तुतिं करिष्यतीत्यादौ मीनरूपं स्तौति— प्रलयेति । गीतस्यास्य मालवरागः । रूपकतालः । 'ताललक्षणं रूपके स्यात्' इति संगीतरत्नाकरः । गीतार्थस्तु—हे केशव ! जय सर्वोत्कर्षेण वर्तस्व । ननु मे सर्वोत्कर्षेण वर्तने कुतः सामर्थ्यमित्यत आह—जगदीशेति । जगतां चतुर्दशभुवनानामीशः प्रभुः । तथा च चतुर्दशभुवननाथस्य कथं न सामर्थ्यमिति भावः । तत्र हेत्वन्तरमाह—हे हरे इति । हरति भक्तानां क्लेशमिति हरिस्तादृश ! पुनः कीदृश ? धृतं परिगृहीतं स्वेच्छया मीनशरीरं येन तादृश । एतद्ध्रुवपदं प्रतिपदमनुवर्तमानम् । तदुक्तम् 'ध्रुवत्वाच्च ध्रुवो ज्ञेयः' इति । अत्र यद्यपि

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे
धरणिधरणकिणचक्रगरिष्ठे ।
केशव धृतकच्छपरूप
जय जगदीश हरे ॥ २ ॥

वसति दशनशिखरे धरणी तव लग्ना
शशिनि कलङ्ककलेव निमग्ना ।
केशव धृतशूकररूप
जय जगदीश हरे ॥ ३ ॥

---

त्यादि ध्रुवपदं पूर्ववत् । 'धृतकच्छपरूप' इति कूर्मावतारकथनं विशेषः ॥ तवेति । तवातिविपुलतरे विशाले अतिक्रान्तं विपुलतरं तस्मिंश्च धरणीधरणेन हेतुना जातं यत्किणचक्रं तेन गरिष्ठे गौरवयुक्ते पृष्ठे क्षितिस्तिष्ठति इति भव-प्रवाहस्यानादित्वादनेकवारं धरणीधरणे चिह्नबहुत्वम् । इति द्वितीयपद्यम् ॥२॥ अथ वराहः । वसतीति । धृतशूकररूपेति ध्रुवे विशेषः । धरणी पृथ्वी तव दशनशिखरे दंष्ट्राग्रभागे लग्ना संसक्ता वसति । केव ? शशिनि चन्द्रमसि मग्ना

---

कश्चित्तनुसंधारणमात्रमेवानित्यं ततोऽपि तिर्यग्योनिमीनादिशरीरमयं किमिति भाव-मित्यत आह—प्रलयेति । त्वं प्रलयपयोधिजले प्रलयकालीनाः परस्परमिलिता ये पयोधयः समुद्रास्तेषां जले निमज्जन्तं वेदं मीनशरीरमुपादाय धृतवानसि । कथम् ? अखेदं यथा स्यात्तथा विहितं कृतं वहित्रस्य पोतस्य चरितं यत्र तत्तथा । अत्र 'पयोधि'पदेनैव जलत्वे प्राप्ते पुनर्जलपदोपादानमन्तर्धमादिरहितत्वेन विश्रामस्थलाभावं सूचयितुम् । तथा च निरालम्बे पयोधौ वेदं धृतवानसीति वेदधारणार्थमेव तच्छरीरपरिग्रह इति भावः । 'पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः' ॥ १ ॥ कच्छपरूपं स्तौति—धृतकच्छपेति । हे केशव ! धृतकच्छपरूप धृतं कच्छपस्य रूपं येन तादृश ! जय । ननु कच्छपरूपं मया कस्य हेतोर्धृतमित्यत आह—क्षितिरिति । तव पृष्ठे क्षितिः पृथ्वी तिष्ठति । तिष्ठतीति वर्तमानकालनिर्देशेनाधुनापि तव पृष्ठे क्षितिस्तिष्ठतीति कच्छपावतार-प्रयोजनं सर्वलोकप्रसिद्धमेवेति भावः । ननु पञ्चपञ्चाशत्कोटियोजनविस्तृता पृथ्वी मम पृष्ठे कथं स्थितेत्यत आह—अतिविपुलतर इति । अतिशयेन पृथ्व्य-पेक्षयाऽधिकविस्तीर्णे । पुनः कीदृशे ? धरणीति । धरण्याः पृथ्व्या धारणेन यत्किणचक्रं रक्ताकृति स्रुतरुधिरमण्डलं तेन गरिष्ठे गौरवयुक्ते । 'कूर्मे कमठ-कच्छपौ' इत्यमरः । 'व्रणचिह्ने श्रुते किणः' इति हारावलिः ॥ २ ॥ वराहरूपं स्तौति—धृतशूकररूपेति । हे केशव ! धृतशूकररूप धृतं शूकरस्य रूपं येन तादृश ! जय । कोऽवतारपरिग्रहप्रयोजनमाह—वसतीति । तव दशनशिखरे

तव करकमलवरे नखमद्भुतशृङ्गम्
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप
जय जगदीश हरे ॥ ४ ॥
छलयसि विक्रमणे बलिमद्भुतवामन
पदनखनीरजनितजनपावन ।

---

अन्तर्गता कलङ्ककलेव । अनेन दंष्ट्राया महत्त्वं तदपेक्षया धरण्या अतिसूक्ष्मत्वं द्योतितम् । अत्रोपमालंकारः । इति तृतीयम् ॥ ३ ॥ अथ नृसिंहः । 'धृतनरहरि-रूप' इति ध्रुवे विशेषः ॥ तव करेति । तव करकमलवरे नखमद्भुतशिखररूपं भाति । किंलक्षणम् ? हेतुगर्भविशेषणमाह—'दलितहिरण्यकशिपुतनुभृङ्गम्' दलितो विदारितो हिरण्यकशिपोस्तनुभृङ्गस्तनुरेव भृङ्गो येन तत्तथा । तनुभृङ्ग इत्यत्र रूपकमलंकारः । 'करकमलवर' इत्यत्रापि करस्य कमलत्वेन कमला-प्रत्वारोपः । भृङ्गः किल कमलाग्रं विदारयति; अत्र कमलाग्रेण भृङ्गविदा-रणमित्यद्भुतोत्पत्तिः । इति चतुर्थम् ॥ ४ ॥ अथ वामनः । 'धृतवामनरूप' इति ध्रुवे विशेषः ॥ छलयसीति । हे अद्भुतवामन ! त्वं बलिं दानवं छलयसि वञ्चयसे । अत्र भूतेऽप्यद्यापि बलिसमीपे वर्तमानत्वात्, छलं

---

दन्ताग्रे लग्ना संस्थिता धरणिः पृथ्वी वसति । कुत्र केव ? शशिनि चन्द्रे निमग्ना कलङ्ककलेव लाञ्छनलेश इव । अत्र 'निमग्ना'पददानेन बालचन्द्रस्य सादृश्यं प्राप्तम् । अतस्तत्रैव कलङ्कलेशस्य निमग्नत्वाद्बालचन्द्रस्य दीर्घतया सादृश्यमपि संगच्छते । अत एव 'निमग्ना'पदस्यैवार्थ्यमपि । 'रदना दशना दन्ताः' इत्यमरः । 'अग्रं शिखरमित्याहुरदिग्रागे च तन्मतम्' इति धरणिः । 'कला स्यान्मूलके वृद्धौ शिल्पादावंशमात्रके । षोडशांशेऽपि चन्द्रस्य कलनाकालयोः कला' इति विश्वः ॥ ३ ॥ नृसिंहरूपं स्तौति—धृतनरहरिरूपेति । धृतं नरहरेर्नृसिंहस्य रूपं येन तादृश ! जय । नृसिंहावतारस्य प्रयोजनमाह—तवेति । तव करकमलवरे करो हस्तः स एव कमलवरं कमलश्रेष्ठं तत्र नखं तिष्ठति । कीदृशम् ? अद्भुतशृङ्गम् । अद्भुतमाश्चर्यं शृङ्गमग्रभागो यस्य तत्तादृशम् । अद्भुतत्वमेवाह—दलितेति । दलितो विदारितो हिरण्यकशिपोर्दैत्यस्य देहः स एव भृङ्गो भ्रमरो येन तादृशम् । अन्यत्र,–तन्मकरन्दपानादिना भृङ्गाणां तृप्तिर्भवति, अत्र तु

---

टिप्प०—1 धृपकधारणेन नखस्पृष्टजलेन सेशलोकपावनत्वमित्यद्भुतमहिमयोगेना-त्याश्चर्यमित्यपि ध्वनितम्–दीपिका । 2 भक्तिद्रुहो हिरण्यकशिपोर्विनाशाधाय सिंह-वपुष आविष्करणमिति भावः–इति दीपिका । 3 सर्वात्मनो भगवतो भक्तपरवशत्वेन छलनापि भक्तकार्यसाधनमिति 'अद्भुतवामन' इत्युक्तम्–दीपिका ।

केशव धृतवामनरूप
जय जगदीश हरे ॥ ५ ॥
क्षत्रियरुधिरमये जगदपगतपापम्
स्नपयसि पयसि शमितभवतापम् ।

---

कुर्वन्नसीति वर्तमानसामीप्याद्वा प्रवाहानादित्वेन प्रतिवामनावतारं छलनप्रारम्भापरिसमाप्तत्वाद्वर्तमानापदेशः । वामनस्याकारेण खर्वत्वात्प्रभावातिशयेनाविभाव्यस्वरूपत्वादद्भुतत्वम् । क्व ? विक्रमणे विक्रमत्रयकरणे । अत्र हेतुगर्भविशेषणम् । पदेति । पदनखनीरेण जनितं जगत्पावनं येन । इदमत्राकूतम्—बलिना वामनस्य चरणार्घे क्रियमाणे सहसा वृद्धिमाप्ते चरणार्घं यदुदकं गृहीतं तन्नखमात्र एव पर्याप्तम् । अतः पदनीरे वक्तव्ये पदनखनीर इत्युक्तिः । अथवा,—तृतीये पदविन्यासे चरणाग्र एव ब्रह्मलोकमितो झटिति ब्रह्मणा दीयमानार्घजलजनितविष्णुपादाग्रसंभवजलेन पावन इति । अत्राद्भुतो रसः । अतिशयोक्तिरलंकारः । इति पञ्चमम् ॥ ५ ॥ अथ परशुरामः । 'धृतभृगुपतिरूप' इति ध्रुवे विशेषः । क्षत्रियेति । पूर्वपदस्य पुराणकथासापेक्षा व्याख्या । हे राम ! जगत्स्वप-

---

दृसिंहकरकमलाग्रभागेन भृङ्ग एव विदारित इत्यद्भुतत्वम् । अथवा,—अन्यत्र कमलपत्राणि भृङ्गेण विदार्यन्ते, अत्र तु कमलेनैव भृङ्गो विदारित इत्यद्भुतम् । अत्र नृसिंहकरस्य कमलत्वनिरूपणेन हिरण्यकशिपोर्दैत्यस्य देहस्य भृङ्गत्वनिरूपणेन च बृहतोऽपि हिरण्यकशिपोः कायस्य नृसिंहकराम्बुजापेक्षयाऽतिसूक्ष्मत्वं ध्वनितम् । 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चापि शृङ्गः स्यात्कूर्चशीर्षके' इति विश्वः । 'तनुः काये कृशे चाल्पे विरले चाप्यवाच्यवत्' । 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' ॥ ४ ॥ इतो वामनरूपं स्तौति—छलयसीति । हे केशव ! धृतवामनरूप धृतं वामनस्य खर्वस्य रूपं येन तादृश ! जय । वामनावतारप्रयोजनमाह—छलयसीति । हे अद्भुतवामन आश्चर्यवामन ! विक्रमेण पराक्रमेण बलिं दैत्यं छलयसि वञ्चयसि । भगवानुपेन्द्रो वामनरूपं कृत्वा बलेः सकाशात्पदत्रयपरिमितां भूमिं प्रार्थ्य पश्चाद्बृहद्रूपं प्रकटीकृत्य चतुर्दशभुवनं पदत्रयेणापूर्य तदपराधेन तं बद्ध्वा पाताले क्षिप्तवानिति पुराणप्रसिद्धिः । अद्भुतत्वमेवाह—पदनखेति । पदनखसंबन्धि यन्नीरं गङ्गाजलं तेन जनितमुत्पादितं जनानां पावनं पावित्र्यं येन तादृश । अत्रापि प्रवर्धमानस्य भगवतस्त्रिविक्रमस्य चरणाङ्गुष्ठनखाग्रेण विदीर्णे ब्रह्माण्डस्य प्रथमे पार्थिवावरणे तेनैव वर्त्मना तच्चरणारविन्दप्रक्षालनादेवागतं द्वितीयावरणजलं ब्रह्मदत्तार्घेण जलेनैकीभूतं क्रमेण मर्त्यलोकमागतं गङ्गेति प्रसिद्धं लोकान्पावयतीति पुराणप्रसिद्धिः । अत एव भूलोकस्थितेनापि वामनेन ब्रह्माण्डजलस्नानसमाहा-

केशव धृतभृगुपतिरूप
जय जगदीश हरे ॥ ६ ॥
वितरसि दिक्षु रणे दिक्पतिकमनीयं
दशमुखमौलिबलिं रमणीयम् ।

पयसि । क ? पयसि जले । किंभूते जले ? क्षत्रियरुधिरमये क्षत्रक्षतजविकारे ।। परशुरामः किल क्षत्रक्षयं कृत्वा कुरुक्षेत्रे रामह्रदतीर्थे क्षत्रशोणितजलेन पितॄनतार्प्सीदिति पौराणिकाः । तत्राद्यापि जगत्स्नाति, अपगतपापं च भवति । तदेव कविराह । अत्रापि स्नानं प्रति रामशब्दस्यैव प्रवृत्तिनिमित्तत्वात्स्नपयसीति पदान्तराध्याहारेण भूतार्थालंकारस्थाने लये गतिश्चिन्तनीया ॥ यस्त्वं स्नपयसि स जयेति वा । किंभूतं जगत् ? अपगतपापमिति हेतुगर्भं विशेषणम् । अत एव शमितभवतापं शमितो भवतापोऽपगतभवतापत्वादाध्यात्मिकादिदुःखत्रयं येनेति तत्तथा । अत्र भाविनि भूतवदुपचारन्यायेन स्नानेन पापहानिः । तथा च दुःखत्रयाभिघातः । उभयमपि क्रियाविशेषणं वा । स्नपयसीति 'ग्लास्ना–' (ग० १९०) इति मित्त्वाद्ध्रस्वत्वम् । रुधिरमये इति विकारे मयट् । स्वभावोक्तिरलंकारः । अत्र बीभत्सो रसः । प्रलयेत्यादिपदषट्के धीरोद्धतो नायकः । तल्लक्षणं सङ्गीतराजे रसरत्नकोशे—'मात्सर्यदर्पभूयिष्ठश्छद्मअहंकारवाञ्छली । चण्डो विकत्थनश्चैव धीरोद्धत उदाहृतः' ॥ तद्गुणाः—दार्ढ्यं, तेजस्विता, दक्षता, धार्मिकत्वं चेति । तल्लक्षणं रसरत्नकोशे यथा—'व्यवसायादचलनं दार्ढ्यं विघ्नशतैरपि । अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि । दक्षता क्षिप्रकारित्वं धार्मिकत्वं तु तत्कृतिः' ॥ ६ ॥ अथ रामः । 'धृतरामशरीर' इति ध्रुवे विशेषः । वितरसीति । हे राम ! त्वं वितरसि ददासि । दशमुखमौलिबलिं रावणस्य

---

थर्यम् । 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बु शम्बरम्' इत्यमरः ॥ ५ ॥ परशुरामावतारं स्तौति—धृतभृगुपतिरूपेति । हे केशव ! धृतं भृगुपतेः परशुरामस्य रूपं येन तादृश ! जय । परशुरामावतारप्रयोजनमाह—क्षत्रियेति । क्षत्रियाणां रुधिराणि प्रचुराणि यत्र तादृशे, पयसि कुरुक्षेत्राख्यतीर्थजले जगत्प्राणिजातमपगतपापं यथा स्यादेवं स्नपयसि । यदवधि परशुरामेणैकविंशतिवारं क्षत्रियान्हत्वा तद्रुधिरैः कुरुक्षेत्रे पञ्च ह्रदान्विधाय पितॄणां तर्पणमकारि, तदवधि तन्महातीर्थं जातमिति पुराणप्रसिद्धिः । कीदृशं जगत् ? शमितभवतापं शमितो भवस्य संसारस्य तापः संतापो येन तादृशम् । प्राणिनां पापसंबन्धादेव संतापः, तत्तीर्थस्नानेन तु सर्वं पापं विलयं गतमिति ततः संतापनाशोऽप्यभूदिति । अस्य दर्शनमात्रेण तापो गच्छति, जले मज्जतः संततस्य तापनाश उचित एवेति ध्वनिः ।

---

टिप्प०–1 दिक्षु दशदिशासु, 'दिक्'पदेनैव दशसंख्योपस्थितिर्भवतीति । प्रत्येकं भागकथनाय दशमुखोपादानम्–दीपिका ।

केशव धृतरामशरीर
जय जगदीश हरे ॥ ७ ॥
वहसि वपुषि विशदे वसनं जलदाभम्
हलहतिभीतिमिलितयमुनाभम् ।

मौल्य एव बलिः । 'मौलि'शब्दः शिरोवाची । अथवा,–'मौलि'शब्दः किरीटे वर्तते । 'चूडाकिरीटकेशाश्च संयता मौलयस्त्रयः' इत्यभिधानात्, तथापि बले-र्मांससाध्यत्वान्मौलिशब्देन तात्स्थ्याच्छिरांसि लक्ष्यन्ते । शिरांसि छेदं छेदं दिक्पतिभ्यो बलिदानं कृतवानित्यर्थः । जगतां रक्षोपलक्षणोपद्रवोपशान्त्यै रक्षःशिरांस्येव बलित्वेनोपहृतवानिति । कुत्र ? दिक्षु । किंभूतं बलिम् ? दिक्पतिकमनीयमभिलषणीयम् । पुनः किंभूतम् ? रावणवधद्वारा लोकाभिराम-त्वाद्रमणीयम् । अत्र यावन्तो दिक्पतयस्तावन्त्येव शिरांसीति कमनीयत्वे हेतुः । अत्रापि वितीर्णवानिति वक्तव्ये तत्कालापेक्षया वर्तमानापदेशो वा । यो वितीर्णवान् स त्वं जय इत्यादि कल्पनीयम् । अत्र जातिरलंकारः । वितरसीत्यत्र धीरोदात्तो नायकः । तल्लक्षणं रसरत्नकोशे—'कृपावानतिगम्भीरो विनीतश्चा-विकत्थनः । धीरोदात्तः स विज्ञेयो रामो दाशरथिर्यथा' ॥ ७ ॥ अथ बल-देवः । 'धृतहलधररूप' इति ध्रुवे विशेषः । वहसीति । अत्र यद्यपि 'रामो रामश्च कृष्णश्च' इति कृष्णचरित्रं वर्णनीयं तथापि कृष्णस्यैवैते दशापीति कृष्णस्य नायकत्वेन वर्णनीये बलदेवोऽपि दशसु गणितः । तथा चोक्तम्— 'वनजौ वनजौ खर्वस्त्रिरामी सतपोऽतपः' इति । हे राम ! त्वं नीलं वसनं वहसि धत्से । किंलक्षणम् ? जलदाभं मेचकम् । क ? विशदे शुभ्रे वपुषि । तच्च यमुनयोपमीयते । हलहतिभयेन त्वामेव सेवितुमागता यमुनेव । तद्विवा-

'रुधिरोऽङ्गारके प्रोक्तो रुधिरं कुङ्कुमासृजोः' इति विश्वः । 'भवः संसार-संतापश्रेयःशंकरजन्मसु' इति च ॥ ६ ॥ अथ रामावतारे स्तौति—धृतरघु-पतिरूपेति । हे केशव ! धृतं रघुपतेः रामचन्द्रस्य रूपं येन तादृश ! त्वं जय । श्रीरामावतारपुरुषार्थमाह—वितरसीति । रणे संग्रामे दिक्षु हरित्सु दशमुखमौलिबलिं रावणस्य ये मौलयो मस्तकानि समुकुटानि तान्येव बलिमुपहारं वितरसि ददासि । कीदृशम् ? दिक्पतिकमनीयं दिशां ये पतय इन्द्रादयस्तेषां कमनीयमभीष्टम् । तत्र हेतुः–रमणीयम् । 'किरीटमूर्धचूडासु मौलिः केशे च संयते' । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' इत्यमरः ॥ ७ ॥ अथ बलभद्रावतारं स्तौति—धृतहलधरेति । हे केशव ! धृतं हलधरस्य बलभद्रस्य रूपं येन तादृश ! जय । बलभद्रावतारस्य प्रयोजनमाह—वहसीति । त्वं विशदे शुभ्रे वपुषि देहे जलदाभं सजलमेघस्य दीप्तिमिव नीलं वसनं वस्त्रं वहसि धारयसि । कीदृशम् ? हलहतीति । हलेन हतिर्हननं तद्भीत्या तद्भयेन

पाठा०—१ 'धृतरघुपतिरूप' RM., S., D.

केशव धृतहलधररूप
जय जगदीश हरे ॥ ८ ॥
निन्दसि यज्ञविधेरहह श्रुतिजातम्
सदयहृदय दर्शितपशुघातम् ।
केशव धृतबुद्धशरीर
जय जगदीश हरे ॥ ९ ॥
म्लेच्छनिवहनिधने कलयसि करवालं
धूमकेतुमिव किमपि करालम् ।

---

भातीति तदाभम् । धवलमेचकसंगत्या प्रयागत्वे तन्मूर्तेः पापहारित्वं कामदत्वं च व्यञ्जितम् । वहसीत्यत्र धीरललितो नायकः । तल्लक्षणम्—'कान्तापरवशो धीरललितो निश्चिन्तो मृदुः' । अथवा,—शृङ्गारी नायकः । तल्लक्षणं सङ्गीतराजे रसरत्नकोशे—'शृङ्गारी नायकस्त्वन्यः पञ्चमः कथ्यते यथा । विलासवाक्कायशीलः सुभगः स्थिरवाग्युवा । गतिः सधैर्या दृष्टिश्च सविलासस्मितं वचः' ॥ ८ ॥ अथ बुद्धावतारः । 'केशव धृतबुद्धशरीर' इति ध्रुवे विशेषः । निन्दसीति । हे सदयहृदय ! त्वं यज्ञविधेः श्रुतिजातं क्रतुविधानसंबन्धि वेदवाक्यसमूहं निन्दसि । किंभूतम् ? दर्शितपशुघातमुपदिष्टगवाश्वादिमारणम् । अहहेत्यद्भुते । परमेश्वरस्यैवोपदेष्टृत्वादिज्यत्वात्फलदातृत्वाच्च किमपि प्रयोजनमभिसंधाय तन्निन्दा नाश्चर्यम् । निन्दसीत्यत्र धीरशान्तो नायकः । तल्लक्षणम्—'शान्तो विनीतो धीरश्च धीरशान्तो द्विजो वणिक्' ॥९॥ अथ कल्क्यवतारः । 'धृतकल्किशरीर' इति ध्रुवे विशेषः । म्लेच्छेति ।

---

मिलिता या यमुना तस्या इवाभा दीप्तिर्यस्य तादृशम् । इदं च मलयानिलवशात्कम्पमानस्य वस्त्रस्य भययुक्तयमुनाया उत्प्रेक्षा । भीरूणां हि कम्प उचित एवेति भावः । कदाचिद्वारुणीं पीत्वा वृन्दावने गोपीभिः सह विहरता बलभद्रेण जलक्रीडार्थमाहूतां मत्तप्रलापोऽयमिति मत्वा गर्वेणान्तिकमनागच्छन्तीं कालिन्दीं रोषतो हलाग्रेण कृष्टवानिति पुराणप्रसिद्धिः । 'हलधर'पदेन दुष्टनिग्रहार्थमेव हलं धृतवानित्यवतारप्रयोजनं ध्वनितम् । 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इति च । 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्' इति । 'भीतिः साध्वसकम्पयोः' इति विश्वः ॥ ८ ॥ अथ बुद्धावतारं स्तौति—धृतबुद्धेति । धृतं बुद्धस्य शरीरं येन तादृश ! जय । ननु बुद्धावतारस्य वेदनिन्दकस्य मे कथं स्तुतिः क्रियत इत्यत आह—निन्दसीति । यज्ञविधेः श्रुतिजातं यज्ञस्य विधानबोधकं वेदसमूहं निन्दसि, न तु सर्वमित्यर्थः । सोऽपि किमिति निन्द्यत इत्यत आह—दर्शितेति । अहह

---

पाठा०—१ 'सदयहृदयदर्शित' C. २ 'धूमध्वजमिव' B.

केशव धृतकल्किशरीर
जय जगदीश हरे ॥ १० ॥

---

हे हरे ! म्लेच्छनिवहनिधने म्लेच्छसमूहवधनिमित्तम् । अपिः निश्चये । त्वं करवालं खड्गं कलयसि इति वितर्कयामि । 'किं' वितर्के । अन्यथा चक्रादिषु सत्सु कथं खड्गस्यैव धारणम् । किंभूतं करवालम् ? भीषणम् । किमिव ? धूमकेतुमिव । म्लेच्छानामुत्पातशंसिनं धूमकेतुं ताराविशेषमिव । अथवा,-धूमः केतुश्चिह्नं यस्य स तम् । म्लेच्छकुलविनाशपिशुनमिव । उत्पाते हि वह्निर्धूमशिखो भवति, स तु प्रायेण स्वर्णमयो भवति । खड्गतेजो हि नीलभास्वरं भवति, अत उभयसाम्येनोपमा । म्लेच्छेष्वत्र धीरोद्धतो नायकः । तल्लक्षणमुक्तं प्राक् ॥ १० ॥ इदानीं दशवि-

---

कल्पम् । दर्शितो बोधितः पशुघातो येन तादृशम् । वेदोऽपि पशूनां घातं बोधयतीत्यहह कष्टमित्येवं निन्दसीति भावः । एतादृशनिन्दायामपि हेतुमाह—सदयहृदयेति । दया कृपा तत्सहितं हृदयं यस्य तादृश ! । अयं भावः—रागवशाभिरतहिंसाकुलानाद्वा 'अग्नीषोमीयं पशुमालभेत' इत्यादिविधिवाक्यैः स्वर्गादिफलदर्शनपुरस्कारेण शुद्धजिह्विकया वैदिकमार्गे प्रवर्त्य पश्चान्नश्वरस्वर्गादिफलकं निरपराधिबहुप्राणिवधसाध्ययागादिकं मुक्तिविरोधित्वाच्च तेषामत्यन्तमहितमिति विचार्य परमपुरुषार्थमोक्षसाधने निवृत्तिमार्गे तान्प्रवर्तयितुं 'न हिंस्यात्सर्वा भूतानि' इत्यादिना यज्ञादिबोधकवेदस्य निन्दां करोषि, न तु सर्वथा वेदनिन्दायामेव तवावतारतात्पर्यम् । अत एव गूढं तवेमं व्यवहारमज्ञात्वा दुरात्मनां वैदिकमार्गे विश्वास इति संमोहनायैव तवैतदवतारपरिग्रह इत्यवतारप्रयोजनमुक्तमिति । 'अहहेत्यद्भुते खेदे' इति विश्वः । 'म्लेच्छः पापरते जातिभेदे स्यादल्पभाषिणि' इति विश्वः ॥ ९ ॥ अथ कल्किनोऽवतारं स्तौति—धृतकल्किशरीरेति । हे केशव ! धृतकल्किशरीर धृतं कल्किनः शरीरं येन तादृश ! त्वं जय । ननु पूर्वं मम सदयत्वमुक्तं, कल्क्यवतारे तु प्राणिवधनिरतस्य मे विरुद्धमित्यत आह—म्लेच्छनिवहेत्यादि । त्वं म्लेच्छनिवहनिधने म्लेच्छसमूहमारणे करवालं खड्गं कलयसि धारयसि । कीदृशम् ? किमपि करालमतिशयेन भयंकरम् । कमिव ? धूमकेतुमिव औत्पातिकग्रहविशेषमिव । रणे उदितं तत्करवालं पश्यतां म्लेच्छानां नाशो भवतीति करवालस्य धूमकेतुसाम्यम् । अन्यस्मिन्नप्युदिते धूमकेतौ औत्पातिकग्रहविशेषे तं पश्यतां प्राणिनां विपदो भवन्तीति भावः । यद्वा,—धूमः केतुश्चिह्नं यस्य स धूमकेतुर्वह्निस्तमिव । अत्रास्य खड्गस्य नीलत्वाद्धूमसाम्यम् । मुष्टेश्च सुवर्णमयत्वादग्निसाम्यम् । म्लेच्छनिधनेत्यत्र 'चर्मणि द्वीपिनं हन्ति' इतिवन्निमित्तात्कर्मसंयोगे सप्तमी । 'समूहे निवहव्यूहसंदोहविसरव्रजाः' इत्यमरः । 'निधनः स्यात्कुलेऽन्ते' इति विश्वः । 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः । कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः । 'धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः' इति विश्वः । 'करालो भीषणोऽन्यवत्' इति च ॥ १० ॥

श्रीजयदेवकवेरिदमुदितमुदारम्
श्रृणु सुखदं शुभदं भवसारम् ।
केशव धृतदशविधरूप
जय जगदीश हरे ॥ ११ ॥[1]

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यं[1] दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।

---

रवतारैः कृतविस्तारमेवैन श्रीकृष्णपरत्वेनोपसंहरन्नाह । तथा च वक्ष्यति 'वेदानुद्धरते' इत्यादि । 'केशव धृतदशविधरूप, जय जगदीश हरे' इति ध्रुवे विशेषः । श्रीजयदेवकवेरिति । हे धृतदशविधरूप ! जयदेवकवेर्मम इदं स्तोत्ररूपं उदितं भणितं शृणु मामकीनोऽयं मां स्तौतीति बुध्यावधारय । किंभूतम् ? उदारम् । झटिति पदार्थार्पकम् । पुनश्च भवसारम् । भवे संसारे सारं साररूपम् । अथवा,–भवोच्छेदकहेतुमध्ये सारम्; मध्यमपदलोपित्वात् । अत एव सुखदम्; सद्यःपरनिर्वृतिहेतुत्वात् । अत एव शुभदम्; शिवेतरक्षतिहेतुत्वात् । अत्र शान्तो रसः । पर्यायोक्तिरलंकारः ॥ ११ ॥ इदानीं दशानामप्यवताराणामभेदं निरूप्य तत्तद्रूपं श्रीकृष्णं प्रणमति— वेदानुद्धरत इति । हे हरे ! तुभ्यं कृष्णाय नमः । वेदानुद्धरत इत्यादि मीनावतारादिपदव्याख्यानेनैव निगदव्याख्यातम् । वृत्तमिदं शार्दूलविक्रीडितम् । दीपकोऽलंकारः । 'वेदानुद्धरते' इत्यत्र पदेषूक्ता नायकाः । अत्र प्रलयपयोधीत्याद्येकादशस्वपि पदेषु कीर्तिधवलं नाम छन्दः । तल्लक्षणं यथा—'अयुजि पदे द्वादशैव युजि तु यस्य हि दश चाष्ट मात्राश्चेत् । परमपि पदयुगमेवं तं कीर्तिधवलमिह धीराः प्राहुः ॥' ध्रुवपदे तु 'पञ्चाष्टभ्यां भ्रमरः' इति भ्रमरो नाम छन्दः । 'बालभुजङ्गमकलितम्' इति छन्दश्चूडामणिरपि ।

---

प्रत्येकावतारपुरस्कारेण भगवतः स्तुतिं कृत्वा संप्रति समुदितदशावतारपुरस्कारेण श्रीकृष्णं स्तौति—धृतदशविधेति । धृतानि दशविधानि रूपाणि येन तादृश ! त्वं जय । संप्रति जयदेवकविः संप्रदायागतत्वेन गीते स्वनाम निबध्नन् कृतां भगवतः स्तुतिं कृपयान्यानपि श्रावयितुमाह—श्रीजयदेवेति । इदं जयदेवकवेरुदितं भाषितं शृणु । किंभूतम् ? सुखदं श्रोत्रमनःसुखप्रदम् । पुनः कीदृशम् ? शुभदं मङ्गलप्रदम्; कृष्णकीर्तनत्वात् । अत एव भवसारं श्रेष्ठमहाधनरूपं वा । अत एवोदारं महत् । 'विधा विधौ प्रकारे च' इत्यमरः । 'उक्तं भाषितमुदितम्' इति च । 'उदारो दातृमहतोः' इत्यपि । 'कल्याणं मङ्गलं शुभम्' इति च ॥ ११ ॥ अंशावतारान्स्तुत्वा संप्रति दशावतारिणं कृष्णं स्तौति— वेदानिति । कृष्णाय परिपूर्णस्वरूपिणे श्रीकृष्णरूपधारिणे तुभ्यं नमः । ननु

---

पाठा०–1 'दैत्यान्' A.

---

टिप्प०–1 अत्र 'गीतगोविन्दस्य प्रथमः प्रबन्धः' इति पद्द्योत० ।

पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥१२॥

गुर्जरीरागनिःसारतालाभ्यां गीयते ॥ प्रबन्धः २ ॥

श्रितकमलाकुचमण्डल,
धृतकुण्डल ए ।
कलितललितवनमाल,
जय जय देव हरे ॥ ध्रुवपदम् ॥ १ ॥

'छन्दसा कीर्तिपूर्वेण धवलेन विनिर्मितः । पदान्तभोगरचिरस्ततः पाटस्वराश्रितः ॥ दशावतारकीर्त्याख्यो धवलोऽयं प्रबन्धराट् । रागोऽत्र मध्यमादिः स्यादादितालो विलम्बितः ॥ लयः स्यान्मागधी रीतिः शृङ्गारोऽत्र रसः स्मृतः । कीर्तनं वासुदेवस्य विनियोगो नृपोत्सवे ॥' ॥ १२ ॥

इति दशावतारकीर्तिधवलो नाम प्रथमः प्रबन्धः ॥

इदानीं वर्ण्यमानं श्रीकृष्णं स्वरूपनिरूपणद्वारा मङ्गलगीतेन स्तौति ।

मीनाद्यवतारवानीश्वरस्तस्य स्तुतिः कृता चेदिदानीं गोपालं मां किं स्तौषीत्यत आह—**दशाकृतिकृते** इति । मीनादिदशरूपधारिणे तुभ्यं नमः । तथा च तत्तदवतारवानीश्वरस्त्वमेव, न त्वदन्य इत्यर्थः । ननु ईश्वरश्चेदहं तदाऽखिलमीनाद्याकृतयः किमिति मया धृता इत्याशङ्क्य अवताराणां प्रयोजनमाह—**वेदानुद्धरते** इति । वेदानुद्धरते मीनरूपेण वेदोद्धारं कुर्वते । पुनः कीदृशाय ? जगद्भुवनं निवहते कच्छपरूपेण धारयते । पुनः भूगोलं भूमण्डलमुद्बिभ्रते धारयते वराहरूपेणोर्ध्वं प्रापयते । पुनः कीदृशाय ? दैत्यं हिरण्यकशिपुं नरसिंहरूपेण दारयते विदारयते । पुनः किंभूताय ? बलिं दैत्यं छलयते वामनरूपेण वञ्चयते । पुनः कीदृशाय ? क्षत्रक्षयं कुर्वते परशुरामरूपेण दुष्टक्षत्रियाणां नाशं कुर्वते । पुनः कीदृशाय ? पौलस्त्यं रावणं श्रीरामचन्द्ररूपेण जयते । पुनः कीदृशाय ? हलं कलयते दुष्टनिग्रहायायुधत्वेन बलभद्ररूपेण कलयते । कारुण्यं कृपामातन्वते बुद्धरूपेण विस्तारयते । म्लेच्छान्कल्किरूपेण मूर्च्छयते नाशयते । 'आकृतिः कथिता रूपे सामान्यवपुषोरपि' इति विश्वः ॥ १२ ॥

पूर्वं केल्यो जयन्तीत्युक्तं, केलिश्च नायकौत्कर्ष्यं विना न संभवति ।

पाठा०—१ "रागे प्रतिमंठताले" RM. २ 'प्रतिमंठतालं' P.; 'परिमंठ०' S., 'मंठताले' D. ३ 'हे' D.

टिप्प०—1 'श्यामास्तु केशी मल्यद्रुमाणां मृदूल्लसत्पल्लवतल्पयन्ती । श्रुते स्वराणां दधती विभागं तन्वीमुखा दक्षिणगुर्जरीयं' इति रागलक्षणम्–इति पद्द्योत० । 2 'द्रुतद्वन्द्वाद्लघुद्वन्द्वं निःसारः' इति निःसारलक्षणं बालबोधिन्याम् । 3 ध्रुवपदम्, प्रतिपदमनुवर्तमानत्वात् । तदुक्तम्–'उद्ग्राहः प्रथमो भागस्ततो मेलापकः स्मृतः । ध्रुवत्वाच्च ध्रुवः पश्चादाभोगश्चान्तिमः स्मृतः ॥' इति चतुर्भिरवयवैः प्रबन्धो भवतीति दीपिका ।

दिनमणिमण्डलमण्डन,
भवखण्डन ए ।
मुनिजनमानसहंस,
जय जय देव हरे ॥ २ ॥

कालियविषधरगञ्जन,
जनरञ्जन ए ।
यदुकुलनलिनदिनेश,
जय जय देव हरे ॥ ३ ॥

---

तत्रेदमाद्यं पदं ललितरागेण लघ्वादिताल इति आदिताले गीयते ॥ 'गीत-मुद्ग्राह्यते येन स उद्ग्राहः प्रकीर्तितः । आभोगस्त्वन्तिम इति ध्रुवत्वाच्च ध्रुवः स्मृतः ॥' उद्ग्राहादिधातूनां विश्रामभूमित्वात् । अन्यानि च उद्ग्राहादि-प्रतिरूपकाणि पदानीति प्रतिबोद्धव्यम् । एवमन्यास्वष्टपदीषु ज्ञेयम् ॥ श्रितकमलेति । अत्र 'ए'काराद्यालापो ज्ञेयः । 'जय जय देव हरे' इत्यत्र ध्रुवः । श्रितं कमलायाः कुचमण्डलं येन स तथा तस्य संबोधनम् । धृते कुण्डले येन स तथा तस्य संबुद्धिः । 'ए' इति एतदन्ते रागपूर्त्यै गानवेलायां प्रतिपदं एतावत्पदम् । 'जय जय देव हरे' इति सर्वत्र ध्रुवपदम् । कलिता धृता ललिता मनोहरा आर्द्रा किंवा वनमाला पुष्पदाम येन । 'वनमम्भसि कानने' इति तज्जन्यत्वात्पुष्पाणि कमलानि वा तेषां माला ॥ १ ॥ दिनमणीति अत्रालापो बोद्धव्यः । मुनिजनेति । हे दिनमणिमण्डलमण्डन भानुमण्डला-लंकरण ! सवितृमण्डलमध्यवर्तित्वात् । तस्य संबुद्धिः । हे भवखण्डन संसार-च्छेदक । 'नन्दिग्रहि–' (पा. ३।१।१३४) इत्यादिना ल्युः । 'ए' इति गानपदम् । मुनिजनेत्यादि ध्रुवः । मुनिजनानां मानसानीव मानसानि तेषु हंस इव हंसः । अथ मुनीनां मानसे ध्येयत्वाद्धंसः परंब्रह्म । मुनिमानस इति वक्तव्ये 'जन'ग्रहणं लोकपर्यायः । जनो लोक इति पर्यायेत्यभिधाने यावन्तो मुनय इति ॥ २ ॥ कालियेति । अत्रालापः–यदुकुलेति । हे कालियाभिधसर्पदमन ! तदालि-

---

तस्मात्सकलनायकचूडामणेर्भगवतः श्रीकृष्णदेवस्य लोकोत्तरगुणान्वर्णयन्नेव मङ्गलान्तरमप्याचरति—श्रितेति । गीतस्यास्य गुर्जरी रागस्तालश्च प्रतिमंठः । गीतार्थस्तु–हे हरे ! जय । जय जयेत्यादरे द्विर्वचनम् । इदं तु ध्रुवपदम् । नायकगुणानाह—श्रितेति । श्रितमाश्रितं कमलायाः कुचमण्डलं येन । लक्ष्मीप्रियत्वेन धनाढ्यत्वमपि सूचितम् । 'द्रुतमात्रे प्रभृतिः स्याद्यत्र ताळे निरन्तरम् । प्रतिमंठः स विज्ञेयो ह्यद्भुते गीयते तु सः' ॥ कीदृश ? धृतेति । धृते कुण्डले कर्णाभरणे येन तादृश ! पुनः कीदृश ? कलिता धृता लम्बिता वनमाला मनोहरा चरणपर्यन्तावलम्बिनी पुष्पमाला येन तादृश ! एतद्विशेषण-

---

टिप्प०–1 इदं च परंपरितरूपकमलंकारः—दीपिका । 2 'ए' इति पदं 'हे' इत्यर्थम्–संजीविनी । 3 'गुरुर्द्रुतद्वयं यत्र मंठतालः स कथ्यते । मंगलो मंठको ज्ञेयो रसे चाद्भुतसंज्ञके ॥' इति दीपिका ।

मधुमुरनरकविनाशन,
गरुडासन ए ।
सुरकुलकेलिनिदान,
जय जय देव हरे ॥ ४ ॥
अमलकमलदललोचन,
भवमोचन ए ।

---

त्वाजनरञ्जन ! बालेन महाबलेन महाविषधरदमनाज्जनानामाह्लादोऽभूत् । हे यदुकुलनलिनदिनेश ! यदुकुलं नलिनमिव तत्प्रकाशकत्वात्सूर्य इव । अत्र पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुभाव इति ध्रुवः ॥ ३ ॥ मधुमुरेति । अत्रालापः—सुरेति । मधुमुरनरकान्विनाशयति यस्तस्य संबोधनं—हे सुरकुलकेलिनिदान ! असुरवधात्तत्कारणत्वम् । इति ध्रुवः ॥ ४ ॥ अमलेति । आलापः—

---

द्वयेन सेव्यत्वमुक्तम् । 'कमला श्रीर्हरिप्रिया' इत्यमरः । 'कुचौ स्तनौ' इति च । 'आपादलम्बिनी माला वनमालेति तां विदुः' इति विश्वः । 'पत्रपुष्पमयी माला वनमाला प्रकीर्तिता' ॥ १ ॥ पुनः कीदृश ? दिनमणीति । दिनमणेः सूर्यस्य यन्मण्डलं तस्य मण्डन हारभूत ! । तथा च 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः' इति पुराणोक्तवचनात् । एतेन स्थिरत्वमित्यु-क्तम् । पुनः कीदृश ? भवं संसारं खण्डयतीति भवखण्डनः प्रलयकर्ता तादृश ! । अनेन सामर्थ्यरूपो नायकगुण उक्तः । पुनः किंभूत ? मुनिजनानां मानसं चित्तं तदेव मानसं सरोवरविशेषस्तत्र हंस मराल ! । अत्र मुनिजनमानसं स्वच्छत्वादि-साधर्म्यत्वेन च साधारणधर्मेण मानससरोवरत्वेन निरूपितम् । भगवतश्च मुनिजनमानसेषु समुचितस्थितिं मत्वा साधारणधर्मेण हंसत्वेन निरूपणम् । 'मानसं सरसि स्वान्ते' इति विश्वः ॥ २ ॥ पुनः कीदृश ? कालियेति । कालियनाम्नो विषधरस्य गञ्जन तिरस्कारक ! । अनेनातिसामर्थ्यमुक्तम् । पुनः कीदृश ? । जनरञ्जनेति । जनान्मधुरवचनादिना रञ्जयतीति जनरञ्जन ! । अनेन शुभवचनत्वं नायकगुण उक्तः । पुनः कीदृश ? यदुकुलेति । यदुकुलमेव नलिनं कमलं तस्य दिनेशः सूर्यः; प्रकाशकत्वात् । एतेन कुलीनत्वं नायकेऽप्युक्तम् । 'आशीविषो विषधरश्चक्री व्यालः सरीसृपः' इत्यमरः । 'वा पुंसि पद्मं नलिनम्' इति च ॥ ३ ॥ पुनः कीदृश ? मधुमुरेति । मधुनाम्नो मुरनाम्नो नरकनाम्नो दैत्यस्य विनाशन विनाशकारिन् ! । अनेनापि सामर्थ्यमुक्तम् । पुनः कीदृश ? सुरकुलकेलीनां देवसमूहक्रीडानां निदान आदिकारण ! । अनेनापि सामर्थ्य-मुक्तम् । 'सुरो देवः' इति विश्वः । 'सजातीये गणे गोत्रे देहेऽपि भणितं कुलम्' इति च । 'निदानं त्वादिकारणम्' इत्यमरः ॥ ४ ॥ पुनः कीदृश ? अमलेति । भवमोचन भवो जन्म तस्मात्प्रपञ्चान्मोचयतीति तादृश ! मोक्षप्रदेत्यर्थः । अत एव भवखण्डनेत्यनेनापौनरुक्त्यम् । यतस्तत्र भवपदस्य जगत्परतया

त्रिभुवनभुवननिधान,
जय जय देव हरे ॥ ५ ॥
जनकसुताकृतभूषण,
जितदूषण ए ।
समरशमितदशकण्ठ,
जय जय देव हरे ॥ ६ ॥
अभिनवजलधरसुन्दर,
धृतमन्दर ए ।
श्रीमुखचन्द्रचकोर,
जय जय देव हरे ॥ ७ ॥

---

त्रिभुवनेति। अमलकमलदले इव लोचने यस्य स तथा तस्य संबुद्धिः। अपरं च,-हे भवमोचन हे संसारमोचन! अथवा,-भवं जन्म तस्मान्मोचनस्य जीवव्रातः। हे त्रिभुवनभवननिदान हे त्रिलोकीसमुत्पत्त्यादिकारण। इति ध्रुवः ॥ ५ ॥ जनकेति । अत्रालापः-समरेति। हे जनकसुताकृतभूषण जनकसुतायाः कृतं भूषणं येन। जितो दूषणो राक्षसो येन इति पदम्। हे समरशमितदशकण्ठ संहारितो रावणो येन इति ध्रुवः ॥ ६ ॥ अभिनवेति। अत्रालापः-हे अभिनवजलधरसुन्दर, हे धृतमन्दर! निगदव्याख्यानम्। इति पदम्। हे श्रीमुखचन्द्रचकोर! श्रीमुखं चन्द्र इव तत्र चकोर इव; तन्मु-

---

प्रलयकारित्वमुक्तम्। अत्र तु भवपदस्य जन्मपरतया मोक्षप्रदत्वमुक्तमेव। अनेन मोक्षप्रदत्वेन परमानन्दरूपो नायकगुण उक्तः। पुनः कीदृश? त्रिभुवनेति। त्रिभुवनमेव भवनं गृहं तदेव निधानं वासस्थानं यस्य तादृश!। यद्वा,-त्रिभुवने निधानमिव महाधनम्। 'दलं पर्णं छदः पुमान्' इत्यमरः। 'भवनं भाववेश्मनोः' इत्यमरः। 'निधानं स्वालये निधौ' इति विश्वः ॥ ५ ॥ पुनः कीदृश? जनकसुतेति। जनकसुताकृतभूषण जनकसुतायाः सीतायाः कृतानि भूषणानि मकरिकापत्रादीनि येन तादृश!। अनेन सकलकलाकौशलरूपस्ताद्रूप्यलक्षणो नायकगुण उक्तः। पुनः कीदृश? जितो दूषणनामा राक्षसो येन स तादृश!। यद्वा,-जितानि स्वस्मिन् तिरस्कृतानि दूषणानि दोषा येन तादृशेत्यर्थः। पुनः कीदृश? समरे सङ्ग्रामे शमितो नाशितो दशकण्ठो रावणो येन सः। अनेन परमाभिमानिनो रावणस्य वधेनाभिमानरूपो नायकगुण उक्तः। रामावतारपौरुषवर्णनेन रामगतक्षमारूपोऽपि नायकगुणः सूचितः। 'अभियो समरानीकरणाः' इत्यमरः ॥ ६ ॥ पुनः कीदृश? अभिनवेति। अभिनवो नूतनो यो जलधरः सजलमेघस्तद्वत्सुन्दरः। अनेनापि भव्यत्वमुक्तम्। पुनः

---

पाठा०-१ '०भवननिदान' BP., S., G., D.

---

1 टिप्प०-अत्र स्तुतिरलंकारः-इति संजीविनी।

तव चरणं प्रणता,
वयमिति भावय ए ।
कुरु कुशलं प्रणतेषु,
जय जय देव हरे ॥ ८ ॥
श्रीजयदेवकवेरिदं,
कुरुते मुदम् ए ।
मङ्गलमुज्ज्वलगीतं,
जय जय देव हरे ॥ ९ ॥

---

स्वाधरसुधापानकरत्वात् । इति ध्रुवः ॥७॥ तव चरणे इति । उपसंहरति—हे उक्तस्वरूप श्रीकृष्ण ! वयं तव चरणे प्रणताः तव चरणे कृतनमस्कारा इति भावय चिन्तय । इति पदम् । प्रणतेष्वस्मासु कुशलं कुरु । जयेत्यादि ध्रुवः । 'भू शुद्धिचिन्तामिश्रणेषु' चुरादिः परस्मैपदी । तस्य प्रयोगो भावयेति ॥ ८ ॥ श्रीजयेति । अत्रालापः—मङ्गलेति । हे हरे ! इदं मङ्गलं नाम गीतं गीतविशेषो मुदं प्रीतिं कुरुते । कस्य ? ते तव । इति अनुप्रयुज्यमानस्यान्यापेक्षया । अथवा,—इदं गीतं मे तव मुदं कुरु । कुरु ते इत्यर्थः । अथवा,—इदं मङ्गलं मङ्गलगीतं जयदेवस्य मुदं कुरुते । अमुदं मुदं ददातीति मुदं वा । ते इति काकाक्षिगोलकन्यायेनोभयत्र संबध्यते । अथवा,—इदं गीतं गायतां शृण्वतां मुदं कुरुते । अथ ते गीतं स्वस्संबन्धिगीतं गायतां शृण्वतां च मुदं कुर्वित्याशीः । तस्य श्रीजयदेवस्य कवेः । किंभूतम् ? उज्ज्वलम् । रम्यगानाद्यखिलैर्गीतगुणैर्युक्तं भीतशङ्कितादिदोषरहितम् । श्रितकमलाकुचे-

---

कीदृश ? धृतः क्षीराब्धिमन्थनावसरे मन्दरो गिरिविशेषो मन्थानदण्डभूतो येन तादृश ! । अनेन सामर्थ्यमुक्तम् । पुनः कीदृश ? श्रियो लक्ष्म्याः मुखमेव चन्द्र आह्लादकारित्वात्तस्य चकोर ! । अत्र लक्ष्मीमुखचन्द्राधरसुधापरमोत्कण्ठत्वेन भगवतश्चकोरत्वनिरूपणम् । अनेनापि रतिकौशलमेवोक्तम् । 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः' इत्यमरः । अनया सप्तपद्यापि नायकगुण उक्तः । नायकगुणस्तु ( शृं० ति० १।२३ )—'त्यागी कुलीनः कुशलो रतेषु विज्ञः कलावित्तरुणो गुणी धनाढ्यः । भव्यः क्षमावान्सुभगोऽभिमानी स्त्रीणामभीष्टस्त्विह नायकः स्यात् ॥' इति ॥ ७ ॥ कविः सर्वनायकोत्कृष्टं श्रीकृष्णं स्तुत्वा सर्वभक्तानां स्वस्यापि चाभीष्टं प्रार्थयते—तवेति । वयं तव चरणे पतिता इति भावय जानीहि । ननु मया तज्ज्ञातमेव, तादृशां भवतां किमिदं कर्तव्यमित्यत आह—कुरु इति । प्रणतेषु कुशलं विघ्नराहित्यं कुरु ॥ ८ ॥ श्रीजयदेवेति ।

---

पाठा०–१ 'जयदेवकवे···हरे' O. २ 'चरणे पतिताः' BP. ३ 'कुरुतामुदयं'. ४ '॰भीति' S.

पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेदस्वेदाम्बुपूरमनुपूरयतु प्रियं वः १०

त्यादि । मङ्गलं नाम छन्दः । तल्लक्षणम्—'मङ्गलं मङ्गलाख्येन छन्दसा तालसंयुतम् । विलम्बितलयोपेतमुत्सवे गीयते जनैः', 'एकारनामैः प्रतिपदं गद्यैश्चैव । मङ्गलमाहुरिदं सुधियः खलु युक्तम्' । तथा च संगीतराजे—'छन्दसा मङ्गलाख्येन खननं गद्यपद्ययोः । आलापश्च प्रतिपदं नानागमकपेशलः ॥ ध्रुवः प्रतिपदं रागो ललितस्ताल उच्यते । आदितालः स्वराश्चैताः प्रबन्धे ते प्रतिष्ठिताः ॥ स हरिविजयाख्यश्च मङ्गलाचार उच्यते' । इति हरिविजयमङ्गलाचारनामाष्टमः प्रबन्धः ॥ खिलेष्वष्टपदां धीरललितो नायकः शृङ्गारी वा । लक्षणमुक्तं प्राक् । जयदेवस्य रतेर्भावः ॥ ९ ॥

इदानीं श्रीकृष्णं क्रीडानिदानं वसन्तं दर्शयन्भक्तानभिनन्दति खङ्गादिकेन पूर्णेन वसन्तरागेण—पद्मापयोधरतटीति—अनुपूरयतु पूर्तिं नयतु । किम् ? प्रियं वाञ्छितम् । केषां ? वो युष्माकम् । किं कर्तृभूतम् ? उरो वक्षः । कस्य ? मधुसूदनस्य । किंभूतम् ? पद्मायाः पयोधरौ तयोस्तटी भृगू तयोः परिरम्भेण लग्नं सक्तं काश्मीरं कुङ्कुमं तेन मुद्रितं कृतमुद्रम् । एतेन स्तनयोः शैलत्वात्तच्छिखरालिङ्गनेन तयोरतिशयालिङ्गनव्याजेन जाता मुद्रा यस्मिंस्तत् । अत एव व्यक्तानुरागमिव प्रतीयमानानुरागमिव । अस्यानुरागो माऽन्यस्यां स्यादिति लक्ष्म्या मुद्रा दत्ता । अथवा,—नेदं कुङ्कुमं; किंतु हृदिस्थोऽनुरागो बहिर्भूत इव । किंभूतम् ? खेलन् अनङ्गखेदजातः सुरतश्रमजातः

---

श्रीजयदेवकवेः इदं उदितम् । पदमिति शेषः । कुशलं विभ्राड्विसं उज्ज्वलं गीतं गानं यस्य तादृशम् । 'शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वरं शिरसिगतं तथा स्थानविवर्जितम् ॥ विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालहीनं च गीतदोषान्विदुर्बुधाः ॥' ॥ ९ ॥ श्रीकृष्णनायकसामान्यगुणानुक्त्वा संप्रति नायकगुणान्कथयन्नाशीरूपं मङ्गलमाचरति—पद्मेति । मधुसूदनस्य उरो हृदयं वो युष्माकं वाञ्छितमनुपूरयतु संपूर्णं करोतु । कीदृशमुरः ? पद्मायाः लक्ष्म्याः पयोधरतटी स्तनप्रान्तस्तस्य परिरम्भे आलिङ्गने लग्नं यत्काश्मीरं कुङ्कुमं तेन मुद्रितमिव मुद्रा चिह्नविशेषस्तद्युक्तमिव । इदं मधुसूदनहृदयं ममैव, न त्वन्यस्येति ख्यापनाय लक्ष्म्या निजस्तनतटे लिप्तकाश्मीरमुद्रेव दत्तेति भावः । पुनः कीदृशम् ? खेलति क्रीडां कुर्वति अनङ्गे कामदेवे सति यः खेद आयासस्तेन यत्स्वेदाम्बु प्रस्वेदजलं तस्य पूरः प्रवाहो यत्र तादृशम् । एतेन चिरलिप्तस्य काश्मीरस्य शुष्कत्वेऽपि स्वेदसम्बन्धेन तस्य मुद्रायोग्यत्वमिति ध्वनितम् । कीदृशमिव ? व्यक्तानुरागमिव । व्यक्तः प्रकटीभूतोऽनुरागः स्नेहो यत्र तादृशमिव । अत्र लक्ष्मीविषयानुरागाधिक्यादभ्यन्तरे सम्यगवस्थाभावात्कुङ्कुमरागव्याजेन

वसन्ते वासन्तीकुसुमसुकुमारैरवयवै-
र्भ्रमन्तीं कान्तारे बहुविहितकृष्णानुसरणाम् ।

स्वेदाम्बुपूरो यत्र तत्तथा ॥ अत्रेदमाकूतम्—अयमालिङ्गति मां परं त्वनुरागो राधायामेवेति मुद्रार्थः । तदसूचि कविना—'राधामाधवयोः' इति पूर्वपद्ये । अत्र मुग्धा नायिका । कुशलो नायकः । वसन्ततिलका वृत्तम् । आशीर्वचो-नुप्रासालंकारौ उत्प्रेक्षा च । शृङ्गारो रसः । अत्र मधुसूदनस्य परमप्रेमा-स्पदकान्तोरःस्थलोपगूहनेन व्यक्तानुरागरूपकाश्मीरसंवलितस्य परमप्रीति-भाजनरसायद्भक्तानां श्रियानुपूरणमाशीर्वचनमुक्तं ततः सुतरामौचित्यमा-वहति । यदुक्तम्—'पूर्णार्थदातुः काव्यस्य संतोषितमनीषिणः । उचिता-शीर्वृपस्येव भवत्यभ्युदयावहा ॥' इति ॥ १० ॥

इदानीं भणितेषु मरिचावचूर्णना सा ( नूनं ) कटुरपि स्पृहावहेति योगमा-श्रित्य विप्रलम्भपूर्वको हि संभोगो रसिकजनरसनीयतामापद्यत इति कविना आद्यपद्ये कथाबीजत्वेन संभोगस्य यद्विप्रलम्भपूर्वकत्वं सूचितं तदेव प्रकटी-कुर्वन्कृष्णोत्कण्ठितां राधां काप्युत्तम्भितमुखेन हरिकथया प्रोत्साहयन्नाह—वसन्ते वासन्तीति । काचन सहचरी इदं वक्ष्यमाणं सरसं रसवत् राधामूचे उक्तवती । किंभूताम् ? वसन्ते ऋतौ भ्रमन्तं यथा स्यात्तथा कन्द-र्पहेतुज्वरजनितचिन्ताकुलतया चलद्राधाम् । कन्दर्पहेतुज्वरजनितचिन्ताकु-लत्वेन चलन्ती यातायातं कुर्वाणा बाधा यस्याः । चिन्ताकुले हि चेतसि बाधा

बहिर्निःसृत इति भावः । मुद्रा संजाता अस्येति तारकादित्वादितच् । 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः । 'स्त्रीस्तनाब्दौ पयोधरौ' इति च । 'परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्' इति च । 'काश्मीरं कुङ्कुमं प्रोक्तं टङ्क-पुष्करमूलयोः' इति विश्वः । अनेन सर्वदा लक्ष्म्या दृढानुरागकथनेन दाक्षिण्यरूपो नायकगुण उक्तः । तदुक्तं शृङ्गारतिलके( १।२६ )—'यो गौरवं भयं प्रेम सद्भावं पूर्वयोषिति । न मुञ्चत्यन्यचित्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा ॥' इति ॥ १० ॥ एतावद्ग्रन्थेनाभिधेयप्रयोजनकेलिवर्णनोपयुक्तनायकगुणप्रतिपादनपुरःसराणि मङ्ग-लानि विधाय कविः शृङ्गाररसप्रधानभगवत्केलिवर्णनं चिकीर्षुस्तत्संभोगापेक्षया विप्रलम्भस्योत्कृष्टत्वादादौ विप्रलम्भशृङ्गारवर्णनाय विरहोत्कण्ठितराधायाश्चरितानि वर्णयितुं प्रस्तावयति—वसन्त इति । संभोगापेक्षयात्र विप्रलम्भस्योत्कर्षं प्रति त्वालंकारिकाः—'संभोगो विप्रलम्भेन न विना पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान्रागोऽभिजायते' । इति । श्लोकार्थस्तु—काचित्सहचरी सखी वसन्ते सरसं यथा स्यादेवं राधामिदं वक्ष्यमाणमूचे उवाच । कीदृशीम् ? अवयवैरुपलक्षिताम् । कीदृशैरवयवैः ? वासन्तीकुसुमसुकुमारैर्माधवीलतापुष्प-वत्कोमलैः । पुनः कीदृशीम् ? कान्तारे महारण्ये भ्रमन्तीम् । तत्र हेतुगर्भविशेष-णमाह—बहुविहितेति । बहु वारंवारं विहितं कृतं कृष्णानुसरणमन्वेषणं यया

अमन्दं कन्दर्पज्वरजनितचिन्ताकुलतया
वलद्बाधां राधां सरसमिदमूचे सहचरी ॥ १ ॥

**वसन्तरागयतितालाभ्यां गीयते ॥ प्रबन्धः ॥ ३ ॥**

ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे ।

---

वाख्यायाति चेति प्रसिद्धम् । किंभूताम् ? बहु अनेकधा दूत्यादिना विहितकृष्णानुसरणां तदर्थमेव कान्तारे भ्रमन्तीम् । किंभूताम् ? वासन्तीकुसुमवन्माधवीलताकुसुमवत्सुकुमारैरवयवैरुपलक्षिताम् । वसन्ते हि माधवीकुसुमसुत्रिकं भवति । अतः कामोद्रेकसौकुमार्ये च साम्यम् । अत्र लुप्तोपमालंकारः । दक्षिणो नायकः । तल्लक्षणम्–'स्नेहलौल्यमवैषम्यवशतस्तुल्यतामियम् । नायिकास्वप्यनेकासु दक्षिणः स स्मृतो यथा' । विरहोत्कण्ठिता नायिका । 'उत्का भवति सा यस्याः संकेतं नागतः प्रियः । तस्याऽनागमने हेतुं चिन्तयन्त्याकुला यथा ॥' ( शृं. ति. १।७५) तस्या अभिलाषो नाम दशाविशेषो यथा–'व्यवसायो भवेद्यत्र बाढं तत्संगमाशया । संकल्पाकुलचित्तत्वात्सोऽभिलाषः स्मृतो यथा ॥' वासन्तीकुसुमसुकुमारैरित्यत्र लुप्तोपमालंकारः–'वादेर्लोपे समासे वा कर्माधारक्यचि क्यङि । कर्मकर्त्रोर्णमुली' इति । वृत्त्यनुप्रासः–'एकस्याप्यसकृत्परः' इति । शिखरिणीछन्दः—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' । वैदर्भी रीतिः । तस्या अत्रोपनागरिकेति संज्ञान्तरम् । यथा–'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते' इति । 'वलद्बाधाम्' इति पाठे 'वलङ् संवरणयोः' इत्यात्मनेपदी । वलकः परस्मैपदत्वं चिन्त्यम् ॥ १ ॥ अन्यत्रापि प्रयोगोऽप्यस्ति तथा । सावेवोत्तरश्रोदा वृष्णवान् पुनर्वलः ( ? ) । केवलाहिति । अमुमेवार्थं विशदयति झम्पातालेन ध्रुवद्वयेन विरामान्तेन–ललितेति । विशेषणसौकर्यार्थं पूर्वं ध्रुवपदं व्याख्यायते—विहरतीति । इह राधासखी सबाधां राधां विनोदार्थं श्रीकृष्णं प्रति प्रेरयति–हे सखि राधे !

---

तादृशीम् । अत्र हेतुगर्भविशेषणमाह—कंदर्पेति । कंदर्पज्वरेण जनिता या चिन्ता तत्कृता या आकुलता तया अमन्दमधिकं यथा स्यादेवं वलद्बाधां प्रवर्धमानपीडाम् । 'अवयवैः' इत्यत्र जटाभिस्तापस इतिवत् इत्थंभूतलक्षणे तृतीया । 'वासन्ती माधवीलता' इत्यमरः । 'कान्तारं वर्त्म दुर्गमम्' इति च । 'पीडा बाधा व्यथा दुःखम्' इत्यपि ॥ १ ॥ किमूचे इत्यत आह—ललितेति । गीतस्यास्य वसन्तरागः । रूपकैतालः । गीतार्थस्तु-हे सखि ! इह सरसवसन्ते

---

पाठा०–१ 'वलद्बाधां' C., A. २ '°रागे रूपकताले' BM., P.

---

टिप्प०–1 'वलेरात्मनेपदमनित्यं ज्ञापकात्' (का. सू. ५।२।६) इत्यत्र वामनेन स्फुटीकृतमस्य निरवद्यत्वम् । 2 तालक्षणम्—'लघुद्रुतौ यत्र तालो यतितालः स कथ्यते ।' इति संजीविनी । 3 रूपकतालक्षणं–'रूपके स्याद्द्रुतम्' इति संगीतरत्नाकरः–इति संजीविनी ।

विहरति हरिरिह सरसवसन्ते

नृत्यति युवतिजनेन समं सखि विरहिजनस्य दुरन्ते ॥ ध्रुवपदम् ॥२॥

उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ।

---

सर चल । यं हरिं त्वं विलोकयसे स हरिरिह वृन्दावने वसन्ते वसन्तसमये विहरति । क सति ? समं सशोभं साकं युवतिजने नृत्यति सति । किंभूते वसन्ते ? चलनार्थहेतुगर्भं विशेषणम् । विरहिजनस्य दुरन्ते न इति न अपि तु दुरन्ते एवेति काकोभयदर्शनम् । अथवा,—जनो जीवनं तेन समं दुरन्ते । जीवनं वसन्तश्चोभयं विरहिणां दुःखप्राप्यं तस्मिन् । अथवा,—सरसवसन्त इति पदम् । सरसः साभिलाषः स चासौ वसन्तश्च तस्मिन् । विहरति युवतिजनेन समं नृत्यति च । चकारोऽध्याहार्यः[1] इति ध्रुवपदम् ॥ ललितेति । ललितलवङ्गलतापरिशीलनेन कोमलो मलयमारुतो यत्र वसन्त इति । एतेन शीतो मन्दः सुरभिश्चेति वायोस्त्रैविध्यमुक्तम् । अत्र लवङ्गलतासमीरयोर्नायिकात्वनायकत्वेनोद्दीपनविभावत्वमुक्तम् । पुनः किंभूते वसन्ते ? मधुकरनिकरेण करम्बितैर्मिश्रितैः कोकिलैः कूजितः शब्दितः कुञ्ज एव कुटीरोऽल्पा कुटी यत्र

---

शृङ्गाररसप्रधाने हरिः कृष्णो विहरति क्रीडति । क्रीडाप्रकारमाह—नृत्यतीति । युवतिजनेन सह नृत्यति । कीदृशे वसन्ते ? विरहिजनस्य वियोगिनो जनस्य दुरन्ते दुःखेनान्तः समाप्तिर्यत्र स तस्मिन् । अयं वसन्तो विरहिणीदाहको न तु युवतिभिः सह क्रीडतः कृष्णस्य । त्वं विरहिणी यदि कृष्णं नानुसरिष्यसि तदा स तवापि दुरन्तो भविष्यतीति भावः । इदं च ध्रुवपदम् । 'समं सह' इत्यमरः । वसन्तस्य सरसतामाह—ललितेति । ललिता मनोहरा या लवङ्गलता तस्याः परिशीलनेन संपर्केण कोमलो मृदुलो मलयसमीरो मलयाचलसंबन्धी वायुर्यत्र तादृशे । पुनः कीदृशे ? मधुकरनिकरेण भ्रमरसमूहेन करम्बिता मिश्रिता ये कोकिलास्तैः कूजितः शब्दयुक्तः कृतः कुञ्ज एव कुटीरोऽल्पकुटी यत्र तादृशे । 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमरः । 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः' इति च । 'स्तोमौघनिकरव्रातवारसंघातसंचयाः' इत्यपि । 'मिश्रितेऽपि करम्बितम्' इति विश्वः । 'अल्पा कुटी कुटीरः स्यात्' इति च ॥ १ ॥

---

टिप्प०—1 एतस्य वसन्तरागः, यतितालः । तल्लक्षणम्—'शिखण्डिबर्होच्चयबद्धचूडः पुष्णन् पिकं चूतलतांकुरेण । भ्रमन्मुदा यासमनङ्गमूर्तिर्मत्तो मतङ्गस्य वसन्तरागः ॥'—इति पद्य० । 2 अत्र चानेनाभिलाषचिन्तारूपे दशे कथिते । तल्लक्षणम्—'अभिलाषः स्पृहा तत्र कान्ते सर्वाङ्गसुन्दरे । दृष्टे श्रुते वा तत्रापि विस्मयानन्दसाध्वसाः ॥' इति यथा (४।५३) दशरूपके । 'कथं स वल्लभः प्राप्यः किं कुर्यां तस्य सिद्धये । कथं मनोरसो भवेद् इति चिन्ता मता यथा ॥' (१।८) शृङ्गारतिलके—बाल० ।

अलिकुलसंकुलकुसुमसमूहनिराकुलबकुलकलापे ॥ विहरति० ॥ ३ ॥
मृगमदसौरभरभसवशंवदनवदलमालतमाले ।
युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥ विहरति० ॥ ४ ॥
मदनमहीपतिकनकदण्डरुचिकेशरकुसुमविकासे ।

---

वसन्ते ॥ २ ॥ उन्मदमदनेति । किंभूते वसन्ते ? उद्धतो मदमदनो हर्षकामौ यत्र । पूर्वं भूतो मनोरथो यस्य पथिकवधूजनस्य स तथा तेन जनितो विलापो यत्र वसन्ते । उद्रिक्तस्मरजनितमनोरथपथिकवधूजनस्य जनितो विलापो येन । अथवा उत्सुकमदनमनोरथेन पथिकवधूनां जनितो विलापो यत्र वसन्ते । अलिकुलव्याप्तकुसुमसमूहेन निराकुलो बकुलानां कलापः संहतिर्यत्र । बकुला एव कलापस्तूणीरो वा स्मरशरधिः । 'कलापो बर्हतूणयोः' इत्यमरः ॥ ३ ॥ मृगमदसौरभेति । मृगमदसौरभस्य रभसेन सहसा वशंवदा अनुकारिणी तद्गन्धा नवदलानां माला येषां तादृशास्तमाला यत्र वसन्ते । ये तदामोदानि नवदलानि मालन्ते धारयन्तीति । युवजनेति । युवजनस्य हृदयविदारणाय मनसिजस्य नखस्य रुचिरिव रुचिर्येषां ते तादृशाः किंशुकानां जालानि कोरका यत्र वसन्ते । अत्र कामस्य नखरायुधत्वं कविसमयेऽप्रसिद्धम् ॥ ४ ॥ मदनमहीपतीति । अत्रालापः । कामराजस्य हैम-

---

वसन्तस्य दुरन्ततामाह—उन्मदेति । उन्मद उद्भूटो यो मदनः स एव मनोरथ-दष्टः पथिकवधूजनानां तैर्जनितः कृतो विलापो यस्मिंस्तादृशे । पुनः कीदृशे ? अलिकुलैर्भ्रमरसमूहैः संकुलो व्याप्तो यः कुसुमसमूहस्तेन निराकुलो निःशेषेणाकुलो बकुलकलापः केसरसमूहो यत्र तादृशे । यद्वा,-तादृशो बकुल एव कलापो भूषणं यत्र तादृशे । 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः ॥ ३ ॥ पुनः कीदृशे ? मृगमदेति । मृगमदस्य कस्तूरिकायाः यः सौरभरभसः सौरभवेगस्तस्य वशंवद आत्मन्यायत्ततावादी नवदलमालतमालो नूतनपत्रपङ्क्तिर्यस्य एतादृशस्तमालो यत्र तस्मिन् । पुनः कीदृशे ? युवजनानां तरुणपुरुषाणां हृदयं विदारयन्तीति युवजनहृदयविदारणास्तादृशाः ये मनसिजस्य कामस्य नखास्तेषामिव रुचिर्दीप्तिर्येषां तादृशा ये किंशुकाः पलाशकुसुमानि तेषां जालं समूहो यत्र तादृशे । यद्वा,-तादृशानि किंशुकजालानि पलाशकलिका यत्र तादृशे । अत्र पलाशपुष्पस्य वक्रत्वेनारक्तत्वेन हृदयविदारणाद्रुधिरलिप्तमिव मनसिजनखस्य सादृश्यं बोध्यम् । 'मृगनाभिर्मृगमदः कस्तूरी च' इत्यमरः । 'रभसो वेगहर्षयोः' इति च । 'कामः पञ्चशरः स्मरः । शंबरारिर्मनसिजः' इति च । 'रुचिर्मयूखे शोभायामभिष्वङ्गविकासयोः' इति विश्वः । 'पलाशे किंशुकः स्मृतः' इति च । 'जालं गवाक्ष आनाये क्षारके दम्भवृन्दयोः' इति विश्वः ॥ ४ ॥ पुनः कीदृशे ?

---

टिप्प०—1 केचित्तु—हरिरिह सरसवसन्ते युवतिजनेन समं विहरति नृत्यति च—इति व्याकुर्वन्ति, तत्तु राधाभिसाराय सख्याऽवश्यमेव हेतुकथनान्न संगच्छते । ननु प्रथमानुरागः स्यात्,—सोऽपि न घटते; पूर्वक्रीडानुवर्णनात् । वक्ष्यति च—'रासे हरिमिह विहितविलासम् । स्मरति मनो मम कृतपरिहासम्' इति । अतोऽत्र कृतं व्याख्यानमेव सिद्धम्—इति दीपिका ।

मिलितशिलीमुखपाटलिपटलकृतस्मरतूणविलासे ॥ विहरति० ॥५॥
विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ।
विरहिनिकृन्तनकुन्तमुखाकृतिकेतकदन्तुरिताशे ॥ विह० ॥ ६ ॥
माधविकापरिमलललिते नवमालिकयातिसुगन्धौ ।
मुनिमनसामपि मोहनकारिणि तरुणाकारणबन्धौ ॥ विह० ॥ ७ ॥

---

दण्डच्छत्रसंनिभं बकुलकेसरपुष्पं तस्य विकासो यत्र । अत्र केवलकनकदण्डस्य छत्रेऽवाचकत्वान्महीपतिशब्दसाहचर्याद्विरोधः । अथवा हेमदण्डरुचीनि केसराणीति योज्यम् । महीपतेरग्रे कनकवेत्रधारिणो भवन्ति । मिलितेति । संगतशिलीमुखैः पाटलपटलैः पाटलाकुसुमसमूहैः । अथवा पाटलिपटलेति पाठः । कृतः स्मरशरधिविलासोऽनुकारो यत्र । शिलीमुखा भ्रमरा बाणाश्च । 'अलिबाणौ शिलीमुखौ' इत्यभिधानात् ॥ ५ ॥ विगलितेति । लज्जैव लज्जितम् । भावे क्तः । गतलज्जजगदवलोकनेन तरुणैः करुणैः कृतः कुसुमविकासव्याजेन हासो यत्र । विरहिनिकृन्तनकुन्तमुखाकारैः केतकैर्दन्तुरिता विषमीकृता आशा दिशो यत्र । निकृन्तनमिति चिन्त्यम् ॥ ६ ॥ माधविकापरिमलेति ।

---

मदनेति । मदन एव महीपती राजा तस्य यः कनकदण्डः सुवर्णघटितदण्डयुक्तच्छत्रं तस्येव रुचिर्यस्यैतादृशस्य नागकेसरपुष्पस्य विकासः प्रकाशो यत्र तादृशे । पुनः किंविशिष्टे ? मिलिताः शिलीमुखा एव बाणा यस्मिंस्तादृशं यत्पाटलिपटलं पाटलापुष्पसमूहस्तेन कृतः स्मरतूणस्य कंदर्पतूणीरस्य विलासश्चेष्टितं यत्र तादृशे । अत्र परमर्मव्यथाजनकत्वेन भ्रमराणां बाणसाम्यम् । 'चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः' इत्यमरः । 'अलिबाणौ शिलीमुखौ' इति च । 'समूहे पटलं स्मृतम्' इति च । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इति च ॥ ५ ॥ पुनः कीदृशे ? । विगलितेति । विगलितं लज्जितं लज्जा यस्य जगतः प्राणिगणस्यावलोकितेन दर्शनेन तरुणकरुणैर्नवकरुणवृक्षैः पुष्पविकासव्याजेन कृतो हासो यत्र तादृशे वसन्ते । अत्र हास्यरसस्य श्वेतत्वात्पुष्पविकासेन साम्यम् । यदाह भरतः—'श्वेतो हासः प्रकीर्तितः' इति । यद्वा,–विगलितलज्जितानां विप्रयोगिजनानामवलोकितैस्तरुणैरर्थादवियोगिभिः करुणं करुणरससहितं यथा स्यादेवं कृतो हासो यत्र एतादृशे हासे । विरहिणो वराकाः कष्टं प्राप्नुवन्तीति करुणां लज्जां हित्वा विलपन्तीति च हासस्तेषामिति भावः । बाला स्थानभिज्ञा एव वृद्धाः परप्रत्ययेऽपि कृतसंवरणाः अतस्तरुणेत्युक्तम् । पुनः कीदृशे वसन्ते ? विरहिणां वियोगिनां निकृन्तनाय विदारणाय कुन्तमुखाकृतिः कुन्त आयुधविशेषस्तस्य मुखमग्रभागस्तस्येवाकृतिर्यस्य तादृशं यत्केतकं तेन दन्तुरिता व्याप्ता आशा दिशो यस्मिंस्तादृशे वसन्ते । लज्जितेऽत्रावलोकितेऽत्रापि च नपुंसके भावे क्तः । 'करुणस्तु रसे वृक्षे कृपायां करुणा मता' इति विश्वः । 'प्रासस्तु कुन्तः'

---

पाठा०—१ 'पाटलिपटल°' P., D., C. २ '°दवलोकिततरुण°' BM. ३ '°केतकि°' BM., B., C. ४ 'नवमल्लिकया'; 'नवमालतिजाति' BM., D. 'मालतिजातिसुगन्धौ' B.

स्फुरदतिमुक्तलतापरिरम्भणमुकुलितपुलकितचूते ।
वृन्दावनविपिने परिसरपरिगतयमुनाजलपूते ॥ विह० ॥ ८ ॥
श्रीजयदेवभणितमिदमुदयति हरिचरणस्मृतिसारम् ।
सरसवसन्तसमयवनवर्णनमनुगतमदनविकारम् ॥ विह० ॥ ९ ॥[1]

---

किंभूते वसन्ते ? वासन्त्याः परिमलेन गन्धविशेषेण ललिते मनोहरे । पुनः किंभूते ? नवमालिकया जात्यातिसुगन्धौ । पुनः किंभूते ? मुनिमनसामपि मोहनकारिणि व्यामोहकारके तरुणानां का कथेति । सुरतार्थं प्रेरके वा । पुनः किंभूते ? तरुणानामकारणबन्धौ निसर्गमित्रे । वसन्ते हि कामिन्यः स्वयमेव मानं त्यजन्ति ॥ ७ ॥ स्फुरदतिमुक्तलतेति । किंभूते वसन्ते ? स्फुरन्त्या-श्चलन्त्या अतिमुक्तलताया वासन्त्याः परिरम्भणेन मुकुलितः पुष्पितः पुलकितः जातरोमाञ्चश्च चूतः । अत्र पुष्पाणि रोमाञ्चेनोपमीयन्ते । अनेन सात्त्विकभावो दर्शितः । वृन्दावनेति । अत्र पूर्वं ध्रुवपदे इह वने हरिर्विहरतीत्यस्पष्टा एकवाक्यत्वात् विहाराधेयत्वे वृन्दावनशब्दो व्याख्यातः । संप्रति वसन्तविशे-षणत्वेन व्याक्रियते । किंभूते वसन्ते ? वृन्दावनविपिने । वृन्दमवतीति वृन्दावनं तद्विपिनं यस्मिन्स तथा तस्मिन् परिसरे पर्यन्तभुवि परिगतं यमुनाजलं तेन पूते ॥ ८ ॥ श्रीजयदेवभणितमिति । तेनेति मङ्गल-

---

इत्यमरः । 'निम्नोन्नततया व्याप्ते दन्तुरं कथ्यते बुधैः' इति धरणिः । 'आशा तृष्णादिशोः' इति विश्वः । 'कृती छेदने' इति हलन्तसंज्ञकोऽप्यस्तीति केचित् । तस्य युट्प्रत्ययान्तस्य निकृन्तनमिति प्रयोगः साधुः । कश्चित्तु 'केतकिदन्तुरिताशे' इति पाठः । 'सर्पाकादौ स्त्रीकृतो ह्रस्वः क्वापि' इत्यत्र कविवचनस्य लक्ष्यानुरोधार्थत्वाद्ध्रस्वकेतकीशब्देन समर्थनीयम् ॥ ६ ॥ माधविकेति । स्पष्टम् । सा मुनिमनोमोहनकारिणी । किमन्येषां वक्तव्यमिति भावः । पुनः कीदृशे ? तरुणानां विलासियुवजनानामकारणबन्धौ स्वाभाविकमित्रे । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इति ॥ ७ ॥ कीदृशे ? स्फुरदिति । स्फुरन्ती कम्पमाना शोभमाना वा याऽतिमुक्तलता तस्याः परिरम्भणेन मुकुलितं मञ्जरीयुक्तं तदेव पुलको रोमाञ्चः । रोमाञ्चकथनेनाचेतनयोरपि कामचेष्टा कथिता । तेन च वसन्तस्यातिदुरन्तत्वं कथितम् । अतिशयेन मुक्तानामपि परिरम्भणोत्सुकत्वेति 'अतिमुक्त'पदेन कथितम् । एतावता वसन्तस्य सरसता दुरन्तता चोक्ता । संप्रति क्रीडायाः स्थानविशेषमाह—वृन्दावनेति । वृन्दावननाम्नि विपिने वने हरिर्वि-हरतीत्यन्वयः । कीदृशे विपिने ? परिसरे समीपप्रदेशे परिगतेन सर्वतोगतेन यमुनाजलेन पूते पवित्रे । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता' इत्यमरः । मुकुलं करोति तदाचष्टे । णिजन्ताद्भावे क्ते सति मुकुलितमिति बोध्यम् । पश्चा-न्मुकुलितमेव पुलकः संजातोऽस्येति तारकादित्वादितच् । 'आम्रश्चूतः' इत्यमरः । 'पर्यन्तभूः परिसरः' इत्यपि ॥ ८ ॥ संप्रति गीतार्थमुपसंहरति । प्रेक्षावत्प्रवृत्त्यर्थं

---

पाठा०—1 'इति श्रीगीतगोविन्दे तृतीयः प्रबन्धः' P., D.

दरविदलितमल्लीवल्लिचञ्चत्पराग-
प्रकटितपटवासैर्वासयन्काननानि ।
इह हि दहति चेतः केतकीगन्धबन्धुः
प्रसरदसमबाणप्राणवद्गन्धवाहः ॥ १० ॥[2]

---

वाचकम् । ततः पाटाबाणक्षरोत्तरः । ततः स्वरः षड्जादिः । इदं श्रीजयदेवभणितं सरसवसन्तसमयवर्णनमुदयति उदयं प्राप्नोति सर्वोत्कृष्टत्वेन वर्तते । सरसं शृङ्गाररसयुक्तं वसन्तकालीनवनवर्णनं यत्र । सर्वोत्कृष्टत्वे हेतुमाह । हरिचरणस्मृतिरेव सारं यत्र । वा हरिचरणस्मृत्या हेतुभूतया सारम् । अथवा हरिचरणयोः स्मृतिश्चिन्तनं सारमुत्कृष्टं यत्र । सरस-वसन्तत्वे हेतुमाह । अनुगतो मदनविकारो यत्र येन वा अनुगतोऽनुस्यूतः ॥ अस्यामष्टपद्यां जातिरलंकारः । मध्या नायिका । गुर्जरीरागेण रूपभाषिणा । दक्षिणो नायकः । तल्लक्षणं प्रागुक्तम् । विप्रलम्भाख्यः शृङ्गारो रसः । लयो नाम छन्दः । तल्लक्षणम्—'मुनियगणैर्लयमामनन्ति तज्ज्ञाः' इति । तदुक्तं छन्दश्चूडामणौ चलय इति । विप्रलम्भविभावप्रसङ्गाद्वायुं वर्णयति—'रचितो गद्यपद्याद्यैर्वसन्ते पार्थिवोत्सवे । वसन्तरागे झम्पाख्यताले मध्यलयाश्रिते ॥ गमकालप्तिभूयिष्ठः पूर्णकल्पः प्रकीर्तितः । पूतो पुनस्तेन पाटस्वराश्रित-विराजितः ॥ माधवोत्सवः कमलाकरनामा प्रबन्धराट्' ॥ ९ ॥

इति माधवोत्सवकमलाकरनामा तृतीयः प्रबन्धः ॥

दरेति । इह वने वसन्ते वा गन्धवाहो वायुश्चेतो दहति । अर्थाद् विरहिणाम् । किंभूतं चेतः ? प्रसरत्, अर्थान्मनोरथं प्रति । पुनः किंभूतम् ? असमबाणप्राणवत्कामस्य जीवितमिव । अथवा प्रसरदसमबाणप्राणव-

---

समभिते उत्कर्षमाह—श्रीजयदेवेति । जयदेवकवेरिदं भणितं गीतमुदयति तत्र हेतुः—हरिचरणयोः स्मृतौ स्मरणे सारं श्रेष्ठं, हरिचरणस्मृतिरेव सारो यत्र तत् रसमयसंबन्धिनो वनस्य वर्णनं यत्र । अत एव अनुगतमदनविकारं अनुगतः संप्राप्तो मदनस्य विकारो यत्र तत् तादृशम् ॥ ९ ॥ संप्रति वसन्तकालीनवायोरपि विरहिजनसंतापकारित्वमाह—दरेति । इह हि अस्मिन्नेव वसन्ते गन्धवाहो वायुश्चेतो दहति । अर्थाद्विरहिणाम् । किं कुर्वन् ? काननानि वनानि वासयन्सुर-भीकुर्वन् । कैः ? दरं ईषद्विगलिता विकसिता मल्लीवल्लिर्मल्लिकालता तस्याः सञ्चरणाच्चञ्चन्तः प्रसरन्तो ये परागाः पुष्परेणवस्त एव प्रकटिताः पटवासाः पिष्टातकास्तैः । कीदृग्गन्धवाहः ? केतकीगन्धबन्धुः केतकीपुष्पसौरभबन्धुः । पुनः कीदृशः ? प्रसरतः प्रतिदिशं संचरतोऽसमबाणस्य कामस्य प्राणवत्प्राणसदृशः । यद्वा,—प्रसरता असमबाणेन प्राणवान् शक्तिसंपन्नो यो गन्धवाह इत्येकं पदम् ।

---

पाठा०—1 'विगलित' RM.,

टिप्प०—1 'अद्युत्सङ्ग···।···पिकानां गिरः ॥' S.,D. 2 '°वायुः' S.

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलरवैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथंकथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥ ११ ॥

गन्धवाह इति पदम् । प्रसरता असमबाणेन प्राणवांश्चासौ गन्धवाहः । वा प्रसरन्थोऽसावसमबाणः तस्य प्राणयजीवितमिव । प्राणवतो वा । किंभूतो वायुः ? केतकीगन्धसहचरः । किं कुर्वन् ? काननानि वासयन् । कैः ? ईषद्विकसितमल्लीनां जातीलतानां चलन्तो गच्छन्तो ये परागास्तैः प्रकटिता ये पटवासाः वासचूर्णानि तैः । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति मालिनीछन्दः । अत्र समासोक्तिवर्णानुप्रासोपमालंकाराः । विप्रलम्भाख्यः शृङ्गारो रसः । पाञ्चाली रीतिः । अत्र विरहिहृदयविदारणपटीयसः पवनस्य त्रैविध्येन चेतोदाहकत्वोपन्यासेन युवतिजनस्य आत्मसात्कर्तृत्वेन परस्परप्राणवत्त्वमुदितं तदौचित्यसरणिसागरप्लवनतरणित्वमातनोतितराम् । यदभाणि क्षेमेन्द्रेण( औ. वि. ११ ) 'तिलकं बिभ्रती सूक्तिर्भात्येकमुचितं पदम् । चन्द्राननेव कस्तूरीकृतं श्यामेव चान्दनम् ॥' इति ॥ १० ॥ उन्मीलदिति । पथिकैरमी वसन्तसमयवासराः कथंकथमिव महता कष्टेन नीयन्ते । कैः कृत्वा ? ध्यानावधानक्षणे प्रियानुचिन्तनैकाग्रताप्रस्तावे प्राप्तो यः प्राणसमासमागमरसोऽनुरागस्तस्य प्रकटीभावैः । अथवा रसस्योल्लासो येष्विति पथिकविशेषणम् । किंभूता वासराः ? उन्मीलन्योऽसौ मधुगन्धः पुष्परसगन्धस्तत्र लुब्धा ये मधुपा भ्रमरास्तैर्व्याधूता आन्दोलिता ये चूताङ्कुरास्तेषु क्रीडन्तो ये कोकिलास्तेषां काकल्युपलक्षितकलरवैरुद्गीर्ण उत्पादितः कर्णज्वरो यैस्ते तथा । कोकिलो वसंन्तमासे पञ्चमं वदतीति स्थितिः । अत्र च चूतधूननेन मधुपे रोषावेशाद्विषादकाकलीमुक्तवानित्याशयः । अथवा कथंकथमपीति ध्यानेनेत्यादिना योज्यम् । ततो विरहिणो ध्यानवस्थितचित्तत्वाद्यातुमपि न शक्नुवन्ति । शार्दूलविक्रीडितं छन्दः । अत्र काव्यलिङ्गमलं-

'ईषदर्थे दरोऽव्ययम्' इति विश्वः । 'परागः पुष्परजसि' इति च, 'पिष्टातः पटवासकः' इत्यमरः । 'काननं वनम्' इति च । 'असवः प्राणाः' इत्यपि । 'शक्तिः पराक्रमः प्राणः' इति च । 'गन्धवाहानिलाशुगाः' इति च ॥ १० ॥ संप्रति वसन्तदिवसानां दुरन्तत्वमाह—उन्मीलदिति । अमी वसन्तसंबन्धिनो वासरा दिवसाः पथिकैः कथंकथमपि महता कष्टेन नीयन्ते समाप्यन्ते । कीदृशा वासराः ? उद्गीर्णाः प्रकटिताः कर्णज्वराः श्रोत्रसंतापा येषु तादृशाः । कैः ? उन्मीलन्ति प्रकटीभवन्ति यानि मधूनि गन्धाश्च तेषु लुब्धा लोलुपा ये मधुपा भ्रमरास्तैर्व्याधूताः कम्पिता ये चूताङ्कुरा आम्रमुकुलानि तेषु क्रीडतां कोकिलानां

पाठा०-१ 'कलकलैः' RM. B.

अनेकनारीपरिरम्भसंभ्रमस्फुरन्मनोहारिविलासलालसम् ।
मुरारिमारादुपदर्शयन्त्यसौ सखी समक्षं पुनराह राधिकाम् ॥ १ ॥

---

कारः । गौडीया रीतिः । विप्रलम्भाख्यश्रृङ्गारो रसः । अत्र कामोद्दीपनविभावैः कोकिलकाकलीकलरवाद्यैः संजनितकर्णज्वरत्वेन प्राणसमसमागमाकाङ्क्षित्वेन विरहासहिष्णुत्वापेक्षया यद्वासराणां कर्मगतं बहुत्वमापादितं तत्सुतरामौचित्यकोटिमाटीकते ॥ ११ ॥

अनेकेति । असौ सखी राधां पुनर्वक्ष्यमाणमाह । किं कुर्वती ? आरात्समीपे समक्षं प्रत्यक्षं यथा स्यात्तथा मुरारिं दर्शयन्ती दृष्टिपथमवतारयन्ती । अनेकनारीणां परिरम्भसंभ्रमेण त्वरया स्फुरन्तो मनोहारिणो ये विलासास्तेषु लालसा यस्य, तेषु लालस उत्सुको वा । 'वदन्ति वंशस्थमिदं जतौ जरौ' इति वर्णसाम्यमनुप्रासः । दक्षिणो नायकः ॥ १ ॥ तदेव गीतेन दर्शयति झम्पातालेन—चन्दनचर्चितेति । पदानां बाहुल्यात्पूर्वं ध्रुवपदं व्याक्रियते—हरिरिति । हे राधे हे विलासिनि ! इह मुग्धवधूनिकरे हरिर्विलसति । कीदृशे निकरे । केलिपरे । पुनः कीदृशे ?.विलासिनि विलासो विद्यते यस्य । एकस्यैवोभयविशेषणत्वम् । इति ध्रुवः । अथ पदानि । चन्दनेत्यादि । चन्दनेन चर्चितमनुलिप्तम् । चर्चिस्तु यद्यप्यध्ययने वर्तते तथापि धातूनामनन्तार्थत्वादनुलेपे वर्तत इति । तथा चोक्तम्—'क्रियावाचि समाख्यातुं प्रसिद्धार्थप्रदर्शिनः । प्रयोगतोऽनुमन्तव्या अनेकार्था हि धातवः ॥' इति । नीलं कलेवरं शरीरं यस्य, पीतं वसनं यस्य, वनमाला विद्यते यस्य, ततः

---

काकल्योऽव्यक्तमधुरध्वनयस्ताभिः कृता ये कलकलाः कोलाहलास्तैः । केन प्रकारेण नीयन्त इत्याह—ध्यानेति । ध्याने स्वप्रियचिन्तने यदवधानं तत्परता तेन क्षणं प्राप्तो यः प्राणसमाया जीवतुल्यायाः कान्तायाः समागमरूपो रसलसस्तादुत्पन्ना ये उल्लासा उत्साहास्तैः । 'काकली तु कले सूक्ष्मे' इति, 'कोलाहलः कलकलः' इति च ॥ ११ ॥

अनेकेति । असौ सखी राधिकां पुनराह पुनरुवाच । किं कुर्वती ? आराद्दूरतः समक्षं प्रत्यक्षं मुरारिमुपदर्शयन्तीति । कीदृशम् ? अनेकासां नारीणां परिरम्भसंभ्रमेणालिङ्गनादरेण स्फुरन् यो मनोहारिविलासस्तस्य लालसौत्सुक्यं यस्य तादृशम् । 'संभ्रमाख्यमिच्छन्ति भयमुद्वेगमादरम्' । 'सोऽत्यर्थं लालसा द्वयोः' इत्यमरः । 'आराद्दूरसमीपयोः' इति च ॥ १ ॥ तदेव गीतेन कथयति—चन्दनेति । गीतस्यास्य रामकरी रागः । तालश्च रूपकः ।ताललक्षणं प्रागेवोक्तम् । गीतार्थस्तु हे विलासिनि विलासशीले ! वृन्दावने मुग्धवधूनिकरे सुन्दरवधूनिचये हरिर्विलसति क्रीडति । कीदृशे वधूनिकरे ? केलिपरे क्रीडापरायणे । अत्र मुग्धवधूनिकरे हावभावाद्यनभिज्ञे स्त्रीचये केलिपरे सामान्यक्रीडापरायणे विलसतीति ध्वनेरर्थः । तथा च हावाद्यभिज्ञां त्वां विना सकलकलाभिज्ञस-

रामकरीरागयतितालाभ्यां गीयते ॥ प्रबन्धः ॥ ४ ॥

चन्दनचर्चितनीलकलेवरपीतवसनवनमाली ।
केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली ॥ २ ॥
हरिरिह मुग्धवधूनिकरे विलासिनि विलसति केलिपरे ॥ ध्रुव० ॥
पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ।
गोपवधूरनुगायति काचिदुदञ्चितपञ्चमरागम् ॥ हरि० ॥ ३ ॥

---

कर्मधारयः । अथवा चन्दनेन चर्चिते नीलकलेवरे पीतवसने वनमालाश्च विद्यन्ते यस्यासौ तथा । चन्दनेन चर्चिते ये नीलकलेवरपीतवसने तयोर्वनं संसक्तिरचनाविशेषस्तं मलते धारयतीति स तथा । केल्या चलन्ती ये मणिकुण्डले ताभ्यां मण्डितं गण्डयुगं यस्य स तथा । तथा स्मितशाली स्मिताढ्यः ईषद्धसितयुक्त इति द्वे पदे । अथवा द्वे पदे कृत्वा कर्मधारयः । अथवा ईदृशं गण्डयुगं च स्मितं च ताभ्यामाढ्यः । अथवा गण्डयुगे स्मिताढ्य इति तन्मात्रेणैवानुमेयं स्मितं नास्य प्रसारणेन ॥ २ ॥ अथ परस्परं गोपिकानां केलिचेष्टितमाह—पीनपयोधरेति । काचिद्गोपवधूर्हरिं गायन्तं हरिमनुगायति वैसादृश्येन गायति । किं कृत्वा ? सरागं साभिलाषं तमेव हरिं परिरभ्य । किंभूता ? पीनपयोधरभारभरेणोपलक्षिता । अथवा विपुलस्तनभारातिशयेन परिरभ्य । किंभूतं हरिम् ? सरागं तदालिङ्गनसाभिलाषम् । पुनः किंभूतम् ? उदञ्चित आ तारावच्चोर्ध्वं

---

हरेर्विलासो न शोभत इति भावः । 'मुग्धः सुन्दरमूर्खयोः' इति विश्वः । विलासो हावविशेषस्तल्लक्षणं तु भरते—'स्थाने यानासने वापि नेत्रवक्त्रादिकर्मणा । उत्पाद्यते विशेषो यः स विलासः प्रकीर्तितः ॥' इति । एतच्च ध्रुवपदम् । कीदृशो हरिः ? चन्दनेन चर्चिते नीलकलेवरे श्यामशरीरे पीतं वसनं वस्त्रं वनमाला च यस्य तादृशः । पुनः कीदृशः ? केलिषु चलती कम्पमाने मणियुक्ते कुण्डले ताभ्यां मण्डितमलंकृतं गण्डयुगं कपोलयुग्मं यस्य तादृशः । पुनः कीदृशो हरिः ? स्मितेन ईषद्धास्येन शाली शोभमानः । 'अथ कलेवरम् । गात्रं वपुः संहननम्' इत्यमरः । 'गण्डौ कपोलौ' इत्यपि । स्मितलक्षणं तु भरते—'ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः । अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥' इति ॥ २ ॥ गोपीनां सौन्दर्यविलासानभिज्ञत्वं च कथयन्नेव केलिमाह—पीनेति । काचिद्गोपवधूः पीनपयोधरभारभरेण पीनस्तनगौरवातिशयेन सरागं सानुरागं यथा स्यादेवं हरिं परिरभ्यालिङ्ग्य उदञ्चित ऊर्ध्वमञ्चितः पञ्चमाख्यो रागो यत्र एवं यथा स्यात्तथानुगायति अनु पश्चाद्धरेर्गानानन्तरं गायति अत्र गोप्याः सौन्दर्यं पीनपयोधरेत्यादिना प्रतिपादितम् । अवैदग्ध्यं

---

पाठा०–१ 'रामगिरि°' C. २ '°रूपक°' BM., S., P.

कापि विलासविलोलविलोचनखेलनजनितमनोजम् ।
ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥ हरि० ॥ ४ ॥
कापि कपोलतले मिलिता लपितुं किमपि श्रुतिमूले ।
चारु चुचुम्ब नितम्बवती दयितं पुलकैरनुकूले ॥ हरि० ॥ ५ ॥

---

गीतः पञ्चमरागो येन वा, उदञ्चितः पञ्चमस्वरोपलक्षितो रागो येन वा, उदञ्चितः पञ्चमरागोऽनुरागो येन; अथवा उदञ्चितपञ्चमरागं यथा स्यात्तथेति गानक्रियाविशेषणम् । शृङ्गारे हि पञ्चमभूयिष्ठस्य गानस्य प्राधान्यात्, अथवा उदञ्चितहृद्यरागं यथा स्यात्तथा ॥ ३ ॥ कापि विलासेति । कापि मुग्धवधूरधिकं सातिशयं यथा स्यात्तथा मधुसूदनवदनसरोजं ध्यायति । अधिकं सुखमधिकृत्य वा । किंभूतम् ? विलासेन चेष्टाविशेषेण विलोले चञ्चले ये विलोचने तयोः खेलनेनावर्तनेन जनित उत्पादितो मनोजो येन । अत्र सरोजे योजितो मधुसूदनशब्दश्चौचितीमावहति । 'सूद क्षुतिहत्योः' इति मुखसरोजान्मधु स्रवतीत्यतिशयाधानम् ॥ ४ ॥ कापि कपोलतले इति । कापि नितम्बवती दयितं श्रीकृष्णं कपोलतले गण्डप्रदेशे चारु मनोहरं यथा स्यात्तथा चुचुम्ब । किंभूता ? सखीषु चातुर्यात्किमपि कार्यान्तरं लपितुं श्रुतिमूले लग्ना । किंभूते श्रुतिमूले ? अनुकूलेऽभिमुखमानीते । किंभूते कपोलतले ? रोमाञ्चोपलक्षिते । हरेः सात्त्विकभावेन रोमाञ्चोद्गमः । अत्रानुगन्तुमशक्ता कार्यान्तरकथनव्याजेन हरिं स्थापयतीति नितम्बवतीत्युचितम् । सखीषु दयितचुम्बनं व्याकरमिति कार्यान्तरव्याजौचिती । अत्र प्रौढा नायिका ।

---

तु कृष्णस्य, परिरम्भोद्यमं विनैव स्वयं प्रथमं परिरम्भणात् । अन्योन्यकृते हि परिरम्भे शृङ्गाररसः पुष्टो भवति । तदुक्तं दशरूपके( ४।४८ )—'रम्यदेशकलाकालवेषभोगादिसेवनैः । प्रमोदात्मा रतिः सैव यूनोरन्योन्यरक्तयोः । प्रहृष्यमाणः शृङ्गारो मधुराङ्गविचेष्टितैः ॥' इति । शृङ्गारे पञ्चमः स्वरो बाहुल्येन भवति स एवात्र कथितः । यदाह भरतः—'पञ्चमं मध्यमभूयिष्ठं हास्यशृङ्गारयोर्भवेत्' इति ॥ ३ ॥
कापीति । कापि मुग्धवधूः मधुसूदनवदनसरोजं सुखस्थानमधिकं यथा स्यात्तथा ध्यायति चिन्तयति । कीदृशम् । विलासेन विलोलयोश्चञ्चलयोर्विलोचनयोर्नेत्रयोः खेलनं च तेन जनित उत्पादितो मनोजः कामो येन अर्थात्तस्यामेव तादृशम् । अत्र प्रत्यक्षस्यापि मधुसूदनस्य ध्यानाद्वैदग्ध्यं तस्या अवगम्यते ॥ ४ ॥
कापीति । कापि नितम्बवती गोपी दयितं कृष्णं कपोलतले चारु मनोहरं यथा तथा चुचुम्ब चुम्बनं कृतवती । कीदृशी ? किमपि कार्यं लपितुं मन्त्रयितुं श्रुतिमूले मिलिता संलग्ना । कीदृशे । पुलकै रोमाञ्चैरनुकूले प्रियविलाससूचके । औत्सुक्येन सहसा कान्तमुखचुम्बनं सखीजनहास्यकरं

---

पाठा०—१ 'गोपवधू'. B., S. २ 'कापि चुचुम्ब' B.

केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले ।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले ॥ हरि० ॥ ६ ॥
करतलतालतरलवलयावलिकलितकलस्वनवंशे ।
रासरसे सहनृत्यपरा हरिणा युवतिः प्रशशंसे ॥ हरि० ॥ ७ ॥

---

अनुकूलो नायकः ॥ ५ ॥ केलिकलेति । काचिद्गोपी केलिकलाकुतुकेन क्रीडाविज्ञानकौतुकेनामुं कृष्णं करेण दुकूले विचकर्ष । किंभूतम् ? यमुनावनकूले मञ्जुलमनोहरवञ्जुलवकुलकुञ्जगतम्, वेतसकुञ्जगतं वा यमुनाया विपिनोपलक्षिततीर इत्यर्थः । अत्र चकारोऽनुक्तसमुच्चयार्थः । तेन परिहासाद्युच्चीयते । 'यमुनाजलतीरे' इति पाठः । अत्र यमुनातीर इति वक्तव्ये 'जल'ग्रहणं शैत्यपावनत्वसंनिकर्षादिद्योतनार्थम् ॥ ६ ॥ करतलेति । हरिणा कृष्णेन कापि युवतिः प्रशशंसे स्तुता । किंभूता ? रासरसे गोपीनां क्रीडानुरागे सहनृत्यपरा कृष्णेन सह तुल्यकालं नृत्यन्ती । किंभूते रासरसे ? करतलयोस्तालस्तालिका तया तरला या वलयावलिर्हस्तकटकश्रेणिस्तया कलितोऽनुगतः कलस्वनो वंशो यत्र यस्मिंस्तथा । अथवा,–'अङ्गनामङ्गनामन्तरे माधवः' इममर्थं प्रकटयति ॥ ७ ॥ एकस्यैव हरेः प्राकाम्यसिद्ध्या सर्वाभिः सहैककालं क्रीडनमाह—

---

भवतीति व्याजेन तया तदारब्धमिति भावः । अत्र प्रथमतश्च मुखस्पर्शनेन कृष्णकपोले रोमाञ्चमुत्पाद्य चुम्बने तस्या अनाधीरत्वं ध्वनितम् ॥ ५ ॥ केलिकलेति । काचिद्गोपी अमुं कृष्णं केलिकलाकुतुकेन दुकूले पट्टवस्त्रविषये विचकर्षाकृष्टवती । दुकूलं गृहीत्वाऽमुं कृष्णं विचकर्षेति केचिद्योजयन्ति । कीदृशम् ? मञ्जुलो मनोहरो वञ्जुलो वेतसो यत्र तादृशो यः कुञ्जस्तत्र गतं प्राप्तम् । कुत्र विचकर्ष ? यमुनाजलकूले यमुनाया जलयुक्ते रोधसि । वञ्जुलकुञ्जस्थं कृष्णं यमुनाकूलं प्रति क्रीडार्थमाकृष्टवतीत्यर्थः । अत्र अन्यानुरक्तस्य कृष्णस्य नायिकया वस्त्राकर्षणादधीरत्वं तस्या व्यङ्ग्यम् । 'कुतुकं तु कुतूहलम्' इत्यमरः । 'मनोज्ञं मञ्जु मञ्जुलम्' इति च 'वञ्जुलो वेतसे' इति विश्वः । 'दुकूलं क्षौमे सूक्ष्मांशुकेऽपि च' इति ॥ ६ ॥ करतलेति । काचिद्युवतिर्हरिणा प्रशशंसे स्तुता । कीदृशी ? रासरसो गोपीनां क्रीडाविशेषस्तत्र सहनृत्यपरा कृष्णेन समं नृत्यन्ती । कीदृशे रासरसे ? करतलयोस्तालेन परस्परं वादनेन तरला चञ्चला या वलयावलिः कङ्कणपङ्क्तिस्तया कलितो मिश्रितोऽव्यक्तमधुरशब्दसहितो वंशो वेणुर्यत्र तादृशे । अत्र 'रासरसे' इत्यादिना गोदुहां क्रीडास्वेव सा स्तुत्या, न तु सकलसंगीतकलास्विति ध्वनितम्; 'द्रुमभेदे करास्फाले तालं तु हरितालके' इति विश्वः । तरलश्चपले खिद्गे हारमध्यमणौ' इति च । 'वलयं कङ्कणेऽपि च' इति । 'आवलिः पङ्क्तिः' इत्यमरः । 'वंशो वेणौ कुले वर्गे काष्ठस्यावयवेऽपि च' इति विश्वः । 'रासस्तु वनरासे स्यात्' इति च । 'रासस्तु गोदुहां क्रीडा' इति हारावलिः ॥ ७ ॥

श्लिष्यति कामपि चुम्बति कामपि कामपि रमयति रामाम् ।
पश्यति सस्मितचारुतरामपरामनुगच्छति वामाम् ॥ हरि० ॥८॥[4]
श्रीजयदेवभणितमिदमद्भुतकेशवकेलिरहस्यम् ।

---

श्लिष्यतीति । स हरिः रासरसे कश्चित्कामपि अन्यथाऽन्यया सह उक्तरीत्या क्रीडति । रामेति रमणशीला तां रमयति । स्मितचारुतरेति रसदृष्टेर्लक्षणम् । स्मिते हि रतिभाव उत्पन्नो भवतीति । 'वामाम्' इत्यनुनयेऽपि पराङ्मुखीत्वम् । तामनुगमनेन साधयतीति चातुर्यम् । अथवा,—नानारूपाणि विधाय तया तया सह तया तयावस्थया क्रीडितवान् । अथवा,—समस्तैवैकामाश्लिष्य तामाश्लिष्यन्नेव परां चुम्बति । तत्कुर्वन्नेवान्यां रमयति । चेष्टाविशेषेण तदैवान्यां पश्यति । अन्यामनुगच्छतीत्यनुकरोतीति योज्यम् । श्लिष्यतीत्यादिषु क्रमेण शठधृष्टदक्षिणानुकूलाः नायकाः । नायिकास्तु अभिसारिका एव ॥ ८ ॥ उपसंहरति—श्रीजयदेवेति । अत्र स्वरा

---

श्लिष्यतीति । कामपि रामां क्रीडाशीलां गोपीं श्लिष्यत्यालिङ्गति, कामपि चुम्बति, कामपि रमयति, निधुवनसंभोगेन क्रीडयति, स कृष्णः स्मितेन चारुतरामतिशयेन मनोहरामपरां गोपीं पश्यति । काञ्चिद्रामां वामस्वभावां कोपवतीमनुगच्छति अनुनयार्थमनुगतिं करोति । अत्र कृष्णेनाश्लेषादौ क्रियमाणेऽपि ताभिर्न कृतमित्यप्यवैदग्ध्यं सूचितम् । 'सुन्दरी रमणी रामा' इत्यमरः । 'विद्या वामा अपि स्त्रियाम्' इति च ॥ ८ ॥ संप्रति गीतसमाप्तौ कविः स्वनाम निबध्नन्नाशिषं प्रार्थयते —श्रीजयदेवेति । श्रीजयदेवकवेरिदं ललितं गीतं शुभानि वितनोतु विस्तारयतु । कीदृशम् ? वृन्दावनेऽद्भुतं केशवस्य केलिरहस्यं गुप्तक्रीडा यत्र

---

पाठा०—१ रमयति कामपि रामाम् । P. २ 'चारुपरां' S. B. ३ 'देवकवेरिदमद्भुत°' RM., P.

४ 'केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले ।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले ॥' S.

---

टिप्प०—1 सखीरासे उक्तरीत्या प्राधान्यं तासां केलिरसगौरवान्वेषणायास्ति, न तु तासां गौरवम् । उक्तं चात्र—'राधामाधाय हृदये तत्याज व्रजसुन्दरीः' इति । तद्गौरवमेवाह—श्लिष्यतीत्यादिना—संजीविनी । 2 अत्राभिसारिकायाः धृष्टदक्षिणानुकूलशठाश्च नायकाः; तत्र 'कामपि रमयति रामां सरागम्' इत्यनेन धृष्टः । तथा—'अभिव्यक्तान्यतरुणीभोगलक्ष्मापि निर्भयः । मिथ्यावचनदक्षश्च धृष्टोऽयं खलु कथ्यते ॥ शठस्तु यथा—'प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् । निगूढमपराधं च शठोऽयं कथितो बुधैः ॥' (शृं. ति. १।२७–२८) इति दीपिका । 3 तासां परस्परकृताश्लिष्टादौ शृंगाररसः पुष्टो भवतीति प्राप्यसुखे प्रसिद्धिः—संजीविनी ।

वृन्दावनविपिने ललितं वितनोतु शुभानि यशस्यम् ॥ हरि० ॥९॥

विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवर-
श्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम् ।

ऋषभाया: पाठ: । श्रीजयदेवकवेरिदमद्भुतकेशवकेलिरहस्यं अद्भुतं च तत्केशवकेलिरहस्यं च तच्चरितं शुभानि वितनोतु । अर्थाद्गायतां शृण्वतां च । किंभूतम् ? यशस्यं यशस्करम् । क ? वृन्दावनविपिने । अत्रैकेनानेकासामुपरञ्जनादद्भुतत्वम् । लयो नाम छन्दः । तल्लक्षणम्—'मुनियगणैर्लयमामनन्ति तज्ज्ञाः' । तदुक्तं छन्दश्चूडामणौ 'चिलय' इति ॥ ९ ॥ इदानीं काचित्सखी राधां प्रति कृष्णस्यातिशयशृङ्गारशालिता-दर्शनव्याजेन तदुन्मुखीकर्तुमाह—विश्वेषामिति । हे सखि राधे ! मधौ वसन्ते मुग्धः सुन्दरो हरिः क्रीडति । क इव ? मूर्तिमान् शृङ्गाररस इव । 'पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः' । किं कुर्वन् ? अनुरञ्जनेनानुरागेण विश्वेषां सर्वेषां आनन्दं जनयन् हरिः शृङ्गारश्च । पुनश्च किं कुर्वन् ? अङ्गैरनङ्गोत्सवमुपनयन्नुपस्थापयन् । किंभूतैरङ्गैः ? इन्दीवरपङ्क्तिश्यामलकोमलै-र्नीलोत्पलराजिवच्छ्यामलसुकुमारैः । पुनः किंभूतः ? व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः प्रतिप्रतीकमाश्लिष्टः । अभितः सर्वतः । कथम् ? स्वच्छन्दं यथा स्यात्तथा । अथवा यद्यदङ्गं यया यया समासादितं तत्तत्तया तया समालिङ्गितमिति प्रतिप्रतीकशब्दार्थः । अत्र दीपकमलंकारः । वैदर्भी रीतिः । शार्दूलविक्रीडितं छन्दः । शृङ्गारो रसः । वाक्यौचित्यं च 'चन्दनचर्चिते'त्यत्र उत्कण्ठिता नायिका । तल्लक्षणम्—'प्रिये कृतव्यलीकेऽपि विरहोत्कण्ठितोन्मनाः'

तादृशम् । अद्भुतत्वं चैकेनैव कृष्णेनानेककामिनीनां कामपूरणात् । पुनः कीदृशम् ? यशस्यं यशःसहितम् ॥ ९ ॥ ननु सकलशृङ्गारकलाभिज्ञः श्रीकृष्णः कथं शास्त्रान-भिज्ञाभिर्गोपीभिः सह केलिं कृतवानित्यत आह—विश्वेषामिति । हे सखि हे राधे! मधौ वसन्ते मुग्धो मनोहरो हरिः क्रीडति । किं कुर्वन् ? विश्वेषां गोपी-जनानामनुरञ्जनेनानुरागं जनयन्नुपस्थापयन् । कीदृशो हरिः ? अभित उभयतो बाह्यैरभ्यन्तरैस्तथेतरा प्रत्यङ्गं अङ्गमङ्गं प्रति स्वच्छन्दं यथा स्यादेवं व्रजसुन्दरी-भिरालिङ्गितो मूर्तिमान् शरीरी शृङ्गार इव । शृङ्गारस्याशरीरत्वात्क्रीडारसो न संभ-वतीति मूर्तिमानित्युक्तम् । अत्र शृङ्गाररसस्य श्यामत्वात्कृष्णसादृश्यम् । तदु-क्तम् ( ना. शा. ६।४२ )—'श्यामो भवति शृङ्गारः सितो हासः प्रकीर्तितः' इति । यथा मुग्धो मनोहरः शृङ्गाररसो मधौ वसन्ते क्रीडति सर्वत्र विलसति । किं कुर्वन् ? यूनोऽनुरञ्जनेन परस्परानुरागजननेन विश्वेषां प्राणिजनानामानन्दं

पाठा०—१ 'इति श्रीगीतगोविन्दे चतुर्थः प्रबन्धः ।' P.,

स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः
शृङ्गारः सखि! मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति १०

नित्योत्सङ्गवसद्भुजङ्गकवलक्लेशादिवेशाचलं
प्रालेयप्लवनेच्छयानुसरति श्रीखण्डशैलानिलः ।

---

॥ १० ॥ श्रीखण्डशैलानिलो मलयाचलपवनः ईशाचलं हिमाद्रिमनुसरति याति । ईशश्चासावचलश्चेति । अथवा,—ईशायाः पार्वत्याः गुरुरचलः, मध्यमपदलोपाद् टाब्विधिनाद् वा ईशोपलक्षिताचल इति । अथवा,—ईशाचलं कैलासमनु लक्ष्यीकृत्य सरति । कया? प्रालेयप्लवनेच्छया हिमावगाहनेच्छया । अत्रोत्प्रेक्षितं हेतुमाह—नित्येति । नित्यमुत्सङ्गे वसन्तो ये भुजङ्गा एव भुजङ्गकास्तेषां यत्कवलनं तस्मात्, तत्र वा यः क्लेशः तस्मादिव । अथ भुजङ्गका-

---

जनयन् । पुनः किं कुर्वन्? अङ्गैः शृङ्गाररसस्याङ्गभूतैः कटाक्षादिभिरनुभावै रोमाञ्चादिभिश्च सात्त्विकभावैः शङ्कासूयादिभिः संचारिभावैश्चानङ्गोत्सवमुपनयन् । केवलमेतैः पूर्वभावैरपीत्याह—इन्दीवरेति । इन्दीवरश्रेणिभिः कमलपङ्क्तिभिः श्यामैर्गाढान्धकारनीलनिचोलघनमालाघनादिभिः कोमलैर्मृदुशय्यादिभिः । अत्र हेतुगर्भविशेषणमाह—स्वच्छन्दमिति । स्वच्छन्दं यथा स्यादेवं व्रजन् गच्छन् सुन्दरीभिरङ्गमङ्गं प्रति आलिङ्गितः आश्रितः । शृङ्गाररसस्याङ्गिनो विभावादीनां मध्ये कयाचित्ताम्बूलस्रक्चन्दनाद्युपनयनविभावरूपं कयाचित्सुस्मितकटाक्षाद्यनुभावरूपं कयाचिच्छङ्कासूयादिसहचारिरूपं कयाचिच्च रोमाञ्चितत्वादिसात्त्विकभावरूपं शृङ्गाररसस्याङ्गमाश्रितमिति भावः । विभावादीनामङ्गत्वं प्रति भरतः—(ना. शा. ६।६) 'विभावैरनुभावैश्च भावः संचारिसात्त्विकैः । जनितो बोधितः स्फीतो वृद्धः शृङ्गार इष्यते ॥' इति विभावसामान्यलक्षणात् । रसरत्नप्रदीपिकायाम्—'भावयन्ति विशेषेण ये रसान्वै मनोहरान् । ते विभावास्तु कथ्यन्ते नाट्यशास्त्रविशारदैः ॥' इति । तत्र शृङ्गारविभावा भरतेनोक्ताः—(ना. शा. ६।४७) 'ऋतुमाल्यालंकारैः प्रियजनगान्धर्वकाव्यसेवाभिः । उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥' अनुभावसामान्यलक्षणं यथा—'व्याक्रियन्ते यथा सम्यग्लोकानुभवगोचराः । तेऽनुभावास्तु कथ्यन्ते नाट्यशास्त्रविशारदैः' ॥ तत्र शृङ्गारानुभावः—'नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च । मधुरैः स्वाङ्गविकारैस्तस्याभिनयः प्रयोक्तव्यः ॥' व्यभिचारिसामान्यलक्षणं दशरूपके—(४।७) 'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः' । शृङ्गारतिलके—(३।२८) 'शङ्काऽसूया तथा ग्लानिर्व्याधिश्चिन्ता स्मृतिर्धृतिः । औत्सुक्यं विस्मयो हर्षो व्रीडोन्मादौ भयं तथा ॥ विषादो

---

पाठा०—१ 'अधोत्सङ्ग°' P., 'अधुत्सङ्ग°' B.M.

'किं च स्निग्धरसालमौलि[1]मुकुलान्यालोक्य हर्षोदया-
दुन्मीलन्ति कुहूः कुहूरिति कलोत्तालाः पिकानां गिरः ११

खण्डनं तेन यो जायमानः क्लेशः तस्मादिव । अथवा,—कवलनं कवलो दशनं तस्मात् । सर्पदष्टो हि तत्तापोपशान्तये शीतलेच्छुर्भवति । किं चेति विभावान्तरमाह । पिकानां कोकिलानां कुहूः इति गिर उन्मीलन्ति प्रादुर्भवन्ति । किंभूताः ? कलोत्तालाः कलाश्च ता उत्ताला उदीर्णाः । कुतः ? हर्षोदयात् । किं कृत्वा ? स्निग्धानि यानि रसालमौलिषु मुकुलानि चूतशिरःसु कुड्मलास्तानालोक्य । अथवा,—स्निग्धानि रसालानां मौलिमुकुलानि चूतशिरांसि अशोकानां च मुकुलानीत्यालोक्य । हर्षोदयादिति क्रिययोरेककर्तृकत्वात्पूर्वकालता । शार्दूलविक्रीडितं वृत्तम् । अत्र वर्णानुप्रासोपमाहेतवोऽलंकाराः । वैदर्भी रीतिः । अत्र विप्रलम्भाख्यशृङ्गारसूचको रत्याख्यः स्थायीभावः । अत्र विरहिमनःशरीरकर्तनकुशलानां स्निग्धरसालमौलिमुकुलानामालोकनेन जातहर्षाणां पिकानां गिरां तद्वैरीन्दुविलुण्टाककुहूरूपेण यदुन्मीलनलक्षणं यथा क्रियास्वरूपनिरूपणमकारि तच्चितरामौचित्यकोटिमालम्बते । उक्तं च—'सगुणत्वं सुवृत्तत्वं साधुता च विराजते । काव्यस्य सुजनस्येव यथौचित्यवती क्रिया ॥' इति ॥

जडता निद्राऽवहित्था चापलं मतिः । इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः ॥' इति । सात्त्विकभावाः शृङ्गारतिलके ( १।१५ ) 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥' इति । एतेषामवान्तरलक्षणानि ग्रन्थगौरवभयान्न लिख्यन्ते । अत्र सकलाभिज्ञस्यापि व्रजसुन्दरीभिः सह मुग्धतामाश्रित्य तदनुसारेण क्रीडतोऽपि हरेर्न दक्षत्वहानिः; तासां तथैवानुरञ्जनात् । अत एव 'विश्वेषामनुरञ्जनेन'-त्यनेन विश्वानुरञ्जकत्वं कृष्णस्योक्तमिति भावः ॥ १० ॥ इदानीं राधां शीघ्रं गमयितुं मलयानिलादिदुःसहतामाह—अभ्युत्सङ्गेति । श्रीखण्डशैलानिलो मलयपर्वतसंबन्धी वायुरीशाचलं रुद्रस्याचलं हिमालयमनुसरति । कस्मादिव ? अद्रेर्मलयस्य उत्सङ्गे क्रोडे वसन्तो ये भुजङ्गाः सर्पास्तेषां कवलेनाश्लेषेण जनितो यः क्लेशः संतापस्तस्मादिव । तर्हि हिमाद्रिं किमिति व्रजतीत्यत आह—प्रालेयेति । प्रालेयस्तुषारस्तस्य प्लवनमवगाहनं तस्येच्छया । अत्र सर्पैः कवलितोज्झितस्य पवनस्य तद्विषसंपर्कादधिकं विरहिणां संतापकत्वं ध्वनितम् । न केवलमिदमेव दुःसहं वसन्तेऽपरमपीत्याह—किं चेति । पिकानां कोकिलानां कुहूः कुहूरित्येवंरूपाः गिरः शब्दा उन्मीलन्ति प्रकटीभवन्ति । कीदृश्यः ? कलोत्तालाः कला अव्यक्तगिरो मधुराः, उत्ताला उद्धुराः । कस्मात् ? स्निग्धा ये रसाला

1 'मौलिकुसुमानि' B. 2 'किञ्चित्स्निग्ध'' P.

रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा-
मभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया राधया ।
साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुति-
व्याजादुद्भटचुम्बितः स्मितमनोहारी हरिः पातु वः १२[1]

इति श्रीजयदेवकृतौ गीतगोविन्दे सामोददामोदरो नाम प्रथमः सर्गः ॥ १ ॥

॥ ११ ॥ इदानीं सर्गान्ते कविराशिषमाशास्ते—रासोल्लासेति । हरिर्वो युष्मान्पातु । किंभूतो हरिः ? राधया गीतस्तुतिव्याजात् अमृतमयमुखनिर्गतत्वात् इदं गीतममृतमेवेति मिषेण व्याहृत्य उत्कटं यथा स्यात्तथा चुम्बितः । इतीति किम् ? साधु युक्तमेतत् यद्गीतममृतकल्पम् । यतस्त्वद्वदनं सुधामयम् । अत्र विकारे मयट् । अत्रान्यनारीसंनिधौ चुम्बनमयुक्तमिति गीतस्तुतिव्याजोक्तिः । किं कृत्वा ? निर्भरं गाढं यथा स्यात्तथोरः परिरभ्य । क्व ? आभीरवामभ्रुवां गोपाङ्गनानामभ्यर्णे समीपे । किंभूतानां वामभ्रुवाम् ? रासो गोपक्रीडा तस्योल्लासः संहर्षप्रादुर्भावस्तस्य भरेण विलासवतीनाम् । किंभूतो हरिः ? स्मितेनान्यनारीणां मनो हर्तुं शीलं यस्य स तथा । अथवा,—अन्यनारीसमीपे आलिङ्गनं लज्जावहमिति तत्परिजिहीर्षया राधाया हेतुगर्भं विशेषणमाह–प्रेमान्धयेति । 'कामान्धः किंचिन्न पश्यति' इति वचनादतिप्रेम्णा व्याकुलयेत्यर्थः । अत्र विप्रलम्भः शृङ्गारः । आभीरमस्तुतप्रशंसाव्याजोक्त्याक्षेपहेतवोऽलंकाराः । प्रगल्भा नायिका । मुग्धो नायकः । अत्र 'तरुमिव कमितारं चुम्बनार्तोधिरोढुं यदभिलषति नारी तच्च वृक्षाधिरूढम् ॥' इति कृत्वा वृक्षाधिरूढमाश्लेषः । 'आभीरजाश्चुम्बनहार्यचित्ताः' इति, 'नमितकमिदमाहुर्योषितो यद्बलेन प्रियमुखमभिवक्त्रं न्यस्य तिष्ठन्त्युदास्याः' इति रतिरहस्यात् नमितकं नाम चुम्बनविशेषः । शार्दूलविक्रीडितं छन्दः । अत्र राधाया वीरायितेनोत्साहात्मकस्य वीररसस्याविर्भावात्तदुपयोगिनी आरभटी वृत्तिः । द्वित्रिपदे तु पाञ्चाली रीतिः । अर्धमागधी गीतिश्चेति । स्थितलयं गानम् ॥१२॥

यत्सर्गं संविधातुं नृपतिगुणनिधिं सर्गकर्तुर्निसर्गा-
च्छिक्षाभूत्सर्गवर्गः सकलकलितॄणां स्वर्गिणामग्रिमां च ।

स्वादशखालेषां ये मौल्योऽग्रभागास्तत्र यानि मुकुलानि तान्यालोक्य वीक्ष्य यो हर्षोदय आनन्दाविर्भावस्तस्मात् । अत्र कश्चित् 'अघोत्सव' इति पाठः । तत्राघ

पाठा०–१ '°मभ्यर्णे' S. २ 'गीतश्रुति°' P.

टिप्प०–1 इदं पद्यं रसमञ्जरीव्याख्याकृता न टीकितं वा तट्टीका लेखकादिप्रमादाद्गता नेति नावगम्यते । 2 उद्भटचुम्बनं कामसर्वस्वे उक्तम् । तल्लक्षणम्—'कान्ता भुजाभ्यामालिङ्ग्य प्रेयसी प्रणयान्विता । सशब्दं चुंबति मुखं यत्तदुद्भटमुच्यते ॥' इति संजी० ।

राज्ञा कुम्भेन तेन व्यरचि विवरणं मव्यसर्गे विसर्गे-
श्रीणां दक्षेण सर्गे प्रथमपरिमिते गीतगोविन्दसर्गे ॥
यत्र स्याद्गुर्जरी रागस्तालो झम्पेति भागशः ।
यथाशोभं प्रयोगोऽपि गद्यपद्याखिलान्तरः ॥
आभोगान्ते स्वराः पाटाः पुनः पद्यानि कानिचित् ।
सामोददामोदराख्यः प्रबन्धो भ्रमरः पदम् ॥
इति सामोददामोदरभ्रमरपदनामा चतुर्थः प्रबन्धः ॥

पातिव्रत्यपरामपि प्रियतमां वीक्ष्यानुरागादहं
चैतन्यामपि सूक्तिभिः समभवं मानादिरक्षापरः ॥
नो जाने कतमैः पुनर्निजगुणैस्तस्याः सपत्नीव मे
कान्ताया रसमञ्जरीयमधुना चेतः समाकर्षति ॥

इति श्रीमेदपाटसमुद्भवेन रोहिणीरमणेन कुम्भकर्णेन विरचिते गीतगोविन्दविवरणे सामोददामोदरनामा प्रथमः सर्गः ॥ १ ॥

---

वसन्ते इत्यर्थः । 'तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका चाथ' इत्यमरः । उत्तालः स्यादेमकुम्भे गर्भे चोत्ताल उत्कटे । श्रेष्ठेऽपि विकरालेऽपि स्यादुत्तालं प्लवंगमे' इति विश्वः ॥ ११ ॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां गीतगोविन्दटीकायां रसमञ्जर्याख्यायां प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः

**–अक्लेशकेशवः–**

**विहरति वने राधा साधारणप्रणये हरौ**
**विगलितनिजोत्कर्षादीर्ष्यावशेन गताऽन्यतः ।**
**क्वचिदपि लताकुञ्जे गुञ्जन्मधुव्रतमण्डली-**
**मुखरशिखरे लीना दीनाप्युवाच रहः सखीम् ॥ १ ॥**

---

गुर्जरीरागेण गीयते ॥

भुवनेशपादकमलं प्रणम्य कुम्भो नृपतिरतिविमलम् ।
जयदेवरचितमातुं युनक्ति युक्तेन धातुना गातुम् ॥

इदानीं हरेरभिलाषेर्ष्यारूपदोलारूढचित्ता राधा सखीमाह । पूर्वसर्गेऽभिलाषचिन्तारूपं दशाद्वयं निरूप्य स्मरणलक्षणदशाप्रदर्शनार्थं द्वितीयसर्गारम्भः ॥ विहरतीति । राधा सखीं रहोऽपि गोप्यमप्युवाच । यद्यपि लताकुञ्जे स्वरहस्यं वक्तुं नोचितं तथापि स्मरपारवश्यविह्वलतया गोप्यागोप्यं नाज्ञासीत् । क्व सति ? साधारणप्रणये सकलगोपिकासु समानस्नेहे हरौ वने वृन्दावने विहरति सति । किंभूता राधा ? विगलितनिजोत्कर्षादन्यस्त्रीभ्यो निजातिरेकापगमादीर्ष्यावशेनासहिष्णुतयान्यतो गता । यत्र स्थिता अन्याभिः क्रीडन्तं न पश्यतीति । अत्रार्थे पुनर्विशेषमाह—गत्वापि क्वचिदपि कुञ्जे लीना । किंभूते कुञ्जे ? झङ्कारपरभ्रमरश्रेण्या वाचालाग्रभागे । अत एव दीना; अत्रापि तैरधिककामोद्दीपनात् । अत्र 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति हरिणी छन्दः । विरहासहिष्णुतालक्षणो विप्रलम्भो रसः । रसैरेवात्युद्रेकाद्रसवदलंकारता । वर्णसाम्येनानुप्रासश्च । प्रौढा नायिका । अत्र गलितनिजोत्कर्षवशाद्दीनस्य वचनाद्यकैर्यस्सखीं प्रति रहस्यकथनं 'अपि'-

---

एतद्वचनैः सख्या प्रतिबोधितायाः समक्षमन्याभिः सह निर्भरं क्रीडन्तं हरिं दृष्ट्वाऽसहमानाया अत एव क्वचित्कुञ्जान्तरगताया राधाया अवस्थान्तरं वर्णयितुमाह—विहरतीति । राधा सखीम् इति वक्ष्यमाणमुवाचोक्तवती । कीदृशी ? ईर्ष्यावशेनान्यतोऽन्यत्र गता । ईर्ष्यायां हेतुमाह—विगलितेति । विगलितो गलितो निजः स्वीय उत्कर्षोऽहमेव हरेः प्रणयिनीत्येवंरूपस्तस्मात् । क्व सति ? हरौ कृष्णे वने विहरति सति । कीदृशे हरौ ? साधारणो राधायामन्यगोपाङ्गनायां च समानः प्रणयः प्रेम यस्य तादृशे । अत एव दीना दुःखिता । पुनः कीदृशी ? क्वचिदपि लताकुञ्जे लताभिर्वल्लीभिरतिनिबिडे कुञ्जे लीना निभृतं निलीय स्थिता । कीदृशे कुञ्जे ? गुञ्जन्तः शब्दायमाना मधुपा भ्रमरास्तेषां या मण्डली पङ्क्तिस्तया

---

पाठा०–1 'मण्डलि'' P.

---

टिप्प०–1 विप्रलम्भोऽयं विभावनालङ्कारः–इति संजीविनी ।

## गुर्जरीरागेण यतितालेन गीयते ॥ प्रबन्धः ॥ ५ ॥

संचरदधरसुधामधुरध्वनिमुखरितमोहनवंशम् ।
चलितदृगञ्चलचञ्चलमौलिकपोलविलोलवतंसम् ।
रासे हरिमिह विहितविलासम्
स्मरति मनो मम कृतपरिहासम् ॥ ध्रुवपदम् ॥ २ ॥

---

शब्देन द्योत्यते सखितरामौचित्यचमत्काराय । यदाह—'उचितस्थानविन्यस्तैर्निपातैरर्थसंगतिः । उपादेयैर्भवत्येव सचिवैरिव निश्चला ॥' इति श्लोकोक्तमेवार्थं विशिनष्टि वर्णयति । तालेन–'लघुश्चैको द्रुतद्वयम्' इति ॥ १ ॥ संचरदिति । तत्र पूर्वं ध्रुवपदं व्याक्रियते—रासेति । हे सखि ! मे मनो हरिं स्मरति । स्मरतीति स्मृतेः पूर्वानुभूतार्थविषयत्वादृष्टचरस्य हरेश्चरितं साक्षात्करोति । इह क्रीडावने रासे गोपक्रीडायां विहितो विलासो विभ्रमो येन स तं तथा । कथं ? यथा भवति कृतपरिहासं कृतनर्मकेलि यथा स्यात्तथेति ध्रुवः । अथ पदानि । तत्राद्यं पदम्—संचरदिति । संचरन्त्या संक्रममाणयाऽधरसुधया मधुरो ध्वनिर्यत्र तद्यथा स्यात्तया मुखरितो मोहनो मोहकारी तन्नामा वंशो येन । अत एव चलितदृगञ्चले नेत्रप्रान्तं यथा स्यात्तथा चञ्चलो यो

---

मुखरं वाचालं शिखरमग्रभागो यस्य तादृशे । अत्र 'कुञ्ज'पदेनैव लताच्छादितगृहप्राप्तौ 'लता'पदमतिनिबिडत्वसूचनाय । 'प्रणयः प्रेम्णि विश्रम्भे' इति विश्वः । 'ईर्ष्यामाहुः समानेषु मानदानाद्यमर्षणम्' इति ॥ १ ॥ राधा किमुवाचेत्याह—संचरदिति । गीतस्यास्य गुर्जरीरागः । तालस्तु प्रतिमंठः । गीतार्थस्तु—मम मनोऽन्तःकरणं हरिं स्मरति । कीदृशं हरिम् ? रासे गोपक्रीडाविशेषे विहितः कृतो विलासो येन तादृशम् । तथा कृतः परिहासो येन तादृशम् । एतच्च ध्रुवपदम् । कीदृशं हरिम् ? संचरता प्रतानक्रमेण स्फुरताऽधरेणौष्ठेन सुधेव मधुरो ध्वनिर्यस्य तादृशो मुखरितो वादितो मोहनवंशो मोहनकारी वेणुर्येन तादृशम् । तद्वेणुरवेण मोहितं मे मनः कृतापराधमपि तं स्मरतीति भावः । पुनः कीदृशम् ? चलितः कथंचिन्मूर्च्छां प्रति रोषे प्रकटीकृते तत्संमानाय घूर्णितो दृगञ्चलोऽपाङ्गो यत्र एतादृशश्चञ्चलः स्वयमेव वेणुद्वारा प्रकटीकृतस्य स्वरविशेषस्यान्येषामज्ञानात्स्वयमेव परितो दोषाद्दोलायमानो मौलिर्मस्तकं यस्य, अत एव कपोले विलोल-

---

पाठा०–1 'रूपकताले' P. 'रागः प्रतिमंठतालः' S., RM.

---

टिप्प०–1 'द्रुतद्वयेन गातव्यं कुंदस्य प्रतिमण्ठकः' इति तालक्षणम्—इति संजीविनी । 2 तथा–'केतकीकुसुमं भृङ्गः खण्ड्यमानोऽपि सेवते । दोषाः किं नाम कुर्वन्ति गुणाय हृतचेतसे' इति ॥ संजीविनी ।

चन्द्रकचारुमयूरशिखण्डकमण्डलवलयितकेशम् ।
प्रचुरपुरन्दरधनुरनुरञ्जितमेदुरमुदिरसुवेशम् ॥ रासे० ३

गोपकदम्बनितम्बवतीमुखचुम्बनलम्भितलोभम् ।
बन्धुजीवमधुराधरपल्लवमुल्लसितस्मितशोभम् ॥ रासे० ॥ ४ ॥

---

मौलिः शेखरः शिरो वा तेन कपोलयोर्विलोलौ वतंसौ यस्य स तथा । किमुक्तं भवति ?। शिरःकम्पदोषं विना शेखरकुण्डलचालने वाद्यकवैचित्री । अथवा,—वंशश्रवणाचलितदृगञ्चला या गोप्यस्तासु चञ्चलो यो मौलिस्तेन कपोलविलोलवतंसम् । अत्राधरसुधापानेन तद्वाननस्य चन्द्राद्प्यानन्दकत्वं द्योतितम् ॥ २ ॥ चन्द्रकेति । चन्द्रकचारुमयूरशिखण्डकानां मण्डले संघाते वलयाकारेण वेष्टिताः केशा यस्य । तथा प्रचुरं घनं पुरंदरधनुषानुरञ्जितो मेदुरः सान्द्रस्निग्धो मुदिरो मेघस्तद्वत्सुवेशो दर्शनीयस्तम् ॥ ३ ॥ गोपेति । गोपसमूहस्य नितम्बवतीनां पृथुनितम्बानां मुखचुम्बनेन लम्भितः प्रापितो लोभो येन । अर्थान्मुखस्य । अथवा,—गोपाङ्गनानां मुखचुम्बनेन लम्भितो लोभो येन; अथवा,—गोपवधूचुम्बने लम्बितो लम्बीकृतो लोभो येनेति पाठान्तरं युक्तम् । अपि च,—बन्धुजीववत् मधुरो मनोहरोऽधरपल्लवो यस्य । अपि च,—उल्लसिता स्मितेन शोभा यस्य तम् ॥४॥ विपुलेति । विपुलपुलकौ पृथुरोमाञ्चौ यौ भुजौ तौ पल्लवाविव ताभ्यां वलयितं वलयीकृतं बल्लवयुवतीनां गोपाङ्गनानां सहस्रं

---

चञ्चलो वतंसः कर्णाभरणं यस्य तादृशम् । 'पीयूषममृतं सुधा' इत्यमरः । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इति च । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इति च ॥ २ ॥ ननु व्यासङ्गादिना विस्मार्यतामित्यत आह—चन्द्रकेति । चन्द्रकेण विचित्रचिह्नेन चारुणा मनोहराणां शिखण्डकानां मयूरपिच्छानां मण्डलेन समूहेन वलयिता वेष्टिताः केशा येन तादृशम् । तथा चात्र मयूरादिदर्शनेऽपि तस्यैव दर्शनं भवतीति ध्वनितम् । पुनः कीदृशम् ? प्रचुरैर्बहुलैः पुरन्दरधनुर्भिरनुरञ्जितः संवलितो यो मेदुरः सान्द्रस्निग्धो मुदिरो मेघस्तद्वच्छोभनो वेश आकृतिर्यस्य तादृशम् । अत्र नानामणिखचितहारकेयूरादीनामिन्द्रधनुःसाम्यम् । श्रीकृष्णस्य मेघसाम्यम् । इयं चाभूतोपमा ज्ञेया । कुतः ? प्रचुरपुरन्दरधनुर्भिरनुरञ्जितमेघस्याप्रसिद्धेः । 'समौ चन्द्रकमेचकौ' इत्यमरः । 'बर्हिकण्ठसमे वर्णे मेचकं ब्रुवते बुधाः' इति कात्यः । 'शिखण्डस्तु पिच्छबर्हे नपुंसके' इत्यमरः । 'वेष्टितं स्याद्वलयितम्' इति च । 'मुदिरः कामुकोऽम्बुदः' इति विश्वः । 'वेशो वेश्यागृहे प्रोक्तो नेपथ्ये गृहमात्रके' इति च ॥ ३ ॥ ननु एवं चैस्मिश्चतुरागिणि चेतस्तदा तं किमिति नानुसरसीत्यत आह—गोपकदम्बेति । गोपकदम्बस्याभीरसमूहस्य या नितम्बवत्यः प्रशस्तनितम्बशालिन्य

---

पाठा०–१ "लंबित" P.

विपुलपुलकभुजपल्लववलयितवल्लवयुवतिसहस्रम् ।
करचरणोरसि मणिगणभूषणकिरणविभिन्नतमिस्रम् ॥ रासे० ॥ ५
जलदपटलचलदिन्दुविनिन्दकचन्दनतिलकललाटम् ।
पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटम् ॥ रासे० ॥ ६ ॥

---

येन । पुनश्च करौ च चरणौ च उरश्च तेषां समाहारः करचरणोरः । प्राण्यङ्गत्वात्समाहारः । 'अमूर्धमस्तकात्स्वाङ्गादकामे' ( पा. ६।३।१२ ) इति सप्तम्या अलुक्समासः । तत्र स्थितानां मणिगणभूषाणां किरणैर्विभिन्नं तमिस्रं येन स तथा ॥ ५ ॥ जलदेति । जलदपटलं घनसमूहः तं चलतः संभजमानस्येन्दोश्चन्द्रस्य विनिन्दकश्चन्दनतिलको ललाटे यस्य, वर्तुल इति यावत् । केचिच्चलदिति पठन्ति, तत्र जलदपटलं गच्छत इति व्याख्येयम् । तत्पक्षे वंशे वाद्यमाने मूर्ध्नः कम्पेन ललाटे तिलकं चलदिव दृश्यते । अत्र ललाटस्य श्यामत्वात्तिलकस्य गौरत्वान्मेघचन्द्राभ्यामुपमानोपमेयभावः ॥ अपि च,–पीनौ घनौ यौ स्तनौ तन्मण्डलमर्दने निर्दयं हृदयकपाटं यस्य । चलदित्यत्रापि तथैव ॥ ६ ॥

---

स्त्रियस्तासां मुखचुम्बने लम्भितः प्रापितो लोभो येन तम् । तथा च मदग्रेऽप्यन्यास्वनुरक्तः स इत्येतावदहमसहमाना तं नानुसरामीति भावः । यद्वा,–नन्वयं त्वय्यनुरागरहितोऽन्याभिर्गोपीभिः सह क्रीडतीति त्वं तद्गुणकीर्तनमपि किमिति करोषीत्यत आह—गोपकदम्बनितम्बवतीभिर्मुखचुम्बने लम्भितः प्रापितो लोभो यस्य तादृशम् । तथा च तासु सहजस्नेहो नास्ति, परंतु बलात्कारेण ताभिश्चुम्बने लोभः कारितः । सहजस्तु प्रणयो मय्येव तस्येति भावः । पुनः कीदृशम् ? बन्धुजीवपुष्पवन्मधुरो मनोहरोऽधर एव पल्लवो यस्य तम् । उल्लसितमन्तरीषद्धास्येन शोभा यस्य तम् । तथा च बन्धूककुन्ददर्शनेनापि तदीयाधरहासस्मारकेण स एव स्मर्यत इति भावः । 'रक्तकस्तु बन्धूको बन्धुजीवकः' इत्यमरः । 'सुरसो मधुरः प्रोक्तो मधुलेये मनोहरे' इत्यनेकार्थः ॥ ४ ॥ पुनः कीदृशम् ? विपुलेति । विपुलः पुलको रोमाञ्चो यत्र ताभ्यां भुजपल्लवाभ्यां पल्लववत्कोमलाभ्यां बाहुभ्यां वलयितं वेष्टितं वल्लवयुवतीनामाभीरपत्नीनां सहस्रं येन तम् । अत्र वलयितमित्यनेनावज्ञया तासां वेष्टनमात्रं न तु गाढालिङ्गनं तरहस्यं चुम्बनालिङ्गनादिकं तत्तु ममैव सहेति तस्य स्मरणमुचितमेवेति ध्वनितम् । पुनः कीदृशम् ? करयोश्चरणयोरुरसि च यानि मणिमयानि भूषणान्यलंकरणानि तेषां किरणैर्विभिन्नं नाशितं

---

पाठा०–१ 'मणिमयम्' B. २ ''तमिस्रम्' S. ३ 'चलदिन्दु'' RP. ४ ''परिसंमर्दन'' S.

---

टिप्प०–1 यदि बन्धुकपुष्परागेण मधुरपल्लवाधररागरञ्जितो भवति । स च सितकुन्दकलिकया युतो भवति, तदाधरशोभामुपहरेत् इत्यभूतोपमेयम् । उपमारूपकालंकारः–इति संजीविनी ।

मणिमयमकरमनोहरकुण्डलमण्डितगण्डमुदारम् ।
[1]पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारम् ॥ रासे० ॥ ७ ॥
विशदकदम्बतले मिलितं कलिकलुषभयं शमयन्तम् ।
मामपि किमपि तरलतरङ्गदनङ्गदृशा मनसा रमयन्तम् ॥ रासे० ॥८॥

**मणिमयेति।** मणिमये मकराकारे मनोहरे ये कुण्डले ताभ्यां मण्डितोऽलंकृतो गण्डो यस्य। अपि च,–उदारं दक्षिणम्। किंच पीते वसने यस्य। किंच अनुगत आश्रितो मुनिमनुजसुरासुरलक्षणो वरपरिवारो यस्य तम्॥ ७॥ **विशदेति।** विशदकदम्बतले मिलितम्। अर्थान्मुन्यादिभिरुपस्थितम्। अत एव कलिकलुषभयं शमयन्तं पापं नाशयन्तम्। पुनः किं कुर्वन्तम्? मनसा करणभूतेन

तमिस्रं येन तम्। एतेन प्रथमाभिसारे स्वकीयालंकारकिरणैरुद्योते सति लज्जया परावर्तमानां मां समानीय तां चेष्टां कृतवान् येन तं क्षणमपि मनो न विस्मरतीति ध्वनितम्। 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः॥ ५॥ पुनः कीदृशम्? **जलदपटलेति।** जलदपटले मेघसमूहे चलन्संचरन्य इन्दुश्चन्द्रस्तस्य विनिन्दकस्तच्छोभातिशायी चन्दनबिन्दुर्मण्डलाकृति तिलकं यत्र तादृशं ललाटं यस्य तम्। पुनः कीदृशम्? पीनौ मांसलौ पयोधरौ स्तनौ तयोः परिसरस्य पर्यन्तभागस्य मर्दने निर्दयहृदयकपाटं कपाटवद्विस्तीर्णं हृदयं यस्य तादृशम्॥ ६॥ पुनः कीदृशम्? **मणिमयेति।** मणिमये मणिखचिते मकरवन्मनोहरे ये कुण्डले ताभ्यां मण्डितौ कपोलौ यस्य तम्। पुनः कीदृशम्? उदारमौदार्यगुणयुक्तम्। अत्र रहसि मया यथोचितं तत्सर्वं तत्क्षणमिव पूरितवानिति स कथं च न स्मर्यत इति ध्वनितम्। पुनः कीदृशम्? पीतं वसनं वस्त्रं यस्य तम्। औदार्योपपादकं विशेषणमाह—अनुगता आश्रिता ये मुनयो नारदादयः, मनुजा मनुष्या भीष्मादयः, सुरा इन्द्रादयः, असुराः प्रह्लादादयस्त एव वराः श्रेष्ठाः परिवाराः परिजना यस्य तम्। तथा च तैरप्यधिगतः सुमनःफलैः सततं सेव्यत इति तस्यौदार्यं ख्यातमेवेति भावः। 'परिवारः परिजने खड्गकोशे परिच्छदे' इति विश्वः। 'दानमभ्युपपत्तिश्च तथा च प्रियभाषणम्। स्वजनेऽपि परे वापि तदौदार्यमिति स्मृतम्॥' इति नायकौदार्यगुणलक्षणम्॥ ७॥ पुनः कीदृशम्? **विशदेति।** विशदस्य कदम्बस्य तले मूले मिलितं लग्नं, मत्संकेतीकृतकदम्बतले मदपेक्षयाऽमत एव गत्वा केचन न मां

पाठा०–१ 'किमपि तरङ्गदनङ्ग०' S.

टिप्प०–1 एतेन लक्ष्म्येषानुराग उक्तः। उक्तं च—'अन्तर्गता मदनवह्निशिखावली या सा बाधते किमिह चन्दनचर्चितापि। यत्कुंभकारदहनोपरि पंकलेपस्तापाय तापुनरसौ ननु तापशान्त्यै॥' इत्यादि–इति संजीविनी।

श्रीजयदेवभणितमतिसुन्दरमोहनमधुरिपुरूपम् ।
हरिचरणस्मरणं प्रति संप्रति पुण्यवतामनुरूपम् ॥ रासे०[1] ॥ ९ ॥

---

तरलतरङ्गदनङ्गदृशा तरला चासौ तरङ्गदनङ्गा च, तरङ्गन्संमूर्छन्नङ्गो यत्र तथाविधया दृश्या मामपि रमयन्तम् । अपीति गोपीश्च । अत एव कलिकलुषभयं कलहकालुष्यभयं शमयन्तम् । अत्र तरङ्गदनङ्गेति सरसदष्टिरुक्ता ॥ ८ ॥ श्रीजयदेवेति । अत्रालापस्तेन पादः । हरिचरणस्मरणं प्रति हरेः कृष्णस्य चरणं रासक्रीडायाचरणं तस्य स्मरणं प्रति इदं श्रीजयदेवभणितम् । सञ्चराधरसुधामधुरध्वनिमुखरितमोहनवंशम्—इत्यत्र न्यायादौ स्मरति मनो ममेत्यादि भणितम् । संप्रति इदानीमपि पुण्यवतामनुरूपं योग्यम् । सतां हरिचरणस्मरणे हेतुर्भवतीति यावत् । किंभूतम् ? अतीव सुन्दरम् । तथा मोहनमधुरिपो रूपं यत्र तत्तथा । अत्र 'मुनियगणैर्लयमामनन्ति' इति लयो नाम छन्दः । अत्र सर्वा अपि जातयो रासा भवन्तीति केचित् । यदाह—'सयलाउ आईउ एत्थावसेण पुत्थ वसंति । रासा बंधो रसायणं विट्ठगोट्ठीसु' ॥ ९ ॥ इदानीं राधा तदेव रहस्यं भङ्ग्यन्तरेणाह–'रागो धन्यासिको यत्र तालो वर्णयतिः स्मृतः । चम्पूबन्धप्रयोगान्ते गमकानेकविस्तरः ॥ तदन्ते स्युः स्वरालेनाः पाठः शुषिरसाश्रिताः । प्रबन्धोऽयं मुररिपोः पुरस्ताद्रत्नकण्ठिका ॥' इति । स चायं मधुरिपुरत्नकण्ठिका नाम पञ्चमः प्रबन्धो भैरवरागेण गीयते

---

पश्यन्त्विति मत्प्रतारणाय वा निलीय स्थितं कृष्णं मे मनः स्मरतीत्यर्थः । पुनः कीदृशम् ? कलिः प्रणयकलहस्तस्मात्तत्कलुषं चित्तकश्मलं 'अहं संकेते समागता, असौ नागतः, अयशोऽन्यवल्लभासक्तो भविष्यति, अतः परं यद्यायास्यति तदा मया न संभाषणीयः' इत्येवंरूपम्, 'एकाकी कथं कथमत्र तिष्ठामी'ति च तद्भयं कदम्बमूलादुपेत्य चाटूक्तिभिः शमयन्तमित्यर्थः । यद्वा,—कलेः कलियुगस्य यत्कलुषं पापं तद्भयं शमयन्तमित्यर्थः । पुनः कीदृशम् ? किमप्यनिर्वचनीयमेव यथा स्यात्तथा उद्गच्छदनङ्गः कामो यत्र एतादृश्या दृशा दृष्ट्या मनसा च मामपि रमयन्तमित्यर्थः । मामपीत्यपिशब्देन सोत्कण्ठोक्त्याऽहमपि हरेः कस्याश्चित्कोत्तरप्रणयपात्रमासं, न त्वेतादृश्योऽन्या वध्व इति ध्वनितम् । 'कलिः स्यात्कलहे शूरे कलिरन्त्ययुगे युधि' इति विश्वः । 'कलुषं त्वाविलैनसोः' इत्यपि ॥८॥ श्रीजयदेवेति । श्रीजयदेवकवेरिदं भणितं पुण्यवतां कृष्णस्मरणानुकूलादृष्टवतां हरिचरणस्मरणं प्रति संप्रति कलौ अनुरूपं योग्यम् । कीदृशम् ? अतिसुन्दरमोहनं गोपवधूमोहनकारि मधुरिपोः कृष्णस्य रूपं यत्र तत् । अनायासतो हरिस्मरणं भवतीति भावः ॥ ९ ॥ ननु कृष्णस्त्वां विहायान्यगोपीभिः सह विहरति,

---

पाठा०–१ 'इति श्रीगीतगोविन्दे पञ्चमः प्रबन्धः' P.
गीत० ५

गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते
वहति च परितोषं दोषं विमुञ्चति दूरतः ।
युवतिषु चलत्तृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति करोमि किम् ॥ १ ॥

---

गणयतीति । हे सखि! मम चित्तमद्यापि पुनरपि कृष्णे कामं करोति । तर्हि वद किं करोमि । किंविशिष्टे ? युवतिषु गोपीषु चलत्तृष्णे । चलन्ती संभवमाना तृष्णा स्पृहा यस्य तस्मिन् । अपि च मां विना विहारिण्यपि क्रीडाशीलेऽपि । अत्र 'अपि'शब्दः पुनर्योज्यते । किंविशिष्टं चेतः ? वामं मयि विपरीतचरितम् । विपरीतत्वे हेतुमाह—यतः कृष्णस्य सापराधस्यापि गुणसमूहं गणयति कृतानप्यपराधांस्त्यक्त्वा; अपि च,—भ्रमादपि भ्रान्तिं प्राप्यापि कोपं नेहते न चेष्टते । पुनरसंतोषकाले परितोषं वहति । अपि च,—सन्तमपि दोषं दूरतो विमुञ्चति । नीरागजने सानुरागम् । अत एव वामम् । इयमुत्कण्ठिता नायिका । तल्लक्षणम्—'उद्दाममन्मथमहाज्वरवेपमानां रोमाञ्चकण्टकितमङ्गकमावहन्तीम् । संवेद्वेपथुघनोत्कलिकाकुलाङ्गीमुत्कण्ठितां वदति तां भरतः कवीन्द्रः' ॥ 'उत्का भवति सा यस्या वासके नागतः प्रियः । तस्यानागमने हेतुं चिन्तयन्त्याकुला यथा' ॥ अत्र हरिणीवृत्तम् । यमकं

---

स्वं किमिति तं स्मरणीयत आह— गणयतीति । मे मनः कृष्णे पुनरपि काममभिलाषं करोति तत्किं करोमि । कीदृशे कृष्णे ? युवतिषु बह्वीषु चलन्ती वर्धमाना तृष्णा यस्य तादृशे । अत एव मां विना विहारिणि वारंवारं विहरणशीले न तु विहरति । कीदृशं मनः ? अत एव वामं प्रतिकूलम् । वामे हेत्वन्तरमाह—गणयतीति । तस्य गुणानां सौंदर्यादीनां ग्रामं समूहं गणयति परिसंख्याति । भ्रामं कोपं भ्रमादपि नेहते न वाञ्छति । दोषं वैरमवधीरणादिकं दूरतो विमुञ्चति । तत्र हेतुमाह—वहतीति । परितोषं संतोषं वहति । अत्र विभावनाविशेषोक्ती अलंकारौ । निजानुसरणरूपानुरागहेतुं विनाप्यनुरागप्रकाशनात् । अन्याङ्गनासक्तिरूपवैराग्यहेतुसत्त्वेऽपि वैराग्याकथनाच्च । तथा च काव्यप्रकाशे—(१०।१०७)'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना। विशेषोक्तिरखण्डेषु कारणेषु फलावचः ॥' इति । एषा च काव्यप्रकाशकृता व्याख्याता—हेतुरूपक्रियायाः प्रतिषेधेऽपि तत्फलप्रकाशनं विभावना। मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिरिति । 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वके' इति विश्वप्रकाशः । 'भ्रामः क्रोधे रवौ पीडौ' इति । 'कामः स्मरेऽभिलाषे च' इति च

---

पाठा०—१ 'चलत्तृष्णे' P., 'चलत्तृष्णो' RM., S.

**मालवगौडरागेण एकतालीतालेन च गीयते ॥ प्र० ६**

¹निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय वसन्तम् ।
चकितविलोकितसकलदिशा रतिरभसभरेण³ हसन्तम् ।
सखि ! हे केशिमथनमुदारम्
रमय मया सह मदनमनोरथभावितया सविकारम् ॥ ध्रुवपदम् ॥ २

शब्दालंकारः । संशयदीपकावर्थालंकारौ क्रियौचित्यं च ॥ १ ॥ इदानीं कामज्वरसंतप्तहृदया राधा सख्यां दूतीत्वमारोप्य कृष्णेन सहानुसन्धानमभिलषन्ती आह वर्णयतितालेन—निभृतेति । पूर्वं ध्रुवपदं व्याक्रियते—**सखि हे** इति । हे सखि ! मया सह केशिमथनं कृष्णं रमय कामकेलीः कारय । किंभूतम् ? उदारं महान्तम् । किंभूतया मया ? सविकारं नानाविकारसहितम्, विकारः कामजो भावः कुचोदरादिप्रकटनम्; तदुक्तं रसिकसर्वस्वे—'नाभीमूलकुचोदरप्रकटनव्याजेन यद्योषितां साकाङ्क्षं मुहुरीक्षणं स्खलितता नीवीनिबन्धस्य च । केशभ्रंशनसंयमौ च कमितुर्मित्रादिसंदर्शनैः सौभाग्यादिगुणप्रशस्तिकथनैस्तत्सानुरागेङ्गितम् ॥' इति । रतिचेष्टासहितं यथा स्यात्तथा मदनमनोरथभावितया कामकेलीच्छाभावितान्तःकरणया । अथवा,—कथोपलक्षितं रमयेति कृष्णविशेषणत्वेनाह—मदनमनोरथानां भावो विद्यते यस्मिन् स भावी तस्य भावो भाविता तया । किमुक्तं भवति ? यथाऽहं तदभिलाषवती तथा सोऽपि मयि स्यादिति भावः । एवं शृङ्गाररसः संपन्नो भवति । तथा चोक्तम्–'चेष्टा भवति पुंनार्यो रत्युत्थानातिसक्तयोः । संभोगो विप्रलम्भश्च स शृंगारो द्विधा मतः ॥' अथवा,–किंभूतं हरिम् ? सविकारम् । मानसभावसहितमिति कृष्णविशेषणम् । इति ध्रुवः । अथ

॥ १ ॥ अथोत्कण्ठिता राधा सखीं स्वमनोरथमाह—**निभृतनिकुञ्जेति** । गीतस्यास्य गौडमालवरागः, एकताली तालश्च । गीतार्थस्तु—हे सखि ! मया सह केशिमथनं कृष्णं रमय । कीदृश्या मया ? मदनस्य यो मनोरथ इच्छा तद्युक्तो यो भावो रत्याख्यः स जातो यस्यास्तादृश्या । यद्वा,–मदनमनोरथेन भावितया प्राप्तया । ननु को भेद मया प्रार्थने कृते कदाचिन्नायात इत्यत आह—उदारमौदार्यगुणसंयुक्तम् । तया च त्वत्प्रार्थितमवश्यं स दास्यत्येवेति भावः । कीदृशं कृष्णम् ? सविकारं, विकारो मानसो भावस्तत्सहितम् । एवमन्योन्यानुरागपूर्वकत्वेन शृंगाररसपोषणमुक्तम् । अन्यथा रसाभासो भवतीति भावः । यद्वा,–सविकारमिति क्रियाविशेषणम् । विकारः स्तनप्रान्तादिप्रकटनं तत्सहितं यथा स्यादेवं मदनमनोरथभावितयेत्यर्थः । तदुक्तं **रसिकसर्वस्वे**–'नाभीमूलकुचोदरप्रकटनव्याजेन यद्योषितां साकाङ्क्षं मुहुरीक्षणं स्खलितता नीवीनिबन्धस्य च । केशभ्रंशनसंयमौ च कमितुर्मित्रादिसंदर्शनैः सौभाग्यादिगुणप्रशस्तिकथनैस्तत्सानुरागेङ्गितम् ॥' इति ।

पाठा०–१ 'गौडमालव'' RM., 'एकतालेमालवरागे' S. २ 'सखि हे······सविकारम् RP., B. ३ 'रभसरसेन' P., S., D.

प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम् ।
मृदुमधुरस्मितभाषितया शिथिलीकृतजघनदुकूलम् ॥ सखि० ॥ ३॥

पदानि । निभृतेति । तमेवोभयनिष्ठं भावं सूचयन्नाह—किंभूतया मया? निभृतनिकुञ्जगृहं गतया विविक्तकुञ्जगेहं गतया । 'वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः' इत्युक्तत्वात्तथाप्यवसरोचितं व्याख्यातव्यम् । एतेनाभिसारस्थानमुक्तम् । तदुक्तं भरतेन—'विवाहे तीर्थयात्रादौ बन्धनोत्सवके तथा । नटनृत्ते तथा केलौ जागरोद्यानसंगतौ । असतीसङ्गकुले रत्युत्पाताद्युपप्लुवे । चौरिकयाभिसारः स्यात्स्वदारानिह रक्षयेत्' ॥ निशि रात्रौ । अपि च किंभूतम्? रहसि गुप्तस्थाने निलीय तिरोभूय वसन्तम् । अपि च किंभूतया? चकितेन विलोकिताः सकलाः दिशो यया सा । 'कुत्र कृष्णो वसति' इति गवेषयितुमभिसरन्तीं 'सख्यो मां मा द्राक्षु'रिति लज्जया त्रासोत्कम्पेनेति । अपि किंभूतम्? रत्युत्साहवशेन हसन्तम् ॥ २ ॥ अपि च—प्रथमेति । उपभुक्तचरेऽपि हरौ प्रथमसमागम इव लज्जितया तत्कालीनाश्चेष्टाः कुर्वन्त्या या । बहुकालान्तरितमिलितेन प्रथमसमागमता अपि । किंभूतम्? पटुचाटुशतैरनुकूलं सान्त्वनक्षमप्रियवचनशतैरनुनयपरम् । एतदुक्तं भवति—'प्रथममिह हि देयं पूगपुष्पादिकं स्यान्मृदुमधुरवचोभिर्योजयेत्संनिधाने । करतलमथ गात्रे भ्रामयन्नश्चदस्याप्स्फुरितमुदरपृष्ठे मन्दमाश्लिष्य दद्यात् ॥' प्रथमसमागमे कामिन्यो लज्जन्त्यो मानमावहन्ति । तथा च—

अत्र 'कैटभमथन'पदोपादानं सामर्थ्यस्थापनाय । तत्प्रयोजनं च निःशङ्ककेलिप्रतिपादने । भावितेऽत्र प्रथमे व्याख्याने तारकादित्वादितच् । द्वितीये पक्षे 'भावितं वासिते पक्षे' इति विश्वः । पुनः कीदृश्या मया? निभृतमेकान्तं यन्निकुञ्जरूपं गृहं तं प्रति गतया । कीदृशं कृष्णम्? निशि रात्रौ रहस्येकान्ते निलीय तिरोहितीभूय वसन्तं तिष्ठन्तम् । एवंभूतं मां राधा पश्यत्विति कुतोऽपि मत्प्रतारणाय संकुचितमात्मानं कृत्वावस्थितमिति भावः । पुनः कीदृश्या? चकितं यथा स्यादेवं विलोकिताः सकला दिशो यया तादृश्या । कुत्र कृष्णो निलीय तिष्ठतीति कृत्वाऽभिसरन्तीं मां मा कश्चन पश्यत्विति च वाञ्छितं पश्यत्वेवेति च भावः । कीदृशं कृष्णम्? रतौ यो रभस उत्साहस्तद्युक्तो यो रसः शृङ्गाराख्यस्तेन हसन्तम् । कीदृशीं कालक्लेशासहिष्णुम् । तथात्मप्रकटनार्थं पुनः स्थितमपि मामियं न पश्यतीति कृत्वा हसन्तमिति भावः । 'निभृतं रह एकान्तम्' इति धरणिः । 'रभसो वेग उत्साहः' इत्यमरः ॥ २ ॥ पुनः कीदृश्या मया? प्रथमेति । प्रथमसमागमलज्जितया । एवमवधार्याऽहमागता संप्रति कथमेतस्याभे प्रकटयाम्यात्मानमिति लज्जाकारणम् । कीदृशं कृष्णम्? पटु नायिकाप्रसादनदक्षं

टिप्प०–1 अत्र रसवदलंकारो विभावना वा–इति संजी० ।

किसलयशयननिवेशितया चिरमुरसि ममैव शयानम् ।
कृतपरिरम्भणचुम्बनया परिरभ्य कृताधरपानम् ॥ सखि० ॥ ४ ॥

---

'श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथश्चुम्बत्यस्मिन्वदनविकृतिः किं कृता किं न दृष्टः । नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ॥' इति भरतः ॥ अपि किंभूतया? अत एव मृदु मधुरं यथा स्यात्तथा स्मितपूर्वं भाषणं यस्याः सा तया । अपि किंभूतम्? शिथिलीकृतजघनदुकूलं श्लथीकृतं जघनस्थितं पट्टवस्त्रं या । अन्तर्भावितणिजर्थत्वात् श्लथीकरणे सङ्गमस्य हेतुत्वम् । संगमादेव श्लथमभवदिति । तदुक्तं भरतेन—'कान्ते तल्पमुपागते शिथिलिता नीवी स्वयं बन्धनाद्वासो विश्लथमेखलागुणधृतं किंचिन्नितम्बस्थितम् । एतावत्सखि! वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः कोऽसौ कास्मि रतं च कीदृशमिति स्वल्पापि मे न स्मृतिः ॥' ॥ ३ ॥ अपि च,-किसलयेति । किसलयरचिते शयने निवेशितया । 'सङ्केततल्पेऽभिमुखोपविष्टां गाढं पतिः श्लिष्यति, सापि कान्तम् । अन्योन्यगात्रे विशतीव रागाद्बुन्दं तदाहुस्तिलतण्डुलाभिधानम् ॥' अपि च,-ममैवोरसि चिरं शयानम् । एतच्चालिङ्गनभेदापेक्षयोक्तम् । तथा च कोकोक्तम्—'असकृदतनुगाढाश्लेषलीलां वितन्वञ्जनितजघनबाहुव्यत्ययं स्पर्धते तम् । मिथुनमथ मिथोऽङ्गे लीयते निस्तरङ्गं निगदति तिलपूर्वं तण्डुलं तन्मुनीन्द्रः' ॥ अपि च,-कृते परिरम्भणचुम्बने यया सा । एतदप्यालिङ्गनभेदापेक्षयोक्तम् ॥

---

चचाटुशतं प्रियवचनशतं तेनानुकूलम् । पुनः कीदृश्या मया? मृदु कोमलं मधुरं माधुर्यगुणयुक्तं भाषितं यस्यास्तया । तदीयचाटुभिरपहृतलज्जया । किंचित्स्मितभाषितयेत्यर्थः । पुनः कीदृशं कृष्णम्? शिथिलीकृतं स्मितानुरागानुकूलां मां ज्ञात्वा श्लथीकृतं जघनस्थितं दुकूलं पट्टवस्त्रं येन तादृशम् । अशेषनायकमणिश्रीकृष्णदर्शनेन दृढबन्धापि नीवी स्वयमेव स्खलिष्यति ततो मेखलालम्बितं जघनस्थितमेव वासस्तेनापहरणीयमिति जघनेत्युपात्तम् । तदुक्तं रतिरहस्ये—'ओष्ठाग्रं स्फुरतीक्षणे विचलतः कूपोदरे मत्स्यवद्भ्रमतः कुसुमाकुलो विगलति प्राप्नोति बन्धं पुनः । प्रच्छन्नौ भजतः स्तनौ प्रकटतां श्रोणीतटं दृश्यते नीवी च स्खलति स्थितापि सुदृढं कामेङ्गिते योषिताम् ॥' 'चटु चाटु प्रिये वाक्ये' इति कोशः । 'जघनं कटेरधोभाग' इति हारावलिः ॥ ३ ॥ पुनः कीदृश्या मया? **किसलयशयनेति** । किसलयशयने नवपल्लवशय्यायां निवेशितया । कीदृशं तम्? चिरं बहुकालं व्याप्य ममैवोरसि शयानं सुप्तम् । एतेनालिङ्गनविशेषं क्षीरनीराख्यमुक्तम् । तल्लक्षणं च **पञ्चसायके**—'गात्रोपरिष्टादथ तस्य मध्ये संलीयते यन्मिथुनं शरीरम् । कामाभिमानाक्षतपूर्णचेष्टं तत्क्षीरनीराख्य-

---

पाठा०—१ 'किशलय'' C., P., S.

अलसनिमीलित[1]लोचनया पुलकावलिललितकपोलम् ।
श्रमजल[2]सकलकलेवरया वरमदनमदादतिलोलम् ॥ सखि० ॥५॥

---

'जघनकलितकान्तश्रोणिरभ्योपरिष्टाद्व्रजति यदिह नारी स्रस्तकेशोत्तरीया । करजरदनकृत्यं चुम्बनं वा विधित्सुः कलयति जघनोपश्लेषणं तन्मुनीन्द्रः' ॥ अपि च,-आश्लिष्य कृतमधरपानं येन । अत्रायं भावः—'अधरदशनजिह्वापानमालिङ्ग्य कुर्याज्जघनवदनपार्श्वेष्वेति जिह्वाप्रचारम् । ग्रहणमथ विदध्यान्मुक्तकेशस्तनोरःकुचयुगभगदेशे मर्दनं चोरुयुग्मे' इति ॥ ४ ॥ अपि च,-अलसेति । अलसे च ते निमीलिते च तादृशे लोचने यस्याः सा । एतेनालिङ्ग(ङ्गि)ककामविकारः सूचितः । तथा च नायिकालक्षणे—'यत्र मूर्धानमारभ्य पादपर्यन्ततः क्रियाः । अङ्गेन विहिता यस्मात्तस्मादाङ्गिकमुच्यते' ॥ अपि च,-पुलकावल्या रोमाञ्चपङ्क्त्या सुन्दरकपोलम् । अनेन सात्त्विकविकाराविर्भावः सूचितः । यदुक्तं भरतेन—'स्मरणे संगमे चैव प्रियस्यालोकने तथा । हेतुत्रयं समासाद्य सात्त्विकः संप्रवर्तते ॥ स्वेदः कम्पोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलयाविल्यष्टौ सात्त्विका मताः' ॥ अपि च श्रमजलेन गमनायासजनितेन स्वेदेन सकलं सशोभं शरीरं यस्याः सा । 'श्रमजलसिक्तम्' इति वा पाठः । श्रमजलशकलानि स्वेदबिन्दवः कलेवरे यस्या इति वा । 'सकल'शब्दः संपूर्णपर्यायो वा ।

---

मिदं प्रदिष्टम् ॥' इति । कीदृश्या मया ? कृते परिरम्भणचुम्बने यया तादृश्या । एतच्च जघनोपश्लेषरूपालिङ्गनाभिप्रायेण । तदुक्तम्—'जघनकलितकान्तश्रोणिरभ्योपरिष्टाद्व्रजति यदिह नारी स्रस्तकेशोत्तरीया । करजरदनकृत्यं चुम्बनं वा विधित्सुः कलयति जघनोपश्लेषमेनं मुनीन्द्रः ॥' इति । चुम्बनमपि प्रकृते समौष्ठाख्यं बोध्यम् । तदुक्तं पञ्चसायके—'ओष्ठेन कान्तस्य मुखोष्ठयुग्मं निपीड्य जिह्वाचिततालुभागम् । चुम्बोत्सवं तनुते यत्र नारी प्रोक्तं समौष्ठं कविभिः पुराणैः ॥' इति । कीदृशं कृष्णम् ? परिरभ्यालिङ्ग्य कृतं मदीयाधरपानं येन तादृशम् । अनेन लालाटिकमुक्तम् । उक्तं च—'अन्योन्यसंसक्तमुखं कपोलं नेत्रं ललाटं हृदयं च बाहुम् । सानन्दभावं श्रमनीलिताक्षं लालाटिकं तत्त्वविदो वदन्ति ॥' इति । 'पल्लवोऽस्त्री किसलयं' इत्यमरः ॥ ४ ॥ पुनः कीदृश्या ? । अलसेति । अलसे आलस्ययुक्ते अत एव निमीलिते लोचने यया । अत्र निमी-

---

१ 'विलोचनया' P. २ '°सकल°' B. 'सिक्तकलेवरया' RM., S., P., O., S., D.

---

टिप्प०—1 सुरतानन्दखेदजलेन सिक्तं युक्तं संपूर्णं वा कलेवरं शरीरं यस्याः । एतेन सुरतानन्दपूर्तिरुक्ता—संजी० । 2 एतेनाङ्गिकः कामोत्सव उक्तः; यथा—'यत्र मूर्धानमारभ्य पादपर्यन्तिकाः क्रियाः । अङ्गेन विहिता यस्मात्तस्मादाङ्गिकमुच्यते ॥' इति संजी० ।

कोकिलकलरवकूजितया जितमनसिजतन्त्रविचारम् ।
श्लथकुसुमाकुलकुन्तलया नखलिखितघनस्तनभारम् ॥ सखि० ॥६॥

---

अपि च,–उत्तमकाममदादतिलोलम् अतिसतृष्णम् ॥ ५ ॥ अपि च । कोकिलेति । कोकिलकलरवयोः कूजितमिव कूजितं यस्याः । 'कलरव'शब्दः पारावतपर्यायः । एतदपि सुरताधिकारायोक्तम् । तदुक्तं रसिकसर्वस्वे—'हाय्यूहलावकमयूरकपोतहंसपारावतादिरुतवत्कूजितं रतान्ते । तन्मिश्रनिःश्वसितसीत्कृतहासनादैः संयोजयेन्मदनचुम्बनमैथुनादौ' ॥ इति । अपि च,–जितो न्यक्कृतः कामशास्त्रविचारो येन । वात्स्यायनादिभ्योऽपि कुशल इत्यर्थः । अपि च,–श्लथकुसुमा आकुला व्यस्ताः कुन्तला यस्याः सा । अपि च,–नखैर्विलिखितोऽङ्कितो निबिडः स्तनभारो येन । एतेन बाह्यरतमुक्तम् । तदुक्तं

---

ललितमित्युपादानादवघट्टनाख्यचुम्बनमुक्तम् । उक्तं च—'हस्तेन नेत्रे च निमील्य भर्तुः संमीलिताक्षी वदने स्वजिह्वाम् । निक्षिप्य च क्रीडति यत्र लोला स्मरार्ता रसज्ञैरवघट्टसंज्ञम् ॥' इति । कीदृशम् ? पुलकावल्या रोमाञ्चपङ्क्त्या ललितौ मनोहरौ कपोलौ यस्य तम् । पुनः कीदृश्या मया ? मदनचिन्तया जनितं जलं प्रस्वेदस्तेन सिक्तमार्द्रं कलेवरं यस्यास्तया । क्वचित् 'श्रमजलसककलेवरया' इति सुगमः पाठः । कीदृशं तम् ? वर उत्कृष्टो यो मदो हर्षस्तेनातिशयेन लोलं चपलम् । 'काये च कलेवरम्' इति विश्वः ॥ ५ ॥ पुनः कीदृश्या मया ? कोकिलेति । कोकिलस्य कलोऽव्यक्तमधुरो यो रवः शब्दस्तद्वत्कूजितं शब्दितं यस्यास्तया । अनेन कूजिताख्यं बाह्यरतमुक्तम् । तदुक्तं पञ्चसायके—'पिकशिखिकलहंसप्रायपक्षिस्वनानां स्वरितमनुकरोतीत्यङ्गना मन्मथार्ता । मुखदशनविवर्ता तत्कवीन्द्रा वदन्ति स्तनितमिति समासाच्चित्रसंभोगकाले ॥' इति । ननु वात्स्यायनादिशास्त्रेऽन्य एव क्रम उक्तः । तदुक्तम्—'आश्लेषं प्रथमं कुर्याद्द्वितीयं चुम्बनं तथा । तृतीयं नखदानं च दंष्ट्रापातं चतुर्थकम् । पञ्चमं क्षेपणं प्रोक्तं षष्ठं प्रहरणं तथा । सप्तमं कण्ठशब्दश्च बन्धाख्यं चाष्टमं रतम् ॥' इति । तथा चात्र कण्ठशब्दस्य सप्तमस्थाने वक्ष्यमाणनखदानादिरताप्रकरणे श्रीकृष्णस्य रसिकताभङ्गः स्यादित्यत आह—जितेति । जितोऽवज्ञातो मनसिजतन्त्रस्य कामशास्त्रस्य विचारो येन तम् । अयं भावः—चतुःषष्टिकलाकुशलस्यापि परमस्त्रीनायकस्य जगदीश्वरस्य स्वानुकूलोद्दामनायिकासंनिधौ स्वममतया क्रमस्मरणाभावान्न दोषः । तदुक्तम्—'रतिचक्रप्रवृत्तस्य नैव शास्त्रं न च क्रमः' इति । पुनः कीदृश्या ? श्लथाः केशग्रहणपूर्वकचुम्बनादिपानेन शिथिलाः कुसुमैराकुला व्याप्ताश्च कुन्तला यस्यास्तया । नखेन लिखितः क्षतयुक्तः कृतो घनस्तनभारो येन तम् । अत्र लिखितपदोपादानात्पङ्कजपत्राख्यं नखदानमुक्तम् ।

---

टिप्प०–1 कोकिलपुंस्त्वं पुरुषायिताभिप्रायादिति–बाल० ।

चरणरणितमणिनूपुरया परिपूरितसुरतवितानम् ।
मुखरविशृङ्खलमेखलया सकचग्रहचुम्बनदानम् ॥ सखि० ॥ ७ ॥
रतिसुखसमयरसालसया दरमुकुलितनयनसरोजम् ।
निःसहनिपतिततनुलतया मधुसूदनमुदितमनोजम् ॥ सखि० ॥८॥

---

भरतेन—'आश्लेषचुम्बननखक्षतताडनानि संमर्दनं प्रसरणं खलु शिक्षितानि । जिह्वाप्रवेशरसनग्रहणं तु नाभीक्षोभं रतं वदति बाह्यरतानि तज्ज्ञः' इति ॥६॥ अपि च,–चरणेति । चरणयोः रणितौ शब्दितौ मणिनूपुरौ यस्याः । ग्राम्याख्यबन्धसूचनायोक्तमिदम् । तदुक्तं रसिकसर्वस्वे—'उत्तानितायाः सुरते यदोरू शीर्षैकान्तोऽन्नतौ भवेतांम् । ग्राम्यं तदा ख्यातमिति यदाख्या बहिर्भवेत्तः किल नागराख्यम् ॥' परिपूरितः संपूर्णतां नीतः सुरतवितानः सुरतावसरो प्रस्तावो वा येन । अपि च,–मुखरा वाचाला विशृङ्खला काञ्ची यस्याः । अथवा 'मुखरविशृङ्खलमेखलया' इति पाठः । अपि च,–सकचग्रहं केशग्रहणेन सहितं चुम्बनदानं यस्य ॥ ७ ॥ अपि च,–रतिसुखेति । रतिसुखसमये द्वयोरेककालं रेतःकणक्षरणसमये यो रसः तदेकाग्रीभावस्तेन अलसा मन्थरा । एतेन च्युतिसुखसान्निध्यं सूचितम् । उक्तं च रसिकसर्वस्वे—'मुहुश्च खजनाश्लेषः सीत्कारो वीतलज्जता । अङ्गावधूननं नार्याश्च्युतिसान्निध्यसूचकम्' ॥

---

तदप्युक्तं पञ्चसायके—'अत्यूर्ध्वमेकं स्फुरितोर्ध्वरेखं प्राहुः क्षतं पङ्कजपत्रसंज्ञम् । दोर्मूलनाभिस्तनवक्षसंधावित्यूर्ध्वयोगं प्रवदन्ति महेशाः ॥' इति । 'तन्त्रं प्रधानशाखयोः' इति विश्वः । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः ॥ ६ ॥ एतावत्पर्यन्तं चुम्बनालिङ्गनादिना सप्तविधं बाह्यरतमुक्तम् । संप्रति बन्धनाद्यष्टमरतमाह—चरणेति । चरणयो रणितौ शब्दायमानौ मणिखचितौ नूपुरौ यस्यास्तया । एतच्च भ्रामरिकं नाम विपरीतरताभिप्रायेणोक्तम् । तदुक्तं रतिरहस्ये—'चक्रवद्भ्रमति कुञ्चिताङ्घ्रिका भ्रामरं तु जघने समुद्दिते' इति । कीदृशम् ? परिपूरितं सुरतवितानं रतिविस्तारो येन तम् । अनेन नायककर्तृका बन्धाः कथिताः । भ्रामरकबन्धश्रान्तां विदित्वा किसलयशयनस्थितां मां स्वयमपि रमयिष्यतीति भावः । कीदृश्या ? पूर्वं मुखरा शब्दायमाना पश्चाद्विशृङ्खला त्रुटितगुणा मेखला काञ्ची यस्यास्तया । अनेन प्रेङ्खोलितनामकं विपरीतरतसुखम् । तदप्युक्तं पुरुषायितप्रकरणे—'स्वजघनमेव दोलायमानं सर्वत्र भ्रामयेदिति प्रेङ्खोलितम्' इति । तत्र 'सर्वत्र'शब्दो मनोरमाकारेण व्याख्यातः मध्यात्पूर्वपश्चिमभागे दक्षिणोत्तरभागे चेति । रहस्ये—'सर्वतः

---

टिप्प०–1 मधुसूदने भ्रमाधरपानकर्तरि दैत्यसूदने वा मुदित आनन्दं प्रापितो मनोजः कंदर्पो येन । उक्तं रतिरहस्ये—'अवसानेऽपि च प्रीतिरुपचारैरुपस्कृता । सविश्रम्भकथायोगै रतिं जनयते पराम् ॥' इति संजी० ।

श्रीजयदेवभणितमिदमतिशयमधुरिपुनिधुवनशीलम् ।
सुखमुत्कण्ठितगोपवधूकथितं वितनोतु सलीलम् ॥ सखि० ॥ ९ ॥

---

अपि च,—दरमुकुलिते ईषन्निमीलिते नयनसरोजे यस्य येन वा। एतच्च च्युतिकालसूचकम् । उक्तं च **भरतेन** 'मूर्च्छना मीलनं चाक्ष्णोश्च्युतिकालस्य सूचकम् । सर्वमेतत्परिज्ञाय साधयेच्च स्वयं नरः ॥' अपि च—निःसहा असमर्था निपतिता शयन एव तनुलता यस्याः । एतेन विपरीतसुरतं सूचितम् । तदुक्तं **कोकेन**—'स्वेच्छया मिलितवल्लभोऽथवा योषिदाचरति पुरुषायितम् । आदितो घटितयत्नमेव वा तं निपात्य नरवद्विचेष्टते ॥ चक्रवद्भ्रमति कुञ्चितत्रिका भ्रामयेच्च जघनेऽथ तद्गते । सर्वतः कटितटभ्रमी यदि प्रेङ्खपूर्वमिदमुक्तमुत्तमम् ॥' एतेन च्युतिकालोत्तरावस्था सूचिता । तदुक्तं **भरतेन**—'अङ्गे स्वेदः श्लथत्वं च केशवस्त्रादिसंवृतिः । जाते च्युतिसुखे नार्या विरामेच्छा च गम्यते ॥' अपि च,—मधुसूदनं मधुविनाशिनम् । उदितमनोजमच्युतिकामम् ॥ ८ ॥ अपि च,—श्रीजयदेवेति । इदं गीतप्रतिपादितप्रमेयक-

---

कटितटभ्रमो यदि प्रेङ्खपूर्वमिदमुक्तमुत्तमम्' इति । अत्रापि 'सर्व'शब्दार्थः स एव । कीदृशं तम् ? सकचग्रहं केशग्रहणसहितं चुम्बनदानं यस्य तम् । केशग्रहणपूर्वकचुम्बनं विपरीतमेवोक्तम् । तदुक्तम्—'शृङ्गारे चुम्बनं कार्यं पुंसालिङ्गनपूर्वकम् । विपरीतरते नार्या सकचग्रहचुम्बनम् ॥' इति । 'मेखला खड्गबन्धः स्यात्काञ्चीशैलनितम्बयोः' इति विश्वः ॥ ७ ॥ पुनः कीदृश्या मया ? **रतिसुखेति** । रतिसुखसमये सुरतसुखप्राप्तिकाले लोकोत्तरां काष्ठां प्राप्तो यः संभोगशृङ्गाराख्यो रसस्तेनालसया मन्थरया । कीदृशं कृष्णम् ? दर ईषन्मीलिते मुद्रिते नयनसरोजे नेत्रकमले यस्य तम् । एतेन युगपदेव द्वयोरानन्दावाप्तिः सूचिता । तदुक्तं **रतिरहस्ये**—'मूर्च्छना मीलनं चाक्ष्णोश्च्युतिकालस्य लक्षणम्' इति । पुनः कीदृश्या मया ? निःसहाऽसमर्था अत एव किसलयशयने निपतिता तनुलता यस्यास्तया । अनेन सुरतान्तसमय उक्तः । तदुक्तम्—'अङ्गे स्वेदः श्लथत्वं च केशवस्त्रादिसंहृतिः । जाते च्युतिसुखे नार्या विरामेच्छा च जायते ॥' इति । नन्वभिसारे विघ्नबाहुल्यात्कथमेतावान्क्रियाकलापः संभविष्यतीत्यत आह—**मधुसूदनमिति** । मधुनामानं दैत्यं सूदितवान् यस्तस्याभिसारविघ्ननिवारणे

---

पाठा०—१ 'सुखमुत्कण्ठितराधिकया कथितं'. P.

---

टिप्प०—1 एवं मानादिप्रकरणेऽभिमते मुनिराड् हरिवंशे—जयदेवेन चात्रैव श्रीकृष्णस्य रसास्वादलीलामयमूर्तेर्बहुधा चेष्टितं निरूपितम्; तेन एषु व्याख्यानेषु कल्पना नाशङ्कनीया—दीपिका । 2 अत्र राधामोहनावालम्बनविभावैरनुकूलश्रीकृष्णभाववशीकारिणी रतिः स्थायीभावः; वनाद्युद्दीपनविभावाः; स्मितकटाक्षाद्यनुभावाः; 'स्मितसुधामुग्धानन'मिति 'कुन्तलवीक्षित'मित्यनेन च दर्शिताः । स्वेदकम्पादयः सात्त्विकाः । 'अतिस्वेदार्द्र' इत्युद्दिष्टत्वं च तेषां दर्शितम् । 'हृत्प्रसरत्विकासवर्धं' इति वैवश्योद्दीप्तसात्त्विकः, 'साध्वसं' इति व्यभिचारिभावः । लज्जामदादिकाश्च व्यभिचारिणः । इत्थं महाकविना श्रीमद्वृन्दावनेश्वर्याः परमविदग्धाया वकत्वेन साक्षाद्रससम्राट् शृङ्गारो वर्णितः—दीपिका ।

हस्तस्रस्तविलासवंशमनृजुभ्रूवल्लिमद्बल्लवी-
वृन्दोत्सारिदृगन्तवीक्षितमतिस्वेदार्द्रगण्डस्थलम् ।

---

स्फुरदभिलषितकृष्णेनोत्कण्ठितगोपवधूकथितं राधाकथितं सुखं वितनोतु । अर्थात् गायतां शृण्वतां च । किंविशिष्टम् ? श्रीजयदेवेन भणितम् । जयदेवभणितरूपमित्यर्थः । श्रीजयदेवेति सर्वत्र श्रियः पद्मावत्या आराधको जयदेवः श्रीजयदेव इति मध्यमपदलोपी समासः । पुनः किंभूतम् ? अतिशयेन मधुरिपोर्निधुवनशीलं सुरतचरितं यत्र तज्जयेति । उत्कण्ठितेत्यादि । उत्कण्ठिता नायिका । विप्रलम्भः शृङ्गारः । अत्र रूपकछन्दः ॥ ९ ॥ इदानीं मनसा भावितं परमेश्वरं दृष्ट्वा सखेदमाह—हस्तस्रस्तेति । हे सखि ! 'बत' इति खेदे (?) । अहं कानने वृन्दावने गोविन्दं पश्यामि व्यलीकं हृष्यामि च । किंविशिष्टं गोविन्दम् ? व्रजसुन्दरीगणवृतं गोपाङ्गनासमूहयुक्तम् । पुनः किंभूतम् ? स्मितसुधामधुरमाननं यस्य तम् । पुनः किंभूतम् ? मामुद्वीक्ष्य मां दृष्ट्वा हस्तात्स्रस्तः पतितो विलासवंशः केलिवेणुर्यस्य । अत एव विलज्जितं विलक्षीभूतम् । पुनः किंभूतम् ? अतिस्वेदेनार्द्रं गण्डस्थलं यस्य । 'गण्डस्थलाम्' इति

---

क्रियान्वयिश्रम इति भावः । कीदृशं मधुसूदनम् ? उदितस्तत्कालत्रुटितः मुक्ताहारकाञ्चीगुणन्यासः स्थानम् । पुनः सचन्दनं संजातपयोधरश्रोणीपरिसरस्य रक्षणादिना सलज्जितस्मितराधाया अङ्गविलोकनादिना पुनराविर्भूतो मनोजः कामो यस्य तम् । तदुक्तम्—'अधस्तने च्युते प्रीतिरुपचारैरुपस्कृता । सविभ्रमकथायोगैस्तै रतिं नयते पराम् ॥' इति । अत्रोत्कण्ठिता नायिका । तदुक्तम्—'नैशागतः समुचितेष्वपि वासरेषु प्राणेश्वरः स्वगुरुकार्यवशेन यस्याः । दुर्वारवृत्तविरहज्वरतापिताङ्गीमुत्कण्ठितां वदति तां भरतः कवीन्द्रः ॥' इति ॥ ८ ॥ श्रीजयदेवेति । इदं जयदेवकविना भणितं यदुत्कण्ठिताया गोपवध्वा राधिकायाः कथितं वचनं सुखं तनोतु विस्तारयतु पठतां शृण्वतां च । कीदृशम् ? मधुरिपोः श्रीकृष्णस्य निधुवनं सुरतक्रीडां शीलयतीत्येवंरूपम् । 'आपोवनं निधुवनं सुरतेन समं त्रयम्' इत्यमरः ॥ ९ ॥ स्वमनोरथान्तरमाह—हस्तेति । हे सखि ! अहं गोविन्दं कदा पश्यामि । कदाचिद्गोविन्ददर्शनं भविष्यतीत्याशङ्कायां काकुः । अत एव हृष्यामि । तद्दर्शनजन्य आनन्दो मम कदाचिद्भविष्यतीत्यभिप्रायांशेन । पश्यामि हृष्यामीति भविष्यत्सामीप्ये वर्तमानप्रयोगः । कीदृशम् ? व्रजसुन्दरीगणवृतं गोपवधूकदम्बपरिवृतम् । ननु सपत्नीभिः परिवृतं दृष्ट्वा कथं ते हर्षो भविष्यतीत्यत आह—मामिति । मामुद्वीक्ष्य दृष्ट्वा विलज्जितम् । पुनः कीदृशम् ? 'अन्यवधूभिः परिवृतोऽहमनया दृष्टः' इति हेतोर्विषादसूचकं यत्स्मितं तदेव शुभ्रत्वादतिस्पृहणीयत्वाच्च सुधा तया मुग्धं मनोहरमाननं मुखं यस्य ।

---

पाठा०—१ 'हस्तश्रस्त' C.

मामुद्वीक्ष्य विलज्जितं स्मितसुधामुग्धाननं कानने
गोविन्दं व्रजसुन्दरीगणवृतं पश्यामि हृष्यामि च ॥ १० ॥
दुरालोकस्तोकस्तबकनवकाशोकलतिका-
विकासः कासारोपवनपवनोऽपि व्यथयति ।

पाठे मामित्यस्य विशेषणम् । संजातसात्त्विकभावां मां दृष्ट्वा सोऽपि संजातसात्त्विकभाव इति हृष्याम्यस्येति युक्तम् । पुनः किंभूतम् ? अनृजुभ्रूवल्लिमद्बल्लवीवृन्दोत्सारिदृगन्तवीक्षितम् । कुटिलभ्रूवल्लियुतानां बल्लवीनां वृन्दे उत्सारि ऊर्ध्वप्रसरणशीलं दृगन्तवीक्षितं कटाक्षेक्षणं यस्य । अथवा,–अनृजुभ्रूवल्लिमद्बल्लवीवृन्देन उत्सारिणा दृगन्तेन वीक्षितम् । एतावता राधां प्रति तस्य स्वभावावलोकनं दृष्ट्वाऽन्याभिरपसृतम् । अत्र शार्दूलविक्रीडितं छन्दः । तथा दीपकमलंकारः । विप्रलम्भशृङ्गारो रसः । अत्र गोविन्दस्य व्रजसुन्दरीपरिवृतत्वेऽपि यत् आत्मौपाधिकदर्शनस्य लज्जिताहेतुत्वेन हर्षदर्शनकर्म अतोऽपादानमौचितीमावहति । पाञ्चाली रीतिः । लाटानुप्रासश्च । दक्षिणो नायकः । अन्यत्सर्वं समानम् ॥ १० ॥ इदानीं पुनरेव विप्रलम्भविभावानाह—दुरालोक इति । हे सखि ! दुरालोकस्तोकस्तबकनवकाशोकलतिकाविकासः मां व्यथयति । दुःखेनाऽऽलोक्यते विरहिभिरिति दुरालोकः । दुरालोकः स्तोकोऽल्पकः स्तबको गुच्छो यस्याः सा । अशोकलतिकायाः विकासः अशोकलतिकाविकासः । नव एव नवकः । प्रशंसायां कः । नवकश्चासावशोकलतिकाविकासश्च । दुरालोकस्तोकस्तबकश्चासौ नवकाशोकलतिकाविकासश्च सः । अपि च,–अयं कासारोपवनपवनो व्यथयति । न केवलं सः पवनोऽपीति । 'कासारः सरसी सरः' । अथवा 'दुरालोक' इत्यादिपवनविशेषणत्वेन

पुनः कीदृशम् ? अनृजुः कुटिला भ्रूलता यासामेतादृश्यो या बल्लव्यो गोपवध्वस्तासां वृन्दमुत्सारयत्येवंशीलं दृगन्तवीक्षितं नेत्रान्तेनावलोकितं यस्य तम् । मय्यागतायां भिया दृगन्तचेष्टयान्यगोपीरपसारयतीत्यर्थः । पुनः कीदृशम् ? हस्तात्करतो विगलितो मद्दर्शनेन साध्वसवशात्स्खलितो विलासवंशः क्रीडावेणुर्यस्य तम् । पुनः कीदृशम् ? अतिशयेन स्वेदैरार्द्रं गण्डस्थलं यस्य तम् । सर्वत्र मामुद्वीक्ष्येत्यस्यां संबन्धः ॥ १० ॥ हे सखि ! धैर्यमवलम्बस्व मिलिष्यत्येव त्वां हरिरित्याश्वासयन्तीं दूतीमेव त्वरयितुमाह—दुरालोकेति । हे सखि ! स्तोकोऽल्पः स्तबको गुच्छो यस्या एतादृशी या नविकासिनवाऽशोकलतिकानुकम्प्याशोकशाखा तस्या विकास

पाठा०–१ 'विलक्षितस्मित°' C., विलज्जितस्मित°' D., B, P. २ 'दुरालोकः स्तोकस्तबकनविका–' BM., B. ३ '°कलिका°' D. ४ 'विकाशः' P., C., D., S.

टिप्प०–1 अत्र प्रियोक्तिनामायमलङ्कारः । तदुक्तं दण्डिना–'प्रीतिप्रकाशनं यत्तस्य प्रेयमित्यभिधीयते' इति काव्या० ।

अपि भ्राम्यद्भृङ्गीरणितरमणीया न मुकुल-
प्रसूतिश्चूतानां सखि ! शिखरिणीयं सुखयति ॥ ११ ॥

---

योजनीयम् । दुरालोकस्तोकस्तबका चासौ नवकाशोकलतिका चेति तां विकासयति स इति कर्मण्यण् । अथवा,–अशोकलतिकाया विकासो यस्मादिति । एतेन वायोस्त्रैविध्यमुक्तम् । अपि च,–न केवलं पवनः, अपि तु चूतानां मुकुलप्रसूतिरपि न सुखयति । कीदृशी मुकुलप्रसूतिः ? शिखरिणी साग्रा । पुनः कीदृशी ? भ्राम्यद्भृङ्गीरणितरमणीया । भ्राम्यन्त्यः परितः स्फुरन्त्यो या भृङ्ग्यो भृङ्गाङ्गनास्तासां रणितेन शब्दितेन रमणीया । अत्र मधुलिडङ्गनाग्रहणं पुरुषान्तराभिलाषनिवृत्त्या औचितीमावहति । अत्र शिखरिणी वृत्तम् । समुच्चयोऽलंकारः । लाटानुप्रासः शब्दालंकारश्च । क्रियौचित्यं च । विप्रलम्भः शृङ्गारो रसः । सर्वत्र स्थितिलया गीतिः । मागधी गौडीया च रीतिः ॥ ११ ॥

---

उद्बोधो दुरालोको दुःखेनालोकयितुं शक्यः । नविकेत्यत्र ह्रस्वः । लतिकेत्यत्रानुकम्पायां कः । मद्बलपालिताऽत एवानुकम्प्याऽशोकलतिका दुरालोकेति भावः । किमपरम् ? कासारः सरस्तत्संबन्धि यदुपवनं तत्संबन्धी यः पवनो वायुः सोऽपि व्यथयति । दुःखं ददातीत्यर्थः । 'कासार'पदेन वायोः शैत्यं कथितम् । उपवनसंबन्धित्वेन सौगन्ध्यं मान्द्यं च ध्वनितम् । यतो वनवृक्षैरपहृतगतित्वेन मन्द एव वायुर्भवतीति । यद्वा,–स्तोकेत्यादि वायोरेव विशेषणम् । तदा स्तोकस्तबकनवकाशोकलतिकां विकासयतीत्येवंभूतः पवनो व्यथयतीत्यन्वयः । नन्वभिमुखमागच्छन्पवनस्खलनादिना निवार्यतामित्यत आह—दुरालोक इति । अतीन्द्रिय इत्यर्थः । तथा चाकस्मादेवायं न दृश्यत इति भावः । अपि च इयं शिखरिणी गोवर्धनगिरौ वर्तमाना चूतानामाम्राणां मुकुलप्रसूतिरपि कुड्मलोद्गमोऽपि न सुखयति । विकासदशायां तु को वेद किं करिष्यतीति कविना ध्वनितम् । प्रसूतिः शिखरिणी । प्रशस्ताग्रभागवतीत्यर्थः । शिखरिणीत्यत्र प्रशंसायामिन् । यद्वा,—इयं शिखरिणी मल्लिका न सुखयतीत्यर्थः । कीदृशी ? भ्राम्यन्तीनां भ्रमराङ्गनानां रणितिभिर्गुञ्जितैः रमणीया । शिखरिणीनामकं छन्द इत्यपि ध्वनितम् । तल्लक्षणं तु वृत्तरत्नाकरे—'स्तोकोऽल्पे चातके' इति विश्वः । 'स्यादुच्छकस्तु स्तबकः' इत्यमरः । 'लता ज्योतिष्मतीवृक्षशाखावल्लिप्रियङ्गुषु' इति विश्वः । 'कासारः सरसी सरः' इत्यमरः । 'श्रीरसे मल्लिकायां च प्रोक्ता शिखरिणी बुधैः' इति विश्वः ॥ ११ ॥

---

पाठा०–१ 'रणितिरमणीया' RM. B. २ 'शिखरिणि' B.

---

टिप्प०–1 भृङ्गीनां चलनं नायकान्वेषणार्थमिति ध्वनितम्–इति पद्म० ।

साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित-
भ्रूवल्लीकमलीकदर्शितभुजामूलोर्ध्वहस्तस्तनम् ।
गोपीनां निभृतं निरीक्ष्य गमिताकाङ्क्षश्चिरं चिन्तय-
न्नन्तर्मुग्धमनोहरं हरतु वः क्लेशं नवः केशवः ॥ १२ ॥

इति जयदेवकृतौ गीतगोविन्दे अक्लेशकेशवो नाम
द्वितीयः सर्गः ॥ २ ॥

---

इदानीं सर्गान्ते कविर्भक्तजनानाशास्ते—साकूतेति । केशवो हरिर्वो युष्माकं क्लेशं हरतु । किंलक्षणः ? गमिताकाङ्क्षः गमिता नाशं नीता आकाङ्क्षाऽभिलाषो येन स तथा । अर्थात् गोपीषु । किं कुर्वन् ? चिरं निभृतं यथा स्यात्तथा निरीक्ष्यान्तर्हृदये चिन्तयन् । किं निरीक्ष्येत्यपेक्षायामाह—साकूतस्मितं साभिप्रायमीषद्धसितम् । पुनः किम् ? आकुलाकुलगलद्धम्मिल्लम् । आकुलाकुलं कामोद्रेकाद्रोमाञ्चोद्गमादिहेतुना गलद्धम्मिल्लं विगलत्केशबन्धम् । पुनः किम् ? उल्लासितभ्रूवल्लीकमुत्क्षिप्तभ्रूवल्लीकम् । पुनः किम् ? अलीकदर्शितभुजामूलोर्ध्वहस्तस्तनम् । भुजायाः मूलं भुजामूलं, भुजामूले ऊर्ध्वौ यौ हस्तौ भुजामूलोर्ध्वहस्तौ । अलीकं दर्शितौ भुजमूलोर्ध्वहस्ताभ्यां स्तनौ यत्र कर्मणि तत् । कासामित्यपेक्षायामाह-गोपीनाम् । तच्चतुष्टयं हेतुगर्भपरत्वेन विशिनष्टि-मुग्धमनोहरमिति । मुग्धानां मूर्खाणां मनो हरतीति न मत्सदृशस्येति गमिताकाङ्क्षत्वे हेतुः । तदेवाग्रिमे सर्गे प्रकटयिष्यति । 'राधामाधाय हृदये तत्याज व्रजसुन्दरीः' इत्यादिना । अत एव नवः सकलपुंमपेक्षया चरितविशेषेण नवोऽभ्यासश इव 'सुभाषितेन गीतेन युवतीनां च लीलया । चेतो न भिद्यते यस्य स वै मुक्तोऽथ वा पशुः ॥' इति वचनात् । अथवा,-नूयते स्तूयत इति नवः । अथवा,-

---

पाठा०-१ 'मूलार्धहस्त°' B., 'बालार्धहस्त°' C., 'मूलार्धहस्त°' S.
२ 'दमिताकाङ्क्ष°' C., 'गमिताशङ्क°' S. ३ 'मनोहरो' P.

---

टिप्प०-1 अलीकेन छलेन दर्शिता भुजा मूलार्धहस्तस्तनाः यत्र कर्मणि तत् । अत्र 'अर्ध'शब्दो हस्त-स्तनाभ्यां संबध्यते । हस्तौ च स्तनौ चेति द्वन्द्वसमासः । जृम्भणादिव्याजेन भुजामूलार्धहस्तस्तनप्रकटनमिति भावः । किं चार्धजृम्भणमप्यत्र हेयम्; यदुक्तम्—'वामबाहुः शिरोलग्नो यत्र वामस्तनोन्नतिः । सा स्यादूर्ध्वविलासं च तदुर्धं त्वर्धजृम्भितम्' इति-दीपिका । 2 निलनूतन इति वा निलानुभूतस्य अपि नानुभूत इव प्रतीतेः । तथा—'कुवलयतनुधर्मैर्यामवृन्दानि भिन्दन् सुमुखि ! निशितदीर्घापाङ्गकाण्डच्छटाभिः । युगपदयमपूर्वः कः पुरो विश्वकर्मा मरकतमणिखण्डैः कोष्ठकश्रीं चिनोति'-दीपिका ।

नवस्तरुणः। तरुणं दृष्ट्वा कामिनीनां कामचेष्टा जायत एव। अथवा,-अस्मिन्पक्षे गोपीनां निभृतं भावं निरीक्ष्येति व्याख्येयम्; तदा साकूतस्मितेत्यादि चतुर्णामपि पदानां भावविशेषणपक्षे निक्षेपः। मुग्धमनोहरमिति क्रियाविशेषणम्। अत्र विदग्धो नायकः। समुच्चयाशिषावलंकृती। शार्दूलविक्रीडितं वृत्तम्। परिकरोऽलंकारश्च। अत्र यदुकुलकामिनीकामपूरकस्य कामजनकस्य विलासवतीविलासादिभिरगूढस्य यन्नवत्यविशेषणेनान्याढ्यत्वमुपपादितं तद्विचार्यमाणमौचित्यचारुतामाचरति। यदाहुः—'विशेषणैः समुचितैर्विशेष्यार्थः प्रकाश्यते। गुणाधिकैर्गुणोदारः सुहृद्भिरिव सज्जनः॥' इति॥ ११॥

शृङ्गारोत्तरसत्प्रमेयभणितावृद्वीतगोविन्दके
प्रत्यर्थिप्रभुगर्वपर्वतसुपर्वाधीशशोभाभृता।
श्रीहम्मीरनरेशवंशमिशदक्ष्माभृद्वतंसायित-
श्रीमत्कुम्भधराधिपेन विवृतः सर्गो द्वितीयेऽन्वयः॥

तथा च सङ्गीतराजे—

'गीतौ भैरवरागेण ताले वर्णयतौ यथा।
आभोगान्तस्थितैः पाटैः स्वरैः पदाञ्चितस्ततः॥
अक्लेशकेशवादिश्च कुञ्जरतिलकाभिधः॥'

इति अक्लेशकेशवकुञ्जरतिलकनामा षष्ठः प्रबन्धः॥ ६॥

इति श्रीराजाधिराजहम्मीरवीरवंशकरीरेण श्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते गीतगोविन्दविवरणे अक्लेशकेशवनामा द्वितीयः सर्गः॥ २॥

---

काव्यं गीतनुसारि दुर्लभमथ स्फीतं प्रसादादिभि-
र्लक्ष्मीकान्तविलासवर्णनरसस्तत्रापि लोकोत्तरः।
सर्वं चैतदनूदरण्यहृदितं पद्मावतीवल्लभ-
स्तैतां चेदसमञ्जरीं न रचयेच्छ्रीशालिनाथप्रभुः॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां गीतगोविन्दटीकायां रसमञ्जर्याख्यायां द्वितीयः सर्गः॥ २॥

## तृतीयः सर्गः ।

–मुग्धमधुसूदनः–

कंसारिरपि [1]संसारवासनाबन्धशृङ्खलाम् ।
राधामाधाय हृदये तत्याज व्रजसुन्दरीः ॥ १ ॥

इतस्ततस्तामनुसृत्य राधिकामनङ्गबाणव्रणखिन्नमानसः ।
कृतानुतापः स कलिन्दनन्दिनीतटान्तकुञ्जे वि[2]षसाद माधवः ॥ २ ॥

---

गेयानुगुणैरधिकैरधिगतं तनुते धातुं बुधसंमतम् ।
नत्वा विधिमिह सुरवरनतं कुम्भनरेशोऽलंकृतियुतम् ॥

इदानीं राधायाः कृष्णेऽनुरागं निरूप्य कृष्णस्यापि राधायामनुरागं दर्शयन्नाह गीतकृतिरागेण—कंसारिरिति । कंसारिरपि व्रजसुन्दरीस्तत्याज । न केवलं राधैव कृष्णसक्ता बभूव किंतु, कृष्णोऽपि राधासक्तो बभूवेत्यपिशब्दार्थः । किं कृत्वा ? राधां हृदये आधायारोप्य । किंभूतां राधाम् ? संसारवासनाबन्धे शृङ्खलेव शृङ्खला । अत्र 'तकजोजे' इति पथ्या छन्दः ॥ १ ॥
इदानीं कृष्णस्य विरहावस्थाचेष्टितमाह—इतस्तत इति । स माधवोऽनङ्गबाणव्रणखिन्नमानसः सन् विषसाद विषादं चकार । किं कृत्वा ? कलिन्द-

---

राधायाः कृष्णविषयिणीमुत्कण्ठामुक्त्वा संप्रति कृष्णस्यापि तद्विषयामुत्कण्ठामाह—कंसारिरिति । कृष्णोऽपि व्रजसुन्दरीस्तापात्तत्याज । त्यागे हेतुगर्भविशेषणमाह—राधामिति । राधां हृदय आधायारोप्य । 'सुन्दरी'पदेन बहुवचनेन सौन्दर्यवतीरपि तत्याजेति कथनेन कृष्णस्य राधायामनुरागातिशयो ध्वनितः । कीदृशीं राधाम् ? संसारविषयिणी वासना संस्कारस्तस्य बन्धनेन शृङ्खलामिव । अनेनाभिलाषाख्या प्रथमावस्था । एतल्लक्षणं च दशरूपके—( ४।५३ ) 'अभिलाषः स्पृहा तत्र कान्ते सर्वाङ्गसुन्दरे । दृष्टे श्रुते वा तत्रापि विस्मयानन्दसाध्वसम् ॥' इति 'शृङ्खला पुंस्करे वस्त्रबन्धेऽपि निगडेऽपि च' इति विश्वः ॥ १ ॥ इतस्तत इति । स माधवः कलिन्दनन्दिन्या यमुनायास्तटान्तकुञ्जे तीरप्रान्तलतापिहितोदरगृहे निषसाद न्यवसत् । अत्र 'माधव'पदेन मा

---

पाठा०–१ 'वासनाबन्धशृंखलाम्' P. २ 'निषसाद' RM., O.

---

टिप्प०–1 सम्यक् सारः संसारः आनन्दचिन्मयमधुरास्वरसः, तद्विषयिणी या वासना निरन्तरा हृदयवृत्तिः, तस्या संधाय स्ववशीकाराय शृंखलामिव । तथा च कं सुखं सारयति विस्तारयतीति कंसारिः, औणादिक इन्प्रत्ययः; कंसोऽपि यस्माद्बिभेतीति कंसारिरिति । उक्तं च-'भयाद् कंसः'-इति दीपिका । 2 सौन्दर्यवतीर्बह्वीरपि तत्याजेति राधायां कृष्णस्यानुरागातिशयो ध्वनितः-इति पद० ।

**गुर्जरीरागयतितालाभ्यां गीयते ॥ प्रबन्धः ॥ ७ ॥**

मामियं चलिता विलोक्य वृतं वधूनिचयेन ।
सापराधतया मयापि न वारिताऽतिभयेन ।
हरि हरि हतादरतया गता सा कुपितेव ॥ ध्रुवपदम् ॥ ३ ॥

---

नन्दिनीतटान्तकुञ्जे इतस्ततस्तां राधामनुसृत्यान्विष्य । किंविशिष्टः ? कृतानुतापः पूर्वमेव मया कथं नानुनीतेति कृतपश्चात्तापः । अत्र कुञ्जेष्विति वक्तव्ये बहुष्वपि परिभ्रमन् तदार्तिवशादेकमेवाज्ञासीदित्येकवचनम् । वंशस्थवृत्तम् ॥ २ ॥ उक्तमर्थं गीतेन स्पष्टयति—तत्र पूर्वं ध्रुवपदम् । हरीति । हरि हरीति खेदे । सा राधा कुपितेव गता । कथा ? हतादरतया । हतो विनाशित आदरो बहुमानस्तस्य भावस्तया । इति ध्रुवः । अथ पदानि । मामियमिति । मां वधूनिचयेन वृतं विलोक्य गतेति ध्रुवपदेनैकवाक्यत्वात्संबन्धः । किंभूता ? तादृशी मया चलितापि सापराधतया न वारिता न निषिद्धा । इह साङ्ग-

---

लक्ष्मीस्तस्या अपि धवः स्वामी यद्विरहव्याकुलो बभूवेति राधायाः सौभाग्याधिक्यं ध्वनितम् । किं कृत्वा ? इतस्ततस्तेषु स्थानेषु तां हृदयनिहितामनुसृत्यानुलक्ष्य । कीदृशः । अनङ्गस्य कामबाणस्य यत्कृतं क्षतं तेन खिन्नं दुःखितं मानसं यस्य । पुनः कीदृशः ? कृतानुतापः कृतः किमिति मया तस्या अथावधीरणं कृतमिति पश्चात्तापो येन सः । अनङ्गबाणेत्यत्रानङ्गपदेनाङ्गरहितस्यात एवालक्षितगतागतस्य कामस्याशेषदुष्टदमनेनापि कृष्णेन निवारणं कर्तुं न शक्यमिति ध्वनितम् । अवश्य इति चिन्ता भवितव्येति तेन श्लोकेन चिन्ताख्या द्वितीयावस्था ध्वनिता । तदुक्तं शृङ्गारतिलके—( १।८ ) 'कथं स वल्लभः प्राप्यः किं कुर्यादस्य सिद्धये । कथं भवेदसौ वश्य इति चिन्ता भवेत्तथा ॥' इति ॥ २ ॥ कृतानुतापमेव गीतेन कथयति—मामियमिति । गीतस्यास्य गुर्जरीरागः । प्रतिमंठतालः । गीतार्थस्तु—हरिहरि कष्टम् । सा राधा हतादरतया कुपितेव गता । ननु सा कुपिता गतेति त्वया कथं ज्ञातमित्यत आह—मामियमिति । मां वधूनिचयेन गोपवधूसमूहेन वृतं वेष्टितं विलोक्य दृष्ट्वा चलिता प्रस्थिता । विलोक्येत्यव्यवहितपूर्वकाले क्त्वा । तेन गोपवधूवेष्टितं मां दृष्ट्वाऽव्यवहितकाल एव चलचलिता ततो ज्ञायते कुपितेवेति भावः । ननु मा गच्छेति त्वया किमिति न निवारितेत्यत आह—सापराधतयेति । मयातिभयेनातिशयितभीत्या सा न निवारिता । भयहेतुमाह—सापरा-

---

पाठा०—१ "रागेण यतितालेन' C., गुर्जरीरागे मंठताले' S. P. २ 'न निवारिता' P.

---

टिप्प०—1 मयापि कृष्णेनापि सापराधतया कृतापराधत्वेन हेतुनाऽतिभयेन न निवारिता; यद्वा,—कर्तभूतेन मया ? अतिभयेनातिशयितं भयं यस्येति—इति पद० ।

किं[1] करिष्यति किं वदिष्यति सा चिरं विरहेण ।
किं धनेन[2] जनेन किं मम जीवितेन गृहेण[3] ॥ हरि हरि० ॥ ४ ॥

तम् । तस्या गमने हेतुं जानन्नपि सापराधोऽस्मि । कथमेतस्या अग्रे मयाति-भयेन वक्तुं पार्यत इति बुद्धा अतिशयितं भयं यस्येति भयेत्यस्य विशेषणम् । करणे तृतीया । अतिक्रान्तं भयमिति वधूनिचयविशेषणं वा । अथवा,–मामेवं विलोक्य सा चलितापि मया न वारिता । हरि हरि गतेति विषादाभिनयेन योज्यम् ॥ ३ ॥ किमिति । इदानीं मदपराधे मन्निमित्तमेव सा विषादं भुङ्क्ते इति आत्मसमत्वेन तामपि गणयन्नाह—सा किं करिष्यतीति । मयि मिलिते कोपेर्ष्यादिकं कथं विधास्यतीत्यर्थोक्त्या । तदनु कृतापराधं मां चरण-पतितं दृष्ट्वा किं वदिष्यतीत्यपि चार्थोक्त्या । अहमुत्तरं दास्यामीत्याह–किं जनेनेति । गोपीजनेन । किं धनेनेति । धनमप्यकिंचित्करं कृत्वा जीवितं निन्दति । जीवितफलं किम् ? सुखमपि स्वदते नान्यदिति वाक्यशेषः । किंविशिष्टा सा ? विरहेण उपलक्षिता । अथवा,–मम विरहेणाक्रान्ता सा किं

धेति । अपराधो राधां विहायान्यगोपीभिः सह क्रीडाकुतूहलयुक्ततया ॥ ३ ॥ किं करिष्यतीति । सा चिरं विरहेण चिरकालीनमद्वियोगेन किं करिष्यति । विरहताप-स्यात्यर्थं कमुपायं करिष्यतीत्यर्थः । अथ च,–किं वदिष्यति ? किं मम सद्गुणं वदिष्यति, दोषान्वा वदिष्यतीत्यर्थः । यद्वा,–काकुस्वरे किं वदिष्यति । मया सह (न) कदाचिद्वार्तां कथयिष्यतीत्यर्थः । तया विना मम धनेन किम् ? न किंचित्प्रयोजनमित्यर्थः । ननु धनं विना परिजनसंग्रहः कथं स्यादित्यत आह—तया विना मम जनेनाश्रितेन परिजनेन किम् ? न किमपि प्रयोजनम् । ननु परिजनं विना गोधनरक्षा कथं भविष्यतीत्यत आह—तया विना मम गोधनेन किम् ? न किमपि प्रयोजनम् । ननु धनं विना परिजनादृते च गृहरक्षापि न स्यादित्यत आह । तया विना मम गृहेणापि किम् ? अपि तु प्रयोजनं

पाठा०–'मम किं गृहेण सुखे न' C., 'किं जनेन धनेन किं मम किं गृहेण P. S.

टिप्प०–1 अनेन स्वविरहजन्याकारान्तप्रापं तद्दुःखाक्रान्तत्वेन सुखमयोक्त्या दर्शितः । तथथा–'यत्ते सुजात ! चरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय ! दधीमहि कर्कशेषु । तेनाटवीमटसि तद्व्यथते न किं स्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥' इति दीपिका । 2 अपि च धनेन किम् ? धनेन पितुः श्रीव्रजेश्वरस्याखिललोकाति-शायिन्या संपदा मम किं ? न किमपीत्यर्थः–बाल० । 3 गृहेण किम् ? तया विना मम गृहेण किं प्रयोजनमित्यर्थः; तद्वियोगेन वनवासांगीकारात् । ननु सुखास्पदं गृहम्, तेन विना सुखं न स्यादत आह–मम सुखेन किमिति । तया विनाऽन्य-सुखेनापि मम किं प्रयोजनम् ? सैव मम सुखमिति भावः । अथवा,–मम सुखेनात्म-संबन्धिसुखेन किं ? मम सुखं तद्दुःखानुभवेन सुखमयानामपि दुःखप्रदत्वात्, तत्सु-खेनैव मम सुखमिति भावः–दीपिका ।

चिन्तयामि तदाननं कुटिलभ्रु [1]कोपभरेण ।
शोणपद्ममिवोपरिभ्रमताकुलं भ्रमरेण ॥ हरि हरि० ॥ ५ ॥
तामहं हृदि संगतामनिशं भृशं रमयामि ।
किं वनेऽनुसरामि तामिह किं वृथा विलपामि ॥ हरि हरि० ॥ ६ ॥

---

वदिष्यतीत्यादि । ममापि तां विना किं धनादिनेति योजनीयम् ॥ ४ ॥ चिन्तयामीति । अहं तदाननं चिन्तयामि । किंभूतमाननम्? कोपभरेणार्थान्मयि कुटिलभ्रु । कुटिले कुञ्चिते भ्रुवौ यत्र । किमिव? शोणपद्ममिव । उपरिभ्रमता भ्रमरेणाकुलम् । अत्र कोपारक्तमुखं पद्मेनोपमीयते । भ्रमरेण कुटिले कोपावेशपरिस्फुरमाणे भ्रुवाविति । अत्र वाक्यार्थोपमालंकारः । तथा च—'तदाननमधीराक्षमाविद्धं शतदीधिति । भ्रमद्भृङ्गमिवालक्ष्य केसरं भाति पङ्कजम् ॥' इति ॥ ५ ॥ तामहमिति । अहं अनिशमनवरतं हृदि संगतां हृदये मिलितां तां भृशमत्यर्थं रमयामि । इत्युक्त्वा पुनः प्रत्युवाह—

---

वार्त्तोत्यर्थः । ननु त्वद्वं विना सांसारिका भोगाः कथं सेत्स्यन्तीत्यत आह । तया विना मम सुखेनापि किम्? स्रक्चन्दनवनितादिजन्येनापि सुखेन किं प्रयोजनमित्यर्थः । इयं च स्मृत्याख्या तृतीयावस्था । तदुक्तं रसार्णवसुधाकरे—'अर्थानामनुभूतानां देशकालानुवर्तिनाम् । सातत्येन परामर्शो मानसः स्यादनुस्मृतिः ॥ अत्रानुभावविश्वासाधीनं कृत्वा विह्वलता । राज्यासनादिविद्वेषश्चेत्यादयः स्मरकल्पिताः ॥' इति ॥ ४ ॥ चिन्तयामीति । अहं तदाननं चिन्तयामि स्मरामि । कीदृशम्? रोषभरेण कोपातिशयेन कुटिलभ्रु कुटिला वक्रा भ्रूर्यत्र तादृशम् । किमिव? उपरिभ्रमता भ्रमरेणाकुलं व्याप्तं शोणपद्ममिव । अत्र रोषारुणे मुखे शोणपद्मसादृश्यं बोध्यम् । वारंवारं वक्रीभवन्त्योर्भ्रुवोश्च भ्रमद्भ्रमरोपमा बोध्या । अनेन गुणकीर्तनाख्या चतुर्थावस्था । तदुक्तम्—'अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टादृष्टिवेक्षणैः । न तस्य सदृशः कश्चिदित्यादिगुणकीर्तनम् ॥' इति । 'शोणः कोकनदच्छविः' इत्यमरः ॥ ५ ॥ तामहमिति । तामनुसरामि तस्या अनुसरणं करोमि । इह वृथा किं विलपामि किमिति वृथा विलापं करोमि? हृदि संगतां हृदये संनिहितामनिशं निरन्तरं भृशमतिशयेन तां रमयामि क्रीडयामि । यद्वा,—'किं'शब्दः प्रश्ने । अहं तां हृदि संगतामनिशं रमयामि

---

पाठा०—१ 'रोषभरेण' ३.

टिप्प०—1 अनेनाव्यभिचारि सौन्दर्यं कथितम्; क्रुधापि शोभामदत्वात् । किं च माधुर्यं नामैतदेव । तदुक्तं—'माधुर्यं नाम चेष्टितानां सर्वावस्थासु चारुता' इति—दीपिका ।

तन्वि ! खिन्नमसूयया हृदयं तवाकलयामि ।
तन्न वेद्मि कुतो गतासि न तेन तेऽनुनयामि ॥ हरि हरि० ॥ ७ ॥
दृश्यसे पुरतो गतागतमेव मे विदधासि ।
किं पुरेव ससंभ्रमं परिरम्भणं न ददासि ? ॥ हरि हरि० ॥ ८ ॥
क्षम्यतामपरं कदापि तवेदृशं न करोमि ।
देहि सुन्दरि ! दर्शनं मम मन्मथेन दुनोमि ॥ हरि हरि० ॥ ९ ॥

---

इदशून्यप्रदेशे वृथा किं विलपामि, तां वनेऽनुसरामि ॥ ६ ॥ तन्वीति । हे तन्वि ! तव हृदयं असूयया खिन्नं खेदयुक्तं भविष्यतीत्याकलयामि । तत्तस्मादहं कुतो गतासीति न वेद्मि, अपि तु असूयात एव गतासीति वेद्मि । अतो हेतोर्दर्शनाभावात् । ते तव संबन्धिना नतेन नमस्कारेणानुनयामि । अथवा,–तव हृदयं असूयया खिन्नम् । तेन कारणेन ते तव हृदयं नानुनयामि । 'प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः' इति न्यायापातादिति भावः । अथवा,–तत्कुतो न वेद्मि ? अपि तु वेद्मि । अथवा,–त्वं गतासि यातासि । तव हृदयं नते नमस्कृतौ न अनुनयामि ॥ ७ ॥ दृश्यस इति । हे तन्वि ! मे पुरतो गतागतमेव विदधासि यातायातमेव करोषीति दृश्यते । अपरं, पुरेव ससंभ्रमं यथा स्यात्तथा परिरम्भणं न ददासि । विरहिणो हि चिन्तानुषङ्गात्सर्वत्रतामेव पश्यन्ति । तथा चोक्तम्—'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा पर्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य । हंहो चेतः प्रकृतिरपरा नास्ति ते कापि सा सा सा सा सा सा जगति सकले कोऽयमद्वैतवादः' ॥ ८ ॥ क्षम्यतामिति । हे तन्वि ! भवतु यत्किंचिन्मया

---

किं वा वने तामनुसरामि । वृथा विलपामीत्यर्थः ॥ ६ ॥ तन्वीति । हे तन्वि ! तव हृदयं असूयया मयि दोषाविष्कारेण खिन्नं खेदयुक्तमाकलयामि पश्यामि । इयं चोद्वेगावस्था । तदुक्तं शृङ्गारतिलके—( २।११ ) 'यस्मिन्रम्यमरम्यं वा न च हर्षाय किंचन । विद्वेषः प्राणितव्येऽपि स उद्वेगः स्मृतो यथा ॥' इति । तन्न वेद्मीति । कुतो गतासि तदहं न वेद्मि । ते तव नतेन प्रणत्याऽनुनयामि त्वामित्यर्थः । क्वचित्तु 'नुतेन' इति पाठस्तदा ते तव नुतेन स्तुत्याऽनुनयामि त्वामित्यर्थः । यद्वा,–'नु' इति वितर्के । 'तेन' इति लक्षणेऽव्ययम् । तथा च यं मार्गं लक्षीकृत्य गतासि तेन तं मार्गं लक्षीकृत्य गत्वा तेऽनुनयामि त्वयानुनयं करोमि । ते इति संबन्धमात्रविवक्षायां षष्ठी । अनेन विलापावस्था कथिता । तदुक्तं शृङ्गारतिलके—( २।१२ ) 'बभ्रमीति मनो यस्मिन्नस्मिन्नौत्सुक्यचलितस्ततः । वाचः प्रियाश्रया एव स प्रलापः स्मृतो यथा ॥' इति ॥ ७ ॥ इदानीं भावनया प्रत्यक्षीकृतां प्राह—दृश्यस इति । हे सुन्दरि ! पुरेव पूर्वमिव ससंभ्रमं सादरं परिरम्भणमालिङ्गनं किमिति न ददासि ? पुरतोऽग्रे दृश्यसे गतागतं यातायातं विदधासि ॥ ८ ॥ क्षम्यतामिति । हे सुन्दरि !

वर्णितं जयदेवकेन हरेरिदं प्रवणेन¹ ।
किन्दुबिल्वसमुद्रसंभवरोहिणीरमणेन² ॥ हरि हरि० ॥ १० ॥

हृदि बिसलताहारो³ नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्याऽनङ्ग ! क्रुधा किमु धावसि ? ॥११॥

---

अपराद्धं क्षम्यतां तत् । ईदृशमपरमप्रियं तव कदापि न करिष्यामि । हे सुन्दरि ! मम दर्शनं देहि । त्वद्विनाऽहं मन्मथेन दुनोमि । इत्यत्रतत्कामिलादौ धीरललितो नायकः । परस्परानुरागजनितो विप्रलम्भशृङ्गारः ॥ ९ ॥ वर्णितमिति । इदं पूर्वोक्तं जयदेवेन वर्णितम् । किंभूतेन ? हरेः प्रवणेन हरिपरायणेन । पुनः किंभूतेन ? ति(कि)न्दुबिल्वं तच्छासनं निवासो वा ग्रामः समुद्र इव तत्संभवरोहिणीरमणेनेव चन्द्रेणेव ॥ १० ॥ इदानीं स्मरशराहतिजर्जरचेता भ्रान्तः सन् काममपि भ्रान्तं विदन्नाह—हृदीति । हे अनङ्ग ! हरभ्रान्त्या प्रियारहिते मयि न प्रहर प्रहारं मा कार्षीः । एभिश्चिह्नैर्हरो ऽयमिति चेत्तदप्यन्यथयति । हृदये भुजंगमनायको न, अपि तु बिसलताहारः । बिसलताहार इति रूपकालंकारः । शुभ्रत्वात् कुवलयस्यानाच मृणाले वासु-

---

क्षम्यतां ममापरमपराधं क्षमस्व । कदापि तवेदृशं विप्रियं न करिष्यामि । इयं चोन्मादावस्था । तदुक्तं रसार्णवसुधाकरे—'अतस्मिंस्तदिति भ्रान्तिरुन्मादादेव जायते' इति । पुनः किंचित्संजातविवेकः कथयति । हे सुन्दरि ! मम दर्शनं देहि । मन्मथेन कामेनाहं दुनोमि तप्तो भवामि ॥ ९ ॥ वर्णितमिति । जयदेवकेन हरेश्चरित्रं वर्णितम् । कीदृशेन ? प्रणतेन । अर्थाद्धरिमित्यर्थः । कीदृशेन ? किन्दुबिल्वो जयदेवकुलशासनग्रामः, स एव महत्त्वात्समुद्र इव तत्र संभवो यस्य तादृशेन रोहिणीरमणेन पूर्णचन्द्रेण तस्योन्नतिर्यथा क्रियते तथा तत्कुलस्योन्नतिर्जयदेवेन कृतेति चन्द्रसादृश्यम् । 'ग्लौरिन्दुरेणतिलको हरिरोहिणीशौ' इति हारावली ॥ १० ॥ इदानीं काम एव मे दुःखं प्रयच्छतीति तमेवोपालम्भनेनाह—हृदीति । हेऽनङ्ग कन्दर्प ! मयि न प्रहर प्रहारं मा कुरु । किमिति वितर्के । मयि हरभ्रान्त्या महादेवभ्रमात्क्रुधा कोपेन त्वं धावसि इति किमु तर्कयामि । यद्वा,–उ इति संबोधने । हेऽनङ्ग ! हरभ्रान्त्या मयि किमिति धावसि ?

---

पाठा०–१ 'प्रणतेन' RM., S. २ 'तिन्दुबिल्व' A 'केन्दुबिल्व'. ३ 'विषलता०' C.

---

टिप्प०–1 किन्दुबिल्वं नाम जयदेवकुलग्राम । केचित्तु 'किन्दुबिल्वनामा कश्चिन्महाभागवतः समुद्रः कश्चिच्च जयदेवस्य पूर्वपुरुष इति वदन्ति'–इति दीपिका ।

पाणौ मा कुरु चूतसायकममुं मा चापमारोपय
क्रीडानिर्जितविश्व ! मूर्च्छितजनाघातेन किं पौरुषम् ।
तस्या एव मृगीदृशो मनसिज ! प्रेङ्खत्कटाक्षाशुग-
श्रेणीजर्जरितं मनागपि मनो नाद्यापि संधुक्षते ॥ १२ ॥

किभ्रमः । अपि च,—कण्ठे इयं कुवलयदलश्रेणी, न प्रसिद्धा गरलद्युतिः । इयमपि विरहातुरस्य मम गरलद्युतिरिव विद्यते । परं यद्भ्रान्त्या मयि प्रहरसि सा प्रसिद्धा ईश्वरसंबन्धिनी न । इदं मलयजरजोऽङ्गतापाच्छुष्कं चन्दनं विद्यते, न भस्म । 'किमु' इति वितर्के । सत्यम्, कुधा कोपेन धावसि । लोकोक्तिः । हरिणीवृत्तम् । 'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' (का. प्र. १०।९६) इत्यपह्नुतिरलंकारः । विप्रलम्भशृङ्गारो रसः ॥ ११ ॥
इदानीं स्मरमुपालभते—पाणाविति । हे क्रीडानिर्जितविश्व काम! पाणौ अमुं चूतसायकं मा कुरु । चापमपि माऽऽरोपय मा सज्जं कुरु । यतः क्रीडयैव निर्जितविश्वस्य केयं सामग्री नाम ? अथ चेत्सामग्री तर्हि कस्योपरीत्याह—मूर्च्छितजनाघातेन किं पौरुषं कोऽयं पराक्रमः ? अथवा,—कुत्सितं पौरुषं किंपौरुषम् । तर्हि किं क्रियतामित्याह—यदर्थं मां

---

कीदृशे मयि ? प्रियारहिते विरहिते । तथा च तद्विरहेणादेवाहं संततस्त्वं मृतकरूपस्य मम मारणं किमिति करोषीति भावः । यद्वा,—हरः सर्वदा प्रियायुक्तः, अहं त्वधुना प्रियाविरहित इति मयि हरभ्रमो न युक्त इति भावः । हरेण त्वच्छरीरं दग्धमतः कामस्य महद्वैरसूचनायानङ्गपदेन संबोधने भ्रमबीजं निरस्यति । अयं बिसलताहारो मृणाललताहारस्तद्विरहजन्यसंतापशान्त्यर्थं धृतः, न तु भुजंगमनायकः । सर्पराजो वासुकिः । इयं कण्ठे कुवलयदलानां नीलोत्पलपत्राणां श्रेणिः पङ्क्तिः शैत्याद्धृता, न तु सा गरलद्युतिर्विषकान्तिः । इदं सर्वाङ्गे तापशान्त्यर्थं धृतं मलयजरजश्चन्दनधूलिः, न तु भस्म विभूतिः । अङ्गे लिप्तः प्रशिथिलचन्दनोऽपि विरहतापवशाद्धूलीभूत इति 'रजः'पदेन सूचितम् । तथा च बिसलतायां धैवल्यदैर्घ्यादिदर्शनात्तत्र वासुकिभ्रमात्, नीलोत्पलदलपङ्क्तौ श्यामत्वादिदर्शनाद्गरलभ्रमात्, चन्दनरजसि भस्मभ्रमाच्च मयि महादेवभ्रमस्तव युक्तो नेति भावः । अयं च भ्रान्तिमानलंकारः, 'सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्' इति तल्लक्षणम् । 'वितर्के किं किमुत च' इत्यमरः । 'किं संबुद्धौ रुषोक्तौ च' इति विश्वः ॥ ११ ॥ कुसुमसायकत्वेन प्रसिद्धो यः कामः स इमानेव चूतमञ्जरीरूपान्बाणान्धनुष्यारोप्य मां ताडयिष्यतीति शङ्कया पुनरपि दैन्यं करोति—पाणाविति । हे मनसिज मदन !

---

पाठा०-१ "अरशरोद्भ्रुकटा" P. २ 'कटाक्षावलवालाजर्जरितं' BP. ३ 'संधुक्ष्यते'. D.

भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि
बाणा गुणः श्रवणपालिरिति स्मरेण¹ ।
तस्यामनङ्गजयजङ्गमदेवताया-
मस्त्राणि निर्जितजगन्ति किमर्पितानि ॥ १३ ॥

---

प्रदीपोपि तस्या एव मृगीदृशो मनोऽद्यापि मनागपि न संधुक्षते, अपि तु संधुक्षतां नाम । किंविशिष्टं मनः? प्रेङ्खत्कटाक्षानलज्वालाजर्जरितम् । प्रेङ्खन्तो वल्गन्तो ये कटाक्षा अर्धाक्षिप्रवीणा त एव अनलोऽग्निस्तस्य ज्वाला-स्ताभिर्जर्जरितम् । अथवा,-हे मनसिज! तस्या एव मृगीदृशः प्रेङ्खत्कटाक्षान-लज्वालाजर्जरितं मनः, अर्थान्ममैवाद्यापि न दीप्यते। अतो मृतमारणं कथं युक्तम्? शार्दूलविक्रीडितं छन्दः । आक्षेपोऽलंकारः । अत्र मनसिजशरा मनो विध्यन्ति इति कर्मत्वे विवक्षिते यत्कर्तृत्वमुपन्यस्तं तदौचित्यचमत्कारितामा-विष्करोति । यथा 'सान्वयं शोभते वाक्यमुचितैरिव कारकैः । कुलाभरणमै-श्वर्यमौदार्यं चरितैरिव' इति ॥ १२ ॥ इदानीं राधायामेव स्मरशरावलित्वमा-रोपयन्नाह—भ्रूपल्लवमिति। स्मरेण तस्यां इति अस्त्राण्यर्पितानि । किंभूतानि? निर्जितजगन्ति । निर्जितानि जगन्ति यैस्तानि । किंभूतायां तस्याम्? अनङ्ग-जयजङ्गमदेवतायाम् । अनङ्गस्य जयाय जङ्गमदेवतेव तस्याम् । इतीति किम्?

---

अमुं पुरःस्थितं चूतसायकमाम्रपुष्परूपं बाणं पाणौ हस्ते मा कुरु । चापं धनुर्माऽऽ-रोपय मौर्वीयुक्तं मा कुरु । यद्वा,-चूतसायकं हस्ते मा कुरु । हस्ते चेत्करोषि तदामुं सायकं चापे च मारोपय । मा संधेहीत्यर्थः । अत्र 'मनसिज'पदेन मन्मनसा जातस्य ते मत्संतापकारित्वमनुचितमिति ध्वनितम् । हे क्रीडानिर्जितविश्व क्रीडया लीलया निर्जितं विश्वं जगद्येन तादृश! मूर्च्छितस्य मूर्च्छां प्राप्तस्य मादृशजनस्याघातेन प्रहारेण तव किं पौरुषम्? अपि तु न किमपीत्यर्थः । यद्वा,-क्षेपे 'किं'शब्दः । मूर्च्छित-जनाघातेन तव किंपौरुषम्, कुत्सितं पौरुषमित्यर्थः । मूर्च्छितत्वे हेतुमाह—तस्या एवेति । तस्या एव मृगीदृशो हरिणीदृशः प्रेङ्खन्तः प्रसर्पन्तो ये कटाक्षास्त एवाशुगा बाणास्तेषां श्रेणिभिः पङ्क्तिभिर्जर्जरितं खण्डितं मनो मनागपि न संधुक्षते न स्वस्थं भवति । तथा च तत्कटाक्षरूपबाणैस्त्वयाहं मूर्च्छितः कृतः, सेंप्रति मयि चूत-मञ्जरीरूपसायकप्रहारं मा कुरु । मृतमारणं माचरेति भावः । येन लीलयैव 'संधुक्ष्यते' विश्वमपि जितं तस्य ते मूर्च्छितजनेषु प्रहारो यशोहानिकर इति ध्वनितम् । 'सायकः शरखड्गयोः' इति विश्वः । 'अथास्त्रियाम् । धनुश्चापौ' इत्यमरः । किंपौ-रुषमित्यत्र द्वितीयव्याख्यानपक्षे 'किमः क्षेपे' इत्यनेन निन्दायां समासः । 'आशुगौ मारुते बाणे' इत्यमरः ॥ १२ ॥ ननु तत्तनुकटाक्षादिस्मरणादित्थमेवं दुःखं भवति, कामस्य तत्र कोऽपराध इत्यत आह—भ्रूपल्लवमिति । किमित्याक्षेपे । तस्यां राधायां स्मरेण कामेनास्त्राण्यर्पितानीति तर्कयामि । नन्वस्त्राणि वीरेण हस्ते स्थाप-

---

पाठा०—१ 'भ्रूचापे निहितः···॥ १३ ॥' B.

भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां
श्यामात्मा कुटिलः करोतु कबरीभारोऽपि मारोद्यमम् ।
मोहं तावदयं च तन्वि ! तनुतां बिम्बाधरो रागवान्
सद्वृत्तः स्तनमण्डलस्तव कथं प्राणैर्मम क्रीडति ? ॥ १४ ॥

---

भ्रूपल्लवं धनुः । अपाङ्गतरङ्गितानि कटाक्षा बाणाः । 'अपाङ्गतरङ्गित'शब्देन कटाक्ष उच्यते । तथा चोक्तम्—'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥' इति । श्रवणपालिः गुण इति । अत्र 'अस्त्र'शब्देनास्त्रविद्यासाधनस्योपकरणान्युच्यन्ते । भ्रूपल्लवं धनुरित्यत्र रूपकोत्प्रेक्षे अलंकृती ॥ यथा—'मुखपङ्कजरङ्गेऽस्मिन्भ्रूलता नर्तकी नवा । लीलानृत्यं करोतीति रम्यं रूपकरूपकम् ॥' अत्र क्वापि काव्यलंकारद्वयत्रयसद्भावेऽपि संसृष्टिसंकरनिरूपणं ग्रन्थविस्तरत्रस्तचित्ततया न क्रियते । तद्गतिस्तु पूर्वपदे दर्शितप्रायेति ॥ १३ ॥ इदानीं ध्यानमिलितां राधां संभावयन्नाह—भ्रूचाप इति । हे तन्वि ! भ्रूचापे निहित आरोपितः कटाक्ष एव विशिखो बाणो मर्मव्यथां निर्मातु । यतश्चापारोपितबाणस्य मर्मवेधो युक्त एव । अपि च,–कबरीभारोऽपि मारोद्यमं मारायोद्यमं करोतु नाम । यतः श्यामात्मा कुटिलश्च । श्यामात्मनामन्तर्मलिनचित्तानां च मारणं स्वभाव एव । अपि च,–अयं रागवान्बिम्बाधरो मोहं

---

विजेतुमर्पितानि, न त्वन्यत्रेत्यत आह—निर्जितानि जगन्ति यैस्तानि । तथा च तैरेवाखिलजगत्त्रयं जित्वा तत्र स्थापितानीति भावः । तदन्यत्र किमिति न स्थापितानीत्यत आह—अनङ्गेति । अनङ्गस्य कामस्य अङ्गमदेवतायां गमनशीलदेवतायाम् । तथा च तयैव त्रैलोक्यजयायास्त्राणि दत्तानि । अतो जातप्रयोजनानि तत्रैव स्थापितानीति भावः । देवतया यदस्त्रं दीयते तत्केनापि न प्रतिहन्तुं शक्यत इत्यपि ध्वनितम् । कानि तान्यस्त्राणीत्यत आह—भ्रूपल्लवमिति । भ्रूपल्लवं तदेव धनुः, अपाङ्गतरङ्गितानि कटाक्षस्य गतागतानि बाणाः, श्रवणपालिः कर्णलताप्रान्त एव गुणो मौर्वी । नीलस्निग्धत्वाद्भ्रुवः पल्लवत्वेन निरूपणम् । वक्रत्वाच्च धनुष्ट्वेन निरूपणम् । अपाङ्गस्य परमभेदकत्वाद्बाणत्वेन निरूपणम् । श्रवणपाल्याश्च दीर्घत्वान्मौर्वीत्वेन निरूपणम् । 'अपाङ्गोऽप्यङ्गहीने स्यान्नेत्रान्ते नीलकेऽपि च' इति विश्वः । 'पालिः कर्णलताग्रे स्यात्सङ्कार्यंसप्रभेदयोः' इति विश्वः ॥ १३ ॥ संप्रति राधाङ्गविलसितान्येव स्मरणरूपाणि मां पीडयन्तीति तस्या एवोपालम्भनं करोमीत्याशयेन काममुपेक्ष्य तां च स्थितामिव ज्ञात्वा राधां संबोध्याह—भ्रूचाप इति । भ्रूचापे भ्रूरूपे धनुषि निहितोऽर्पितो यः कटाक्षविशिखः कटाक्षबाणो मर्मव्यथां मर्मपीडां निर्मातु करोतु ! धनुष्यारोपितस्य बाणस्य परममर्मपीडनमेव धर्म इति तदुचितमेव ।

---

पाठा०-१ 'सद्वृत्तस्तन' C., S. P.

तानि स्पर्शसुखानि ते च तरलाः स्निग्धा दृशोर्विभ्रमा-[1]

स्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा ।

---

तनुताम् । अस्याप्येवंविधस्य मोहविधाने औचिती; परं तु तव सद्वृत्तः स्तनमण्डलः स मम प्राणैः कथं क्रीडति ? इयमस्यानौचिती । यतः सदाचारवतां परप्राणविलसनं न क्वापि दृष्टमिति भावः । अत्र विरोधालंकारः । शार्दूलविक्रीडितं छन्दः ॥ १४ ॥ इदानीं वक्रोक्त्या स्वगतत्वेन विरहयामतां वदति—तानीति । 'हन्त' इति खेदे । विषयालङ्घेऽपि मानसं चेतस्त्वां लब्धसमाधि तर्हि विरहव्याधिः कथं वर्धते ? समाधौ व्याधेरनुद्भवात्, प्रियासङ्गे विरहानुपपत्तेश्च । इतीति किम् ? तानि स्पर्शसुखानि सन्ति । अप्रत्यक्षायामपि तस्यां ध्यानवशादनुभूयमानानीव; एवं सर्वत्र । अपि च,—तरलाश्चञ्चलाः स्निग्धाः प्रेमार्द्रा दृशोर्विभ्रमा विलासास्त एव; वक्त्राम्बुजसौरभं तदेव; अपि च, सुधास्यन्दममृतस्रावी गिरां वक्रिमा वैदग्ध्यविशेषः स एव; अपि च, बिम्बाधरमाधुरी बिम्बाधरसौकुमार्यं तदेव; यत्पूर्वानुभूतं

---

अथ च तव कुटिलो वक्रः श्याम आत्मा स्वरूपं च यस्यैतादृशः कबरीभारोऽपि ग्रथितवेणीकेशसंचयोऽपि मारोचितं मारणायोद्योगं पराक्रमं करोतु । यद्वा,—मारस्य कामस्योद्यमं करोतु । योऽन्तर्मलिनः कुटिलश्च भवति सोऽन्यमारणाय यतत इत्यपि नानुचितम् । अथ च हे तन्वि ! अयं बिम्बाधरो बिम्बफलतुल्योऽधरो मोहं मूर्च्छां तनुतां तनोतु । कीदृशः ? रागवान्रक्ततावििशिष्टः । इदमपि नानुचितम् । यतो यो रागवान्मात्सर्ययुक्तः स परमोहं करोत्येव । अयं तव सद्वृत्तो वर्तुलः स्तनमंडलः कुचविस्तारो मम प्राणैः कथं किमिति क्रीडति प्राणग्रहणरूपां क्रीडां किमिति करोति ? सद्वृत्तस्य सच्चरितस्य परप्राणग्राहित्वमनुचितमिति भावः । विरोधनामायमलंकारः । सद्वृत्तत्वरूपगुणस्य परप्राणग्रहक्रियया विरोधकथनात् । तदुक्तं काव्यप्रकाशे ( १०।११० ) 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति । 'विशिखस्तोमरे शरे' इति विश्वः । 'श्यामो निन्दितकृष्णयोः' इति धरणिः । 'आत्मा देहे मनोब्रह्मस्वभावधृतिबुद्धिषु' इति विश्वः । 'बिम्बं फले बिम्बिकायाः प्रतिबिम्बेऽर्कमण्डले' इति च । 'रागोऽनुरक्तमात्सर्ये' इति च । 'वृत्ते तु वर्तुलं वृत्तम्' इति शाश्वतः । 'कबरी केशवेशः' इत्यमरः । 'मारो मृतौ विघ्नेऽनङ्गे' इति विश्वः ॥ १४ ॥ ननु तस्यापि नापराधो न वा स्मरस्य, किं तु तदङ्गस्पर्शादिविषयालाभाभावं लब्धेतस्त्वां दुःखीकरोतीति भावनया पुरःस्थितां मत्वाह—तानीति । स्पर्शसुखानि तदङ्गस्पर्शजन्यानि सुखानि इदानीमनुभूयमानानि तान्येव पूर्वानुभूतान्येव । एतेन त्वगिन्द्रियविषयलाभः कथितः । दृशोर्नेत्रयोस्तरलाश्चञ्चलाः स्निग्धाः स्नेहगर्भा विभ्रमा विलासास्त एव विषयाः । अनेन चक्षुर्विषयलाभ उक्तः । तथा वक्त्राम्बुजसौरभं तस्यामुखपद्मसौरभं तदेव । अनेन घ्राणस्य विषयप्रा-

---

१ 'दृशो विभ्रमा॰' C.

सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि चेन्मानसं
तस्यां लग्नसमाधि, हन्त विरहव्याधिः कथं वर्धते[1] ॥ १५ ॥[2]
तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चर-
[3]द्गीतिस्थानकृतावधानललनालक्षैर्न[4] संलक्षिताः ।

---

तदेवेति विषयलाभेऽपि विरहो वर्धत इति तस्य वामता । शार्दूलविक्रीडितं छन्दः । समुच्चयोऽलंकारः । रसादि प्रसिद्धम् ॥ १५ ॥ इदानीं सर्गार्थसंवरणव्याजेनाशिषमाशास्ते—तिर्यक्कण्ठेति । मधुसूदनस्य कटाक्षोर्मयो वो युष्मभ्यं क्षेमं ददतु । ऊर्मयो वेगा लेखा वा । कटाक्षाणामूर्मयः कटाक्षोर्मयः । 'ऊर्मिः पीडाजवोत्कण्ठाभङ्गप्रकाश्यवीचिषु । वस्त्रसंकोचलेखायाम्' इति । किंलक्षणाः ? राधामुखेन्दौ प्रेम्णा कन्दलिता उपरागं गमिताः । 'कन्दलं तु नवाङ्कुरे । कलध्वनावुपरागे च' इति । किंविशिष्टे मुखेन्दौ ? संमुग्धे मधुरे । सम्यक् मुग्धं संमुग्धं, संमुग्धं च तन्मधुरं च तस्मिन् । रम्ये नवप्रिये । 'मुग्धं मूर्खे तथा रम्ये' इति । 'मधुरस्तु प्रिये स्वादौ'

---

सिद्धा । गिरां तद्वचसां सुधास्यन्दी सुधामधुरं स्यन्दते स्रवतीत्येवंशीलो वक्रिमा वक्रत्वमिदानीं श्रोत्रेण ग्राह्यमाणः स एव पूर्वानुभूत एव । अनेन श्रोत्रेन्द्रियविषयसान्निध्यमुक्तम् । बिम्बाधरमाधुरी तस्या बिम्बफलप्रायपोरधरयोरोष्ठयोर्माधुरी मधुरताऽधुना मयाऽऽस्वाद्यमानैव पूर्वानुभूतैव । अनेन रसनेन्द्रियस्य विषयलाभ उक्तः । इत्येवंप्रकारेण विषयासङ्गेऽपि स्वस्वविषयसंबन्धेऽपि मानसं यत्तस्यां राधायां लग्नसमाधि तदेकाग्रं यदि । हन्तेति खेदे । तदा विरहव्याधिः कथं वर्धते ? 'अपि'शब्दो विरोधाभासालंकारसूचनार्थः । बाह्येन्द्रियविषयासङ्गे समाधेरसंभवात् । बाह्येन्द्रियवृत्तिनिरोधे सति मनस एकाग्रताया एव समाधिशब्दार्थत्वात् । तथा च तत्तदिन्द्रियाणां स्वस्वाभिमतविषयालाभे एव विरहः संभवति । मम च तत्तदिन्द्रियाणां विषयविच्छेदस्याभावान्मनसस्तच्चिन्तनैकपरत्वात्तया सह विच्छेद एव नास्तीति कथं विरहजन्यव्याधिसंभव इति भावः । 'गन्धरूपरसस्पर्शशब्दाश्च विषया अमी' इत्यमरः ॥ १५ ॥ इदानीं सर्गान्ते आशिषमाशास्ते—तिर्यगिति । मधुसूदनस्य श्रीकृष्णस्य कटाक्षोर्मयो तद्दर्शनतरङ्गा अनिशं वो युष्माकं क्षेमं ददतु कल्याणं प्रयच्छन्तु । दुरितासद्भावेन क्षेमदातृत्वं संभवतीति दुरितदारणसामर्थ्यद्योतनाय 'मधुसूदन'पदोपादानम्, अतिचापल्यसूचनायेति वा । किंलक्षणाः ? मधुरेऽमृतादपि मधुरिमाश्रये राधाया मुखमिन्दुमिव तस्मिन्मृदुस्पन्दं ईषच्च लग्नं संमुग्धमव्यक्तं सुन्दरं वा यथा स्यादेवं कन्दलिताः पल्लविताः । तथा चेन्दुदर्शनात्तरङ्गा अतीव

---

पाठा०–१ 'वर्तते' P. २ 'अपलपं···॥···॥ १६ ॥' B. ३ '°द्गीतस्थान°' C., '°द्गीतिस्थान°' RM., S., B., D., P. ४ '°लक्षैरसंलक्षिताः' S.

[1]संमुग्धे मधुसूदनस्य मधुरे राधामुखेन्दौ सुधा[2]-
सारे कन्दलिताश्चिरं ददतु[3] वः क्षेमं कटाक्षोर्मयः ॥ १६ ॥

इति श्रीजयदेवकृतौ श्रीगीतगोविन्दे[4] मुग्धमधुसूदनो[5]
नाम तृतीयः सर्गः ॥ ३ ॥

---

इति । पुनः किंभूते? सुधाकरे सुधादीनां सारे, सुधायाः सारे वा । पुनः किंभूताः? [1]वंशोच्चरद्गीतिस्थानकृतावधानललनालक्षैर्न संलक्षिताः । वंशे उच्चरद्गीतिस्थानं तारस्वरस्थानं तत्र कृतावधानं याभिस्तास्तथा, ताश्च ता ललनाश्च तासां लक्षाणि तैः । चतुर्ष्वपि स्वस्थानेषु रागालप्तौ क्रियमाणायां क्रमेण दीप्तिस्थानारोहे कोऽप्यतिशयो जायत एव । तत्र दत्तावधानत्वात् वल्लभाने प्रियकटाक्षादपि प्रियत्वादित्यर्थः । किंभूतस्य मधुसूदनस्य? तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य, तिर्यक् कण्ठो यस्यासौ तिर्यक्कण्ठः, विलोलश्चासौ मौलिश्च, विलोलमौलिना तरलावुत्तंसौ कर्णभूषणे यस्य स तथा, तिर्यक्कण्ठश्चासौ विलोलमौलितरलोत्तंसश्च स तस्य । अत्र 'मौलि'शब्दस्य शिरःकिरीटयोः समानवाचकत्वेऽपि वैणुवादकस्य शिरःकम्पितादिदोषपरिजिहीर्षया किरीटे पर्यवसानम् । शीर्षे अकम्पिते किरीटकम्पनं वैचित्र्यायेति । शार्दूलविक्रीडितं वृत्तम् । रूपकमलंकारः ॥ १६ ॥

---

पल्लविता भवन्तीति कटाक्षाणां तरङ्गसाम्यम् । क्वचित्त–'प्रेम्णा कन्दलिताः सुमुग्धमधुरे राधाननेन्दौ सुधासारे वो मधुसूदनस्य ददतु क्षेमं कटाक्षोर्मयः' इति वा पाठः । तत्र किंविशिष्टे सुमुखे? सुष्ठु मुग्धं च तन्मधुरं च तत्तस्मिन्, रम्ये प्रिये चेत्यर्थः । 'मधुरस्तु प्रिये स्वादौ' इति कोशः । पुनः कीदृशे? सुधासारे सुधायाः सारे । ननु सर्वासु पश्यन्तीषु कथं राधामुखचन्द्रे एव पल्लविता ऊर्मयः इत्यत आह—वंशे उच्चरत् गीतिस्थानेषु गानपदेषु स्वरग्रामादिषु कृतावधानैः समर्पितचित्तवृत्तिभिः ललनालक्षैः कामिनीकदम्बैः न संलक्षिताः नावलोकिताः । तथा च सकल एव कलत्रकदम्बो वंशध्वनिमोहितो न किंचिदपश्यदिति तत्रैव पल्लविता इति भावः । वंशपूरणे स्वभावमनुवर्णयति—किंभूतस्य? तिर्यग्वक्रः कण्ठो यस्य विलोलश्चञ्चलो मौलिः किरीटो यस्य । तरलश्चञ्चल उत्तंसः कर्णाभरणं

---

पाठा०–१ 'संमुग्धं' C., S., B., P. २ 'मृदुस्पन्दे' BM., 'मृदुस्पन्दं' D., C., B., P. ३ 'दधतु' C. ४ 'महाकाव्ये' P. ५ 'मुग्धमनोहरमधुसूदनो' BM.

---

टिप्प०–1 अत्र 'मधुसूदन'शब्दो भ्रमरपर्यायः, 'षूद क्षरणविकलोः', मधु सूदयति क्षरतीति मधुसूदनः । तदेव विशेषेण स्पष्टयति–उदितमनोजमिति । उदितस्तत्कालानुदितमुक्ताहारकाञ्चीगुणलक्षणसंस्पृष्टसंघातपयोधरश्रेणिपरिसरस्पर्शादिना पुनराविर्भूतो मनोजो यस्य । तदुक्तं वात्स्यायने–'अवस्थानेऽपि च प्रीतिरुपचारैरुपस्कृता । सविश्रम्भकथायोगे रतिं जनयते पराम्' इति दीपिका ।

रागो गौडाकृतिर्यत्र प्रतिमण्ठपुरस्कृतः ।
आभोगान्ते तथा पाटस्वरैः पचगणाञ्चितः ॥
शृङ्गाररससंपूर्णकृष्णकेलिविराजितः ।
मुग्धमधुसूदनाख्यो हंसक्रीडननामतः ॥
श्रीगोविन्दपदारविन्दमकरन्दास्वादचञ्चूरे-
फेण श्रीनृपसिंहमोकलकुलाम्भोजप्रकाशेन्दुना ।
श्रीमत्कुम्भनृपेण क्लृप्तविवृतौ श्रीगीतगोविन्दके
सङ्गीतक्रमदीपिकास्वसुरयं सर्गस्तृतीयो गतः ॥

इति मुग्धमधुसूदनहंसक्रीडननामा सप्तमः प्रबन्धः ॥ ७ ॥

इति श्रीगुर्जरधरित्रीपरिवृढपराजयप्रसरत्प्रतापशोषिताशेषयवनपल्वलेन
राजाधिराजश्रीकुम्भकर्णेन विरचिते गीतगोविन्दविवरणे
मुग्धमधुसूदनो नाम तृतीयः सर्गः ॥ ३ ॥

---

यस्य सः । तिर्यक्कण्ठविरहमौलिस्थासौ तरलोत्तंसश्चेति कर्मधारयः । तथाविधश्चे-त्यर्थः । गीतिर्गानम् । 'ललना तु नितम्बिनी' इत्यमरः । 'उत्तंसः कर्णपूरेऽपि सुन्दरे नायकेऽपि च' इति धरणिः । 'कंदलं तु नवाङ्कुरे । कलध्वनावुपरागे च' इति । 'ऊर्मिः पीडात्वोत्कण्ठाभङ्गिप्राकाश्यवीचिषु । वस्त्रसंकोचलेखायाम्' इति ॥ १६ ॥

अप्युद्दिममपारकर्मणि लसत्तृष्णाभुजङ्गीविष-
ज्वालालीढमपि व्यथन्त्यपि सदा संशुष्कतर्कोक्तिषु ।
मच्चेतो मुरवैरिसद्गुणसुधासिन्धावितांतुक्षणं
सम्यक्स्नापयता न मय्युपकृतं किं शालिनाथ ! त्वया ॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां
गीतगोविन्दटीकायां रसमञ्जर्याख्यायां तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः

### –स्निग्धमधुसूदनः–

यमुनातीरवानीरनिकुञ्जे मन्दमास्थितम् ।
प्राह प्रेमभरोद्भ्रान्तं माधवं राधिकासखी ॥ १ ॥

**कर्णाटरागैकतालीतालाभ्यां गीयते ॥ प्रबन्धः ॥ ८ ॥**

निन्दति चन्दनमिन्दुकिरणमनु विन्दति खेदमधीरम् ।
व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् ।
माधव ! मनसिजविशिखभयादिव भावनया त्वयि लीना ।
सा विरहे तव दीना ॥ ध्रुवपदम् ॥ २ ॥

---

मधुमथनं हृदि कृत्वा परं जयदेवीये मातौ वरम् ।
तनुते धातुं श्रुतिसुखकरं कुम्भो नृपशतबन्धश्चिरम् ॥

इदानीं तयोः पृथक्कामावस्थां निरूप्य संयोजयितुमिच्छुर्दूतीयोगं निरूपयति—यमुनातीरवानीरेति । राधिकासखी माधवं प्राह—किंविशिष्टं माधवम् ? प्रेमभरेण स्नेहोद्रेकेणोद्भ्रान्तमुद्विग्नचित्तम् । पुनः किंभूतम् ? यमुनातीरस्थे वानीरनिकुञ्जे वेतसनिकुञ्जे मन्दं निरुत्साहं यथा स्यात्तथा आस्थितमासीनम् । अथवा, अमन्दमिति वचनविशेषणम् । अतिशयव्याकुलां राधां दृष्ट्वा अमन्दं सवेगमाह । पथ्यावक्त्रं छन्दः 'युजोर्जेन स' इति । पूर्वोक्तमेव स्पष्टयति—अत्र गीते विरहोत्कण्ठिता नायिका वर्णनीया 'नायिका लक्षणैर्युक्ता गीतकाव्येषु दर्शिता । एकैव नायिका वापि हरमूर्तिरिवाष्टधा । वासकसज्जा समुत्कण्ठा स्वाधीनभर्तृका तथा । कलहान्तरिता वापि विप्रलब्धाभिसारिका । खण्डिता प्रोषिता चैव नायिकाश्चाष्ट संमताः ।' तत्र समुत्कण्ठितालक्षणमुक्तं भरतेन—'यस्याः समुचितेऽप्यह्नि प्रवासी नैति वल्लभः । सा स्मरानलसंतप्ता विरहोत्कण्ठिता मता' ॥ १ ॥ निन्दतीति । पूर्वं ध्रुवपदं व्याक्रि-

---

पूर्वसर्गे कृष्णस्य विरहजनितावस्था वर्णिता । अत्र तु राधायालापमाह—यमुनेति । राधिकायाः सखी माधवं कृष्णं वक्ष्यमाणमुवाच । राधिकेत्यत्रानुकम्पायां कः । कीदृशं कृष्णम् ? यमुनातीरवानीरनिकुञ्जे वेत्रलताच्छन्नप्रदेशे मन्दं खेदमास्थितमासीनम् । तत्र हेतुगर्भविशेषणमाह—प्रेमेति । प्रेमभरेण राधिकाविषयस्नेहाधिक्ये-

---

पाठा०–१ 'कान्र(ड G.)रागे एकताले' RM., 'कर्नाटरागे' B., 'कर्णाटकरागे' P., 'कर्णाटरागे एकतालीताले' S. २ 'सा विरहे···। माधव··· लीना । G., S., B., P. ३ 'तव विरहे दीना' B., S., P.

---

टिप्प०–1 'कृपाणपाणिर्गजदन्तपत्रमेकं वहन् दक्षिणकर्णपूरे । संस्तूयमानः सुरचारणौघैः कर्णाटरागः शिखिकण्ठनीलः ॥' इति कर्णाटरागलक्षणम्–वाळ० ।

अविरलनिपतितमदनशरादिव भवदवनाय विशालम् ।
स्वहृदयमर्मणि वर्म करोति सजलनलिनीदलजालम् ॥ सा वि० ३

यते—सा विरहे इति । हे माधव ! सा राधा भावनया त्वयि लीना त्वद्ध्यानेन त्वन्मयत्वं प्राप्ता इति बुध्या त्वयि लीनेति । त्वामन्तरा स्थिता । उत्प्रेक्षते—कामशरभीत्येव । यथा त्वामन्तरा स्थितायां ते कामशरास्त्वय्येव पतन्ति, न तस्यामिति बुध्येति भावः । किंविशिष्टा सा ? तव विरहे सति दीना दैन्यमाप्ता । इति ध्रुवः ॥ अत्रोत्प्रेक्षालंकारः । किं किं करोति तत्कमाह—चन्दनं निन्दति चन्दनस्य निन्दां करोति । सराह्लादकत्वाद्विपक्षपक्षमाश्रित-मिवाभातीति । तत एव इन्दुकिरणमनु खेदं विन्दति लभते । कथम् ? अधीरं यथा भवति तथा । अधीरमिति चन्दनविशेषणं वा । अधिकं ईरयति प्रेरयति कामशरानिति निन्दार्थः । अपि च,—मलयानां व्यालनिवासानां समीरं गरलमिव कलयति । केन हेतुना ? व्यालनिलयमिलनेन व्याल-निलयानां व्यालनिवासानां चन्दनानां मिलनेन सङ्गात् । अत्र रूपकोत्प्रेक्षा-विरोधालंकाराः ॥ २ ॥ ध्यानादेकतामापन्नत्वं प्रकटयति—अविरलेति । सा सजलनलिनीदलजालं स्वहृदयमर्मणि वर्म करोति । किंभूतं तत् ? विशालम् । उत्प्रेक्षते—अविरलनिपतितमदनशराद्भवदवनायेव । अविरलं निपतितं निपातो येषां ते च ते मदनशराश्च । जातावेकवद्भावादेकवचनम् । त्वय्यासक्ततया 'त्वयि मृतेऽहमेव मृता' इति हृदयमर्मत्वं त्वय्येव विधाय भवदवनायेति युक्तम् । स्वहृदयमर्मणि भवदवनाय भवद्रक्षणाय सजलनलि-

नीक्लान्तमुद्दिश्य । तथा च प्रेमभरेण ध्यानपरम्परया तां साक्षात्कृत्य तदन्वेषणं विहाय लतागृहस्थितमिति भावः । 'अथ वेतसे । रथाभ्रपुष्पविदुलवेत्रवानीरवञ्जुलाः' इत्यमरः । 'मन्दः खले मन्दगतौ मूर्खे स्वैरिणि रोगिणि' इति विश्वः ॥१॥ निन्द-तीति । गीतस्यास्य कानर(ड)रागः एकतालीतालश्च । गीतार्थस्तु—हे माधव ! सा राधा तव विरहे त्वद्विश्लेषे चन्दनं निन्दति । अथ च इन्दुकिरणमनु-लक्षीकृत्याधीरमनस्त्वं खेदं दुःखं विन्दति प्राप्नोति । मलयसमीरं मलयपर्वत-संबन्धिनं वातं व्यालनिलयमिलनेन व्यालानां सर्पाणां निलयो निवासश्चन्दन-वृक्षस्तस्य मिलनेन संसर्गेण गरलमिव विषमिव कलयति मन्यते । चन्दनवृक्षस्थितैः सर्पैः पीत्वोद्गीर्णाः । एते मलयजवायवोऽत एव विषमयाः कथमन्यथा शरीरसंपर्का-देव मूर्च्छां मे जनयन्तीति मन्यत इति भावः । कुतस्तथा मन्यत इत्यतो हेतुगर्भ-विशेषणमाह—दीनेति । दीना दुःखिता । तथा च दुःखितस्य सुखहेतुरपि दुःखायैव भवतीति भावः । पुनः कीदृशी ? भावनया ध्यानेन त्वयि लीना मग्ना । कस्मादिव ? मनसिजस्य कामस्य ये विशिखा बाणास्तद्भयादिव । 'व्यालो भुजङ्गमे प्रोक्तः श्वापदे दुष्टदन्तिनि' इति विश्वः । 'गरलं तु विषे माने गरले तृणपूरके' इति च ॥ २ ॥ अविरलेति । सा स्वहृदयरूपमर्मस्थाने विशालं सजलनलिनी-

कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयम् ।
व्रतमिव तव परिरम्भसुखाय करोति कुसुमशयनीयम् ॥ सा वि० ४
वहति च चलितविलोचनजलभरमाननकमलमुदारम् ।
विधुमिव विकटविधुन्तुददन्तदलनगलितामृतधारम् ॥ सा वि० ५

---

नीदलजालं पिधानमिव करोति हृदयान्मा निरगादिति बुद्धेति बुद्धिलेशः । उत्प्रेक्षालंकारः ॥ ३ ॥ कुसुमेति । सा कुसुमशयनीयं कुसुमशय्यां करोति । किंभूतं कुसुमशयनीयम् ? अनल्पविलासकलाकमनीयं बहुतरविलासरमणीयम् । किमिव ? कुसुमविशिखशरतल्पं व्रतमिव । किमर्थम् ? तव परिरम्भसुखाय । अन्योऽपि सुखैषी व्रतमाचरति । दुर्लभभवदाश्लेषावाह्यैश्वरेण दूयमाना सा दुष्करं तस्यैव शरशय्याव्रतमाचरतीत्यर्थः । अत्रोत्प्रेक्षालंकारः ॥ ४ ॥ वहतीति । सा आननकमलं वहति । किंभूतम् ? चलितविलोचनजलभरम् । चलितः संभक्तः विलोचनेन जलभरो यत्र । वा चलिते संभक्ते विलोचने जलभरेण यत्र । अथवा,–चलितविलोचन एव जलधरो मेघो यत्रेति पाठः । किंविशिष्टं आननकमलम् ? उदारं मनोहरम् । कमिव ? विधुमिव । किंभूतं विधुम् ? विकटा विकराला विधुन्तुददन्तालीर्दलनेन पीडनेन गलितामृतधारा यस्मिन् । अनेन भवद्विरहेणानवरतं रुदत्या मुखमिन्दुकान्ति बिभर्तीत्याशयः, असितवर्णमभूदित्यर्थः । अत्रोपमालंकारः

---

दलजाले जलसहितं कमलिनीपत्रसमूहं वर्म कवचं करोति । किमर्थमिव ? अविरलं यथा स्यादेवं निपतितो यो मदनशरः कामबाणस्तस्माद्भवदवनाय भवतो रक्षणायैव । तस्या हृदये त्वं सर्वदा तिष्ठसि, अतोऽविरतनिपतद्भिर्मदनशरैस्ते पीडा मा भूदिति पद्मिनीपत्रैस्ते सन्नाहमिव सा करोतीति भावः । केचित्तु—कीदृशं वर्म ? अविरलनिपतितमदनशरादवनाय स्वरक्षणाय भवदिव संपद्यमानमिवेति व्याकुर्वन्ति । 'अवनं रक्षणे प्रीतौ' इति विश्वः ॥ ३ ॥ कुसुमेति । सा कुसुमशयनीयं पुष्पशय्यां करोति रचयति । कीदृशम् ? अनल्पविलासकलायां बहुतरक्रीडाकलायां कमनीयं काङ्क्षणीयम् । न दैवस्य गतिर्ज्ञातुं शक्यते । को वेदाकस्मादेव भवानागच्छतीत्याशयेन कुसुमशय्यामारचय्य तन्मार्गदत्तदृष्टिरेकनिष्ठैव तिष्ठतीति भावः । किमिव करोति ? कुसुमविशिखः कामस्तस्य ये शराः कुसुमस्वरूपास्तेषां तल्पं शय्या तत्र तत्स्वरूपं व्रतमिव । तव परिरम्भसुखाय तवालिङ्गनजन्यसुखप्राप्तये करोति ? 'तल्पं च शयनीये स्यात्तल्पं कुन्दकलत्रयोः' इति विश्वः । एतैस्त्रिभिः पदैरुद्वेगाख्या प्रथमावस्था कथिता । तल्लक्षणं प्रागेवोक्तम् ॥ ४ ॥ वहतीति । सा उदारमाननकमलं श्रेष्ठं मुखपद्मं वहति धारयति । कीदृशम् ?

---

पाठा०–१ 'वलितविलोचनजलधर°' RM., O., S. 'वहति च गलितविलोचनजलभर°' B., P.

विलिखति रहसि कुरङ्गमदेन भवन्तमसमशरभूतम् ।
प्रणमति मकरमधो विनिधाय करे च शरं नवचूतम् ॥ सा वि० ६
ध्यानलयेन पुरः परिकल्प्य भवन्तमतीव दुरापम् ।
विलपति हसति विषीदति रोदिति चञ्चति मुञ्चति तापम् ॥ सा वि० ७[1]

॥ ५ ॥ अपि च,–विलिखतीति । हे कृष्ण ! सा मत्सखी रहसि एकान्ते कुरङ्गमदेन भवन्तं विलिखति । किंभूतं भवन्तम् ? असमशरभूतं कुसुमशरतामापन्नम् । त्वामेव दुर्लभत्वात् बाहकत्वेन कुसुमशरोऽयमिति बुद्ध्वा । किं कृत्वा विलिखति ? करे नवचूतशरं विनिधाय । अत्र चूतपुष्पधारणेन पूजोपयुक्ता । अनन्तरं प्रणाम उचित एव । पीडाकरे कामे स्वरक्षार्थमर्चनप्रणामयोरपि युक्तत्वमेव । अयं च विरहिणीव्यापार उक्तः । तदुक्तं भरतेन–'देवतापूजनं कुर्याद्दद्याद्बलिभुजे बलिम् । लिखेत्कान्तप्रतिकृतिं पाठयेच्छुकसारिकाः ॥ गणयेच्चावधिदिनं गीतं गायेत्तदङ्कितम् । एवंविधविनोदेन नयेत्कालं वियोगिनी' ॥ च पुनः अधः वाहनदेशे मकरं विनिधाय एवं साङ्गोपाङ्गकामरूपं भवन्तं विनिधाय मा दहेति प्रणमति । अत्र लिखित्वा प्रणमतीति वक्तव्ये विरहिणो हि कृत्याकृत्यज्ञा न भवन्तीति पौनःपुन्येन यत्र तत्र गच्छन्तीति द्योतनार्थम् । अत्रोपमालंकारः ॥ ६ ॥ अपि च,–ध्यानलयेनेति । हे कृष्ण ! सा मत्सखी भवन्तं विलिखति । किंविशिष्टं भवन्तम् ? अतीव दुरापं दूतीप्रेषणादिना दुरापं दुर्लभम् । किं कृत्वा विलिखति ? ध्यानलयेन ध्यानैकाग्रतया

वलिते स्वमार्गविलोकनाय तिर्यक्प्रसारिते विलोचने नेत्रे एव जलधरौ मेघौ यत्र तादृशम् । अत्र निरन्तराश्रुवर्षित्वेन नेत्रयोर्जलधरत्वेन निरूपणम् । कमिव ? विधुमिव । कीदृशं विधुम् ? विकटाः कराला विशाला वा ये विधुन्तुदस्य राहोर्दन्तास्तैर्दलनं खण्डनं तस्माद्गलिता प्रच्युताऽमृतस्य धारा यत्र तादृशम् । अत्र मुखस्य विधुना नेत्रजलस्य चामृतधारारूपसादृश्याद्वाक्यार्थोपमा बोध्या । 'विकटः सुन्दरे प्रोक्तो विशालविकरालयोः' इति विश्वः । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः । इयं चोन्मादाख्या सप्तमावस्था । तदुक्तं शृङ्गारतिलके–( २।१२ ) 'श्वासः प्ररोदनोत्कम्पवसुधाश्लेषणैरपि । व्यापारो जायते यत्र स उन्मादः स्मृतो यथा ॥' इति ॥ ५ ॥ किंच, विलिखतीति । रहस्येकान्ते कुरङ्गमदेन कस्तूर्या भवन्तं विलिखति । कीदृशम् ? असमशरभूतं कामस्वरूपिणं तव करे नवचूतं शरं निधाय तथाधः आसनस्थाने मकरं निधाय भूत्वा प्रणमति । कुसुमशरो मकरवाहनस्त्वमेवासीत्यनेन 'चूतरूपपुष्पशरेण किमिति मां संतापयसि ?' इति प्रणम्य त्वां याचत इति भावः ॥ 'मृगनाभिर्मृगमदः कस्तूरीगन्धकेसरे' इति हारावलिः ॥ ६ ॥ ध्यानेति । ध्यानं चिन्तनं तत्र यो लयस्तत्परत्वं

पाठा०–१ 'विलिखति' R.P. २ 'श्रीजयदेव' C., S., B., P.

**प्रतिपदमिदमपि निगदति माधव ! तव चरणे पतिताहम् ।**
**त्वयि विमुखे मयि सपदि सुधानिधिरपि तनुते तनुदाहम् ॥सा वि०८**

---

पुरोऽग्रे परिकल्प्य । लिखित्वा च दृष्टो मयेति हसति । आश्लेषादिकं न करोतीति विषीदति । तत्र कुशलां नाम; प्रेम्णा दृष्टिमपि न प्रयच्छतीति रोदिति । दृष्टायामपि नास्य संतोष इति चलति स्थानात्स्थानान्तरं गच्छति । पुनरागत्य दृष्टश्चेदस्य वश्यो भविष्यतीत्याशयेन तापं मुञ्चति इति । अत्र दीपकमलंकारः ॥७॥ प्रतिपदमिति । हे माधव ! सा मत्सखी प्रतिपदं प्रतिचरणन्यासं प्रतिस्थानं वा इदमेव निगदति । अत्रापिरेवार्थे । इदमिति किम् ? अहं तव चरणे निपतिता । सपदि मयि विषये त्वयि विमुखे सति सुधानिधिरपि सुधानिधानमपि तनुदाहं शरीरदाहं तनुते । अथवा, सुधानिधिश्चन्द्रोऽप्यतनुदाहं स्मरतापं तनोति । अतनु यथा स्यादिति च । अत्रातिशयोक्तिरलंकारः ॥ ८ ॥

---

तेनातीवातिशयेन दुरापं दुःखेन प्राप्यं भवन्तं पुरोऽग्रे परिकल्प्य सा राधा विलपति 'शठ ! इयत्काले याभिः सह क्रीडां कृतवानसि, तत्रैव गच्छ' इत्याद्युक्त्वा रोदिति । भाग्यवशादागतोऽप्यतिनिर्भर्त्सनात्क्रो वेद पुनर्यास्यतीत्यनुरागप्रकटनाय हसति । पश्चात्पुरःस्थितोऽप्ययं मामालिङ्गनादिना न संभावयतीति विषीदति विषादं प्राप्नोति । पुनः कथमयं वश्यः स्यादिति विचार्य रोदिति । यतो नायिकानां नायकस्य पुरतो रोदनं परमवशीकरणं जायत इति । तदुक्तम्—'रुदितमुदितमस्त्रं योषितां विग्रहेषु' इति । पश्चाद्रोदने तदौदासीन्यमालक्ष्य गच्छन्तीं मामयमनुनेष्यतीत्यभिप्रायेण चलति स्थानान्तरं गच्छति । पश्चाद्ध्यानेनैव तत्सङ्गपरिकल्पनया तापं मुञ्चति । किलकिञ्चिताख्यो भावः । तदुक्तं दशरूपके—( २।३९ ) 'क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम्' इति । इयमप्युन्मादाख्यावस्था । अलंकारश्चेह दीपकमिति । तदुक्तम् ( का. प्र. १०।१०३ )—'सैव क्रियासु बह्वीषु कारकस्येति दीपकम्' इति । अस्यार्थः—बह्वीषु क्रियासु कारकस्य सैव सकृद्वृत्तिरेव दीपकमिति ॥ ७ ॥ प्रतिपदमिति । प्रतिपदमितस्ततश्चलन्ती पदं पदं प्रतिपदं निगदति । हे माधव !-तव चरणेऽहं पतिता त्वयि विमुखे विश्लिष्टे सति सुधानिधिरमृतनिधिश्चन्द्रोऽपि तनुदाहं मच्छरीरसंतापं तनुते विस्तारयति । त्वं मायाः लक्ष्म्याः धवः स्वामी । चन्द्रश्च समुद्रोत्पन्नत्वाल्लक्ष्म्याः सहोदर इति त्वयि निकटस्थिते सति सपत्नवपि मे किमपि न कर्तुं शक्नोति । त्वयि प्रतिकूले च सति स्वभगिनीशापकर्त्र्यं मयि स्मरन्सुधानिधिरपि मे तनुदाहं तनुते इति 'माधव'पदेन ध्वनितम् । सुधानिधेस्तापकारित्वं विरुद्धमिति

---

टिप्प०-1 अत्र 'माधव'पदेन मा लक्ष्मीः, तस्या धवः स्वामी यदिदृग्भाग्यवान् बभूव इति राधायाः सौभाग्यं ध्वनितम्-दीपिका ।

श्रीजयदेवभणितमिदमधिकं यदि मनसा नटनीयम् ।
हरिविरहाकुलवल्लवयुवतिसखीवचनं पठनीयम् ॥ सा वि० ॥ ९ ॥

आवासो विपिनायते प्रियसखीमालापि जालायते
तापोऽपि श्वसितेन दावदहनज्वालाकलापायते ।

श्रीजयदेवेति । हे वैष्णवाः ! इदं श्रीजयदेवभणितं यदि मनसाधिकं नटनीयमभिनेतव्यम् । 'नट'शब्देनात्र नाट्यस्याभिनयप्राधान्यादभिनयो विवक्षितः । अथवा,—नटनीयमित्यास्वादनीयम्, रसनीयमिति यावत् । 'नाट्यशब्दो रसे मुख्यः' इति भरतीये । किंभूतमिदम् ? सखीमधिकृत्य वर्तमानम् । तर्हि हरिविरहाकुलवल्लवयुवत्या राधायाः सख्याः वचनं पठनीयम् । जयदेवभणितिष्विदमेव सारमित्यर्थः ॥ ९ ॥ 'प्रतिमण्ठकतालेन रागे देशाङ्कसंज्ञिते । पदाद्युर्याक्षरैर्युक्तः पदान्तसंगमतस्तथा ॥ आकारोपचितालापगमकाकुलविग्रहः । आभोगान्तैरनेकैः पाटैः प्रचुरैरतिपेशलः ॥ हरिवल्लभपूर्वोऽयमशोकपल्लवः स्मृतः ॥' इति हरिवल्लभाशोकपल्लवनामाष्टमः प्रबन्धः ॥ ८ ॥ किं बहुना, इदानीं मत्सख्याऽऽलपदते त्वयि विपरीते सर्वमेव विपरीतमित्याह—आवास इति । 'हन्त' इति खेदे । हे माधव ! सा मत्सखी त्वद्विरहेण हरिणीरूपायते मृगीरूपमिवाचरति । स्वभावतो विरहेण पाण्डुवर्णो भवत्येवेति तथाविधं रूपमधिकृत्य हरिणीरूपेणोपमीयत इत्युक्तम् । कथमिति प्रश्ने हरिणीविशेषणेनाह—आवासो विपिनायते । हरिण्यः किल वने वसन्ति, तस्या मे सख्या आवासो विपिनायते । अत्र 'आवास'शब्देन निलय उच्यते । प्रियसखीनां माला श्रेणिः जालायते; इतस्ततो गमनाय तद्रोधकत्वात् । अथवा,—प्रियसखीदृष्टा मालापि

विरोधनामायमलंकारः ॥ ८ ॥ श्रीजयदेवेति । जयदेवभणितं जयदेवकवित्वमतिशयितं यदि मनसा नटनीयं नर्तितव्यं तदा इदं हरिविरहेणाकुला व्याकुला या बल्लवयुवतिस्तस्या या सखी दूतीत्वेन प्रेषिता तस्या वचनं पठनीयम् । इयं विरहोत्कण्ठिता । नायिका । तल्लक्षणं तु प्रागेवोक्तम् ॥ ९ ॥ सा त्वां विना कुत्रापि न निर्वृतिं लभत इत्यत आह—आवास इति । तस्यास्त्वद्विरहेणावासो मन्दिरं विपिनायतेऽरण्यमिवाचरति । प्रियसखीनां माला पङ्क्तिरपि जालायते आनायवदाचरति । यदा त्वद्विश्लेषदुःखासहिष्णुतया जीवितमपि त्यक्तुं प्रवृत्ता भवति तदा सखीभिर्निवार्यत इति स्वच्छन्दव्यवहारप्रतिबन्धकतया जालवदाचरतीति भावः । अथ तापो विरहजनितस्तापो निःश्वसितेन निःश्वासेन दावदहनज्वालाया दावाग्निशिखाया यः कलापः समूहः स इवाचरति । अपरोऽपि दावाग्निर्वायुना प्रचण्डो भवतीति ध्वनिः । सापि हरिणीरूपायते हरिणीवदाचरति । हा कष्टम् । कथम् ? कन्दर्पोऽपि कामोऽपि परानन्दजनकोऽपि त्वद्विरहे यमायते

पाठा०—१ 'ज्वालायते' B. २ 'तापो निःश्वसितेन' S., BM.

सापि त्वद्विरहेण हन्त हरिणीरूपायते हा कथं
कन्दर्पोऽपि यमायते विरचयञ्शार्दूलविक्रीडितम् ॥ १० ॥

**देशाख[1]रागैकतालीतालाभ्यां गीयते । प्रबन्धः ॥ ९ ॥**

स्तनविनिहितमपि हारमुदारम् ।
सा मनुते कृशतनुरिव [2]भारम् ।
[3]राधिका तव विरहे केशव ! ॥ ध्रुवपदम् ॥ १ ॥

---

जालायते । हरिणीबन्धनार्थं जालं क्षिप्यते तद्वदाचरति । अपि च,—तापोऽपि देहतापोऽपि श्वसितेन निःश्वसितेन दावाग्निज्वालावलीवाचरति । एवं तस्या हरिणीत्वं निरूप्य खेदमभिनयन्नाह—'हा' इति कष्टे । सा मत्सखी कथं वर्तते ? यतः कामोऽपि शार्दूलविक्रीडितं विरचयन् यमायते यम इवाचरति । शार्दूलः किल हरिणीं हन्तीत्युक्तिः । अत्र च हरिणीवन्मत्सख्यास्त्वयि दृढानुरागोऽस्ति । निःस्नेहे स्नेहवत्तया पशुरूपत्वेन हरिणीरूपमौचितीमावहति । निःस्नेहेऽस्नेहवति स्नेहस्यावधारणार्थः । वृत्तमपि शार्दूलविक्रीडितम् । अत्र लुप्तोपमा । विरोधाभासश्चालंकारः ॥ १० ॥ इदानीं राधासखी स्वसखीविरहचेष्टितं देवे विनिवेदयति—पूर्वं ध्रुवपदं व्याक्रियते । राधिकेति । हे केशव ! राधिका तव विरहे वर्तते । अनुकम्प्या राधा राधिका, तस्यां अनुकम्पां विधेहीत्यनुकम्पार्थेन द्योत्यते । इति ध्रुवः ॥ विरहे वर्तमाना राधा किं किं करोतीत्यपेक्षायां पदानामारम्भः । स्तनविनिहितमिति । हे केशव ! सा कृशतनुः स्तनविनिहितमप्युदारं मनोहरं हारं भारमिव मनुते

---

कृतान्त इवाचरति । किं कुर्वन् ? शार्दूलस्य व्याघ्रस्य विक्रीडितं क्रीडां कुर्वन् । यथा हरिणी समन्ततः प्रदीप्तदावाग्निज्वालयोद्विग्ना व्याघ्रेण त्रासिता अग्रे व्याधजाले वितते पश्यन्ती दशदिशं चकितं विलोकमाना क्वापि न निर्वृतिं लभते, तथेयमपि व्याघ्ररूपेण कामेन त्रासिता सखीष्वावासेषु क्वापि निर्वृतिं न लभत इति भावः । अत्र शार्दूलविक्रीडितनामकं छन्द इत्यपि ध्वनितम् । अत्र प्रथमपादे उद्वेगाख्यावस्था कथिता । तल्लक्षणं तूक्तं प्राक् । शेषे चाष्टमी व्याध्यवस्था कथिता । तदुक्तम्—'अभीष्टसंगमाभावाद्व्याधिः संतापलक्षणः । अत्र संतापनिःश्वासौ शीतवस्तुनिषेवणम् ॥ नोत्तरं भाषते प्रश्ने नेक्षते न शृणोति च ॥' इति । 'शार्दूलो राक्षसान्तरे । व्याघ्रे च पशुभेदे च' इति विश्वः ॥ ९ ॥ पुनरपि व्याधिरूपामष्टमीमवस्थां संप्राप्य तां च गीतेन कथयति—स्तनेति । गीतस्यास्य देशाखरागः । रूपकतालः । गीतार्थस्तु—हे केशव ! तव विरहे सा राधिका अनुकम्प्या राधा स्तनविनिहितमपि स्तनयोरुपरि दत्तात्सखीजनैर्धृतमप्युदारमुत्कृष्टं हारमतिभारं

---

पाठा०—1 'देशाग" C., 'देशाष' S., P. २ '"रतिभारम्' BM. ३ 'राधिका विरहे तव' P., BM., BP.

---

टिप्प०—1 कं सुखं, तस्येशो नियन्ता केशः, सर्वेषां सुखप्रद इत्यर्थः; वं अमृतं मुक्तिर्जीवनं तद्रूपः, केशश्चासौ वश्च केशवः; एतादृशेन त्वयैवंभूता प्रणयिनी मत्सखी दुःखिता भवति, तदनुचितमिति 'केशव' इति संबोधनेन ध्वनितम्—दीपिका ।

सरसमसृणमपि मलयजपङ्कम् ।
पश्यति विषमिव वपुषि सशङ्कम् ॥ राधिका० ॥ २ ॥
श्वसितपवनमनुपमपरिणाहम् ।
मदनदहनमिव वहति सदाहम् ॥ राधिका० ॥ ३ ॥
दिशि दिशि किरति सजलकणजालम् ।
नयननलिनमिव विगलितनालम् ॥ राधिका० ॥ ४ ॥

---

विरहाधिक्यात्कृशतनोर्हारोऽपि भारोपमो भवति ॥ १ ॥ अपि च,-**सरसेति** । सा मत्सखी वपुषि वर्तमानं मलयजपङ्कं सशङ्कं यथा स्यात्तथा विषमिव पश्यति । किंविधम् ? सरसमसृणमपि सरसं च तन्मसृणं च सरसमसृणं द्रवरूपात्स्निग्धकोमलमपि ॥ २ ॥ अपि च,-**श्वसितेति** । सा मत्सखी श्वसितपवनं मदनदहनमिव कामाग्निमिव वहति । किंभूतम् ? सदाहं दाहसहितम् । विरहेणान्तस्तापो विद्यते तेन सहितम् । किंभूतम् ? अनुपमपरिणाहम्; निःश्वासानामतिदीर्घत्वात् ॥ ३ ॥ अपि च,-**दिशि दिशीति** । सा राधा नयननलिनं दिशि दिशि किरति विक्षिपति । त्वद्दर्शनाकाङ्क्षयेति शेषः । सजलकणजालं जलकणसमूहेन सह वर्तमानम् । उत्प्रेक्षते-विगलितनालमिव विक्षिप्तं नयनं विनालेन नलिनेनोपमीयते । अथवाऽत्र उच्छूनत्वात्कज्जलरहितत्वाद्दीनत्वाच्च विनालेन कमलेनोपमीयते ॥ ४ ॥

---

मनुते । तत्र हेतुगर्भं विशेषणमाह—**कृशतनुरिति** । कृशा तनुरङ्गं यस्याः सा ॥ १ ॥ किंच,-**सरसेति** । मलयजपङ्कं चन्दनपङ्कं वपुषि देहे सशङ्कं शङ्कासहितं यथा स्यादेवं विषमिव पश्यति । कीदृशम् ? सरसमसृणमपि, आर्द्रस्निग्धमपीत्यर्थः । 'पङ्कः कर्दमपापयोः' इति विश्वः । 'मसृणः कर्कशे स्निग्धे' इति मेदिनी ॥ २ ॥ किंच,-**श्वसितेति** । सा श्वसितपवनं श्वासवायुं वहति धारयति । कीदृशम् ? अनुपमपरिणाहं उपमारहितः परिणाहो दैर्घ्यं यस्य तादृशम् । कमिव ? मदनदहनमिव कामाग्निमिव । कीदृशम् ? सदाहं दाहसहितम् । 'परिणाहो विशालता' इत्यमरः । एषा चला व्याध्यवस्था कथिता । तल्लक्षणं तु प्रागेवोक्तम् ॥३॥ **दिशि दिशीति** । सा दिशि दिशि नयननलिनं नेत्रपद्मं किरति क्षिपति । कीदृशम् ? विगलितनालं विगलितस्त्रुटितो नालो दण्डो यस्य । पुनः कीदृशम् ? सजलकणजालं जलकणजालैरश्रुजलकणिकासमूहैः सहितम् । अत्र 'इव'शब्दो वाक्यालंकारे । अत्र नेत्रस्य नलिनत्वेन निरूपणाद्रूपकमिति बोध्यम् । तेन जडता नवम्यवस्था ध्वनिता । तदुक्तं **रसार्णवसुधाकरे**—'यत्र ध्यायति निःशङ्कं जडता सा प्रकीर्तिता । अत्र स्पर्शानभिज्ञत्वं वैवर्ण्यं शिथिलाङ्गता ॥ अकाण्डहुंकृतिः

[2]त्यजति न पाणितलेन कपोलम् ।
बालशशिनमिव सायमलोलम् ॥ राधिका० ॥ ५ ॥
[1]नयनविषयमपि [3]किसलयतल्पम् ।
कलयति विहितहुताशविकल्पम् ॥ राधिका० ॥ ६ ॥
हरिरिति हरिरिति जपति सकामम् ।
विरहविहितमरणेव निकामम् ॥ राधिका० ॥ ७ ॥

---

त्यजतीति । सा राधा पाणितलेन कपोलं न त्यजति; चिन्तावशात् । किंभूतं कपोलम् ? अलोलम् । क ? सायम् । सायं हि विशेषविरहोद्रेको भवति । कमिव ? बालशशिनमिव । अलोलमिति बालचन्द्रो हि सायं पाण्डुर्निःश्रीकश्च भवति । कपोलस्य हस्तेनाच्छादितत्वाद्बालशशिनोपमा ॥ ५ ॥ अपि च,–नयनेति । सा राधा किसलयतल्पं विहितहुताशविकल्पं कलयति हुताशमिव जानाति । किंभूतं तल्पम् ? नयनविषयमपि । अनुमितार्थे संसर्गे वा भ्रान्तिर्जायते । नयनविषयेऽपि भ्रमेर्निर्निमित्तत्वात्तयोरत्यन्ताध्यारोपितत्वं चोत्यते ॥ ६ ॥ अपि च,–हरिरितीति । सा मत्सखी निकाममतिशयेन सकामं साभिलाषं यथा स्यात्तथा हरिरिति जपति त्वन्नाम गृह्णन्त्यास्ते । किंभूता ? विरहविहितमरणेव विरहेण विहितं मरणं यस्याः सा । अर्थोत्तयैव । अन्योऽपि विहितमरणो हरिरिति हरिरिति जपत्येव ॥ ७ ॥

---

स्तम्भनिःश्वासकृशतादयः ॥' इति ॥ ४ ॥ त्यजतीति । सा सायं संध्यासमये पाणितलेन करतलेन कपोलं न त्यजति । कीदृशम् ? अलोलमचञ्चलम् । 'अहस्तु यथाकथंचिदगीतं, रात्रिस्तु युगायमाना कथं नेतव्या ?' इति कपोलतले पाणिं कृत्वा सायं चिन्तयतीति भावः । कमिव ? बालशशिनमिव द्वितीयाचन्द्रमिव । मुखार्धस्य करतलच्छन्नत्वेनार्धदृश्यमानतया विरहपाण्डुतया मुखस्य द्वितीयाचन्द्रसाम्यम् । इयमपि जडतावस्था ॥५॥ नयनेति । किं च, सा नयनविषयमपि चक्षुर्गोचरमपि किसलयतल्पं नवपल्लवशयनीयं विहितो हुताशनस्याग्नेर्विकल्पः संशयो यत्र तादृशं कलयति । अत्र किसलयेषु ताम्रत्वसंतापकत्वादिसमानधर्मदर्शनादग्निसंशयः । इयं चोद्विग्नावस्था । तल्लक्षणं प्रागेवोक्तम् ॥ ६ ॥ हरिरितीति । सा निकाममतिशयेन हरिरिति हरिरिति जपति । केव ? विरहेण तद्विश्लेषेण विधातुमारब्धं मरणं यया सा । कथम् ? सकामं साभिलाषं यथा स्यात् तथा । अभिलाषादिषु नवस्ववस्थास्वतीतास्वपि त्वदौदासीन्यमालक्ष्य मरणाख्यापि दशम्यवस्था अवश्यं भवितव्येति निखिलप्रपन्नानां क्लेशहरणाद्धरिरित्युच्यत इति को वेद प्रपन्नत्व-

---

पाठा०–१ 'नयनविषय···॥···॥ ५ ॥' RM., S. २ 'त्यजति न पाणि······॥···॥ ६ ॥' RM., S. ३ 'किशलय' S.

श्रीजयदेवभणितमिति गीतम् ।
सुखयतु केशवपदमुपनीतम् ॥ राधिका० ॥ ८ ॥

सा रोमाञ्चति सीत्करोति विलपत्युत्कम्पते ताम्यति
ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्च्छत्यपि ।

---

अपि च,—श्रीजयदेवेति । श्रीजयदेवभणितं वर्णितं हरेः कृष्णस्य गीतं सुखयतु । भक्तानित्यध्याहारः । किंविशिष्टं गीतम्? केशवपदमुपनीतं प्रापितम् । इदं श्रीजयदेवभणितं हरिगीतं केशवपदं सुखयतु । केशवः पदं स्थानं यस्यासौ केशवपदः, तं केशवपदं वैष्णवं सुखयतु । किंभूतं गीतम्? उपनीतम्; उप समीपं नीतं प्रापितमित्यर्थः । अत्र मात्राचतुष्पदी छन्दः । सर्वत्रोपमालंकारः ॥ ८ ॥ इदानीं भक्त्याख्या भावितमरणशंसनमिषेण तन्मनः प्ररोचयति—सेति । हे स्वर्वैद्यप्रतिम अश्विनीकुमारसदृशरूप! एतावत्यतनुज्वरे एतावतीमवस्थां प्राप्तवत्यतनुज्वरे । पक्षे,—अतनुज्वरे महति ज्वरे सति यदि प्रसीदसि ततः सा वरतनुः तव रसात् शृङ्गारात्किं न जीवेत्? अपि तु जीवेदेव । अन्यथा चेन्न प्रसीदसि तदा अन्त एवान्तकः मरणमसि, मरणहेतुत्वात्त्वमेव मरणमिति । अथवा,—हे स्वर्वैद्यप्रतिम अश्विनीकुमारतुल्य वैद्य! यदि प्रसीदसि ततस्ते रसात्पारदादिनिष्पन्नौषधात्सा वरतनुर्न जीवेत्? अपि तु जीवेदेव । अन्यथा अन्तको यमो नासि? अपि तु यम एव । 'वरतनुः' इति हेतुगर्भं विशेषणम् । तेन सा तनुरूपेति कृत्वा-ऽवश्यं जीवनीयेति तात्पर्यम् । सा राधा न केवलं बाह्यवृत्त्या त्वय्यनुरक्ता, किंतु सात्त्विकभावेनापि त्वदायत्तजीवितेति दर्शयन्नाह । तानेव सात्त्विका-न्भावान्विवृणोति—सा रोमाञ्चतीति । 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ

---

स्तथापि जन्मन्यागत्य मे क्लेशं हरिष्यति, मा आयातु तथापि 'अन्ते या मतिः सा गतिः' इति जन्मान्तरेऽपि स एव वल्लभो भूयादिति साभिलाषं नामान्तरं विहाय हरिरित्येवं जपतीति भावः । विहितेत्यत्र 'आदिकर्मणि क्तः कर्तरि च' (पा. ३।४।७१) इति क्तः ॥ ७ ॥ श्रीजयदेवेति । इत्यमुना प्रकारेण जयदेवेन भणितमुच्चारितं सुखयतु । श्रोतॄन्गायकांश्च । कीदृशम्? केशवपदमुपनीतम् ॥ ८ ॥ सा रोमाञ्चतीति । सा राधा रोमाञ्चति रोमाञ्चानञ्चति प्रफुल्लयति । उद्गमयतीत्यर्थः । यद्वा,—रोमाञ्चोऽस्या अस्तीत्यर्शआदित्वादच्प्रत्यये रोमाञ्चः स्थिर इवाचरति रोमाञ्चयति । यद्वा,—रोमाञ्चपदं लक्षणया रोमाञ्चवतीपरम् । तथा च ओजस्वीवाचरतीत्यादिवद्रोमाञ्चवतीवाचरतीत्यर्थः । अनेनाभिलाषः कथितः । सीत्करोति सीत्कारं करोति । अनेन चिन्तास्मृती कथिते । अथ च विलपति, 'स शूरः सुन्दरश्च' इत्यादिनाथ तद्गुणान्विशेषेणालपति । अनेन गुणकीर्तनमुक्तम् । उत्कम्पते कथं विरहदुःखं सोढव्यमिति कम्पयुक्ता भवति । ताम्यति ग्लाना

एतावत्यतनुज्वरे वरतनुर्जीवेन्न किं ते रसा-
स्स्वर्वैद्यप्रतिम ! प्रसीदसि यदि त्यक्तोऽन्यथा हस्तकः ॥ ९ ॥

वेपथुः । वैवर्ण्यमश्रुप्रलयाविस्यष्टौ सात्त्विका मताः' । सा राधा रोमाञ्चति । रोमाञ्चो विद्यते यस्य स रोमाञ्चः, रोमाञ्चित इत्यर्थः; तद्वदाचरति रोमाञ्चति । अकारोऽत्र मत्वर्थीयः । रोमाञ्चतीत्यादिना रोमाञ्च उक्तः । सीत्करोतीति वैवर्ण्यम्, विलपत्युत्पातिभ्यामश्रु, उद्यातीति निःसरति; उत्कम्पत्युद्भ्रमतिभ्यां वेपथुः, ताम्यतिना स्वेदः, ध्यायतिपततिभ्यां स्तम्भः, पततीति वैपरीत्येन तपतिर्वैवर्ण्ये योजनीयः । प्रमीलतिना स्वरभङ्गः, मूर्च्छतिना प्रलयः, इत्येवमष्टौ सात्त्विका भावाः प्रदर्शिता भवन्ति । सन्मनस्तत्प्रभवाः सात्त्विकाः । इदमाकूतम्—त्वय्यारोपितमनस्का त्वया जीवनीयेति; अन्यथा आश्रितत्यागलक्षणं दूषणमपीति भावः ॥ शार्दूलविक्रीडितं वृत्तम् । अत्र दीपकमलंकारः । विप्रलम्भाख्यः शृङ्गारो रसः । अत्र पूर्वार्धेन स्थायिभावा उक्ताः । तदुक्तम्—'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः ॥' इति । सात्त्विकाश्च पूर्वत एव उक्ताः ॥ अहमित्याद्यनुकूलो नायको दक्षिणो वा । उत्कण्ठिता नायिका । सखी दूतीत्वेन सहायिनी । तल्लक्षणम्—'प्रवृत्तिकुशला धीरा गूढमन्त्रक-प्रिया । स्वतन्त्रा विधवा दासी दुष्टा प्रव्रजिता सखी । मालाकारादिनारी च

---

भवति । ध्यायति तव ध्यानं करोति । एतैर्विशेषणैरुद्वेगावस्था कथिता । उद्भ्रमति क्रीडादिस्थलं निर्दिशती भ्रमति । अनेन प्रलापः कथितः । प्रमीलति ध्यानकल्पिततदालिङ्गनादिजन्यसुखभावेन चक्षुषी निमीलयति । अनेनोन्मादः कथितः । पतति कार्श्येन स्थातुमशक्यतया भूमौ पतति । पश्चाद्भावनया त्वां दृष्ट्वा कथं कथमप्युत्थाति तदभ्युद्गमनं करोति । अनेन व्याधिः कथितः । ततो मूर्च्छति मूर्च्छां प्राप्नोति । अनेन जडता कथिता । क्रियादीपकोऽयमलंकारः । तल्लक्षणमुक्तं प्राक् । ननु जडतापर्यन्तावस्था यदि जातैव तदा किमङ्गसङ्गेनेत्यत आह—एतादृशीति । हे स्वर्वैद्याश्विनीकुमारौ तत्प्रतिम तत्सदृश ! एतादृश्यतनुज्वरे त्वं यदि प्रसीदसि तदा सा वरतनुः कमनीयदेहा ते तव रसाच्छृङ्गाररसात् किं न जीवेत् ? अपि तु जीवेदेव । अन्यथा त्वं चेन्न प्रसीदसि तदा तया हस्तकोऽपि त्यक्तप्राय इत्यर्थः । संप्रति मूर्च्छितायास्तस्या वक्तुमपारयन्त्या हस्तचेष्टयैव सखीषु व्यवहारो भवति, सोऽपि तया त्यक्तव्य इत्यर्थः । अन्यत्रापि ज्वरे सति ज्वरी रोमाञ्चति शीतादिना रोमाञ्चानिवाचरति । वेदनया शीतक्रमात्सीत्कारं करोति । मोहाद्यत्किंचिद्वदति । उत्कम्पते कम्पयुक्तो भवति । ताम्यति विह्वलो भवति ।

---

पाठा०-१ 'एतादृश्यतनु०' RM. २ 'न चेत्त्यक्तो' S. ३ 'धास्य-न्धकः' RP.

स्मरातुरां दैवतवैद्यहृद्य ! त्वदङ्गसङ्गामृतमात्रसाध्याम् ।
निर्वृत्तबाधां कुरुषे न राधामुपेन्द्र ! वज्रादपि दारुणोऽसि ॥ १० ॥
कन्दर्पज्वरसंज्वरातुरतनोराश्चर्यमस्याश्चिरं
चेतश्चन्दनचन्द्रमःकमलिनीचिन्तासु संताम्यति ।

कार्या तूलीष्टसिद्धये' ॥ ९ ॥ तदेव पूर्वसूचितदूषणमुद्भावयति—स्मरेति । हे उपेन्द्र ! दैवतवैद्यहृद्य अश्विनीसुतसुन्दर ! ततोऽप्यधिकचिकित्सक ! यदि त्वं पूर्वोक्तलक्षणां राधां निवृत्तबाधां निवृत्ता बाधा यस्यास्तां न कुरुषे तर्हि वज्रादपि दारुणोऽसि कठिनोऽसि । कठिनः खलु कथमपि न खिद्यतीति । किंविशिष्टां राधाम् ? स्मरातुराम् । पुनः किंभूताम् ? रोगिणां चिकित्सा भविष्यतीत्याशङ्क्याह—त्वदङ्गेति । त्वदङ्गसङ्ग एवामृतकल्पस्तन्मात्रसाध्याम् । अतोऽल्पप्रयासे बहुतरपुण्ये च प्रयोजने महान्तो नावसीदन्तीति । वृत्तमप्युपेन्द्रवज्रा ॥ १० ॥ ईदृशीमवस्थां प्राप्तापि त्वत्सङ्गमाकाङ्क्षयैव प्राणितीत्याह—कन्दर्पेति । हे माधव ! अस्याश्चेतश्चिरं चन्दनचन्द्रमःकमलिनीचिन्तासु यत्संताम्यति तदाश्चर्यम् । किंविशिष्टायाः ? कन्दर्पज्वरसंज्वराकुल-

उद्याति वायुवेगाद्धावति । मूर्च्छति मूर्च्छां प्राप्नोति । एतादृशसन्तुज्वरे महति सान्निपातिके ज्वरे कस्यचित्त्वद्वैद्यप्रतिमस्य प्रसादेन रसात्पारदादितो ज्वरी किं न जीवेत् ? अपि तु जीवेदेव । ननु सान्निपातिकज्वरे सहसा रसदानं निषिद्धमित्यत आह—अन्यथेति । अन्यप्रकारेण संहितामार्गेण हस्तकोऽपि वैद्यानां हस्तप्रक्रियाविशेषो 'हथचटी' इति लोके प्रसिद्ध उक्तः । संहिताप्रक्रियोपचारे कृते विशेषप्राप्ते रसदानमुचितमिति भावः । क्वचित् 'अतोऽन्यथा नान्तकः' इति पाठः । तदान्यथा यदि न प्रसीदसि अन्तकापेक्षयान्तको न, अपि तु त्वमेवान्तक इत्यर्थः । रोमाञ्चति । द्वितीयव्याख्याने क्विप्प्रत्यये तथोऽपेऽपि रूपं बोध्यम् । 'रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे' इति विश्वः ॥ ९ ॥ स्मरातुरामिति । हे दैवतवैद्यहृद्य ! देवतानां यौ वैद्यावश्विनीकुमारौ तद्वद्धृद्य मनोज्ञ ! स्मरातुरां मदनरुग्णां त्वदङ्गसङ्ग एव यदमृतं तन्मात्रसाध्यां राधां विमुक्तबाधां त्यक्तपीडां न कुरुषे । अतो हेतोरुपेन्द्रवज्रादपि दारुणोऽसि कठिनोऽसि । यतो वज्रमिन्द्रेण क्षिप्तमङ्गसंबद्धं सद्व्यथयति, त्वं तु विश्लेषे सत्येव व्यथयसीति वज्रापेक्षयापि दारुणत्वमिति

पाठा०–१ 'विमुक्तबाधाम्' RM., S., D., C. २ '°मुपेन्द्रवज्रादपि' RM., D., S., C. ३ 'ज्वराकुलतनोः' RP. ४ 'यत्ताम्यति' D., C.

टिप्प०–1 त्वं स्मरातुरां कामसंतप्तां राधां विमुक्तबाधां त्यक्तपीडां न कुरुषे न करोषि यदा तदोपेन्द्रवज्रादपि कठिनोऽसि; यथेन्द्रो वज्रेण शत्रुं हतवांस्तथा त्वं वधमानिति ध्वनिः–संजीविनी ।

किंतु क्लान्तिवशेन शीतलतनुं त्वामेकमेव प्रियं
ध्यायन्ती रहसि स्थिता कथमपि क्षीणा क्षणं प्राणिति ॥११॥[4]

क्षणमपि विरहः पुरा न सेहे
नयननिमीलनखिन्नया यया ते ।

---

तनोर्मदनसंतापाकुलशरीरायाः। तापे सति शीतवस्तुषु स्पृहा नास्तीत्याश्चर्यम्; किंतु आश्चर्यान्तरमपि। क्लान्तिवशेन क्षीणा रहस्येकान्ते स्थिता त्वामेवैकं प्रियं शीतलतनुं कथमपि ध्यायन्ती क्षणं क्षणमात्रं प्राणिति जीवति। अत्र शीतलेषु द्वेषः, शीतलादपि जीवतीति विरोधालंकारः। अद्भुतश्च रसः। शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥ इदानीं त्वदागमनहेतुं मनसि स्थिरीकृत्य प्राणितीत्याह—क्षणमिति। हे माधव! यया राधया पुरा ते विरहः क्षणमपि न सेहे न सोढः। किंभूतया? नयननिमीलनखिन्नया नयननिमीलनेनापि खिन्ना सा तया। भवद्दर्शनान्तरे निमिषेऽपि या दुःखं प्राप्नोति, असौ सांप्रतं चिरविरहेऽपि रसालशाखां चूतशाखां विलोक्य, कथं श्वसिति प्राणिति तन्न जाने। किंविधां रसालशाखाम्? पुष्पिताग्रां पुष्पिताग्रभागाम् ।

---

भावः। उपेन्द्रवज्राछन्दः ॥ १० ॥ ननु शीतोपचारैरेव तनुज्वरशान्तिर्भविष्यतीति किं शप्यत आह—कन्दर्पेति। अहो आश्चर्यम्, अस्याश्चेतश्चित्तं चन्दनचन्द्रमःकमलिनीचिन्तासु चन्दनचन्द्रपद्मिनीवार्तास्वपि सखीभिः क्रियमाणासु संताम्यति ग्लानिं प्राप्नोति। कीदृश्याः? कन्दर्पज्वरेण कामज्वरेण यः संज्वरः संतापस्तेनातुरतनोः रुग्णदेहायाः। विरोधोऽयमलंकारः। तल्लक्षणमुक्तं प्राक्। नन्वेतादृशे संतापे कथं जीवतीत्यत आह—किंत्विति। हे इन प्रभो! त्वामेकमेव प्रियं शीतलतनुं ध्यायन्ती सती क्षणं प्राणिति जीवति। कीदृशी? क्षणं रहसि स्थिता। पुनः कीदृशी? उत्क्रान्तिवशा उत्क्रान्तेः प्राणोत्क्रमणस्य वशा आयत्ता। तत्र हेतुगर्भविशेषणमाह-क्षीणा कार्श्यादतिदुर्बला। तथा शीतलं चाङ्गस्पर्शं ध्यायन्ती संप्रति जीवतीति त्वया झटिति गन्तव्यं, पुनस्तस्या दर्शनमपि ते दुर्लभं भवतीति भावः। 'संतापः संज्वरः समौ' इत्यमरः। 'इनः सूर्ये नृपे पत्यौ' इति विश्वः ॥११॥ ननु इयन्तं कालं यथा जीवति, तथाग्रेऽपि जीवतीत्यत आह—क्षणमिति। अनया राधया ते विरहः पुरा त्वत्सन्निधावपि क्षणमपि न सेहे न सोढः। कीदृश्या? नयनयोर्निमीलनं निमेषस्तेन खिन्नया दुःखितया।

---

पाठा०–१ 'किन्तु क्षान्तिवशेन' P., O. 'किंतूत्क्रान्तिवशेन' RM., 'किन्तु क्रान्तिरसेन' S. 'किन्तूत्क्रान्तिरसेन' D. २ 'शीतलतरं' D. ३ 'क्षणमपि क्षीणा क्षणं' RM., S. ४ 'इति श्रीगीतगोविन्दे चतुर्थः सर्गः' ४. 'खिन्नयाऽनया ते' RM.

---

टिप्प०–1 नन्वीदृशी सा कथं जीवति इत्यत आह—हे उत्क्रान्तिरस सन्तापक्लोकनरस! हे विष्णो! किन्तु त्वामेवैकं प्रियं वल्लभं ध्यायन्ती क्षणं क्षणमात्रमपि जीवति। कीदृशी? रहस्येकान्ते क्षणमपि स्थिता—संजीविनी।

श्वसिति कथमसौ रसालशाखां
चिरविरहेण विलोक्य पुष्पिताग्राम् ॥ १२ ॥
वृष्टिव्याकुलगोकुलावनरसादुद्धृत्य गोवर्धनं[2]
बिभ्रद्वल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः।

अत्र पुष्पितया चूतशाखया वसन्तो लक्ष्यते। वसन्ते हि विरहिणो न जीवन्तीत्यत्राकूतम्। सा कथं श्वसितीति चिरविरहेऽपि रसालशाखां विलोक्य। रसालो रससमूहो भवान्, तस्य शाखां अन्तिकं समीपं तां विलोक्य। किंविधां शाखाम्? पुष्पिताग्रां पुष्पितं संजातपुष्पमग्रमुत्तरकालो यस्याः सा ताम्। त्वदन्तिकं लप्स्ये इत्यभिकाङ्क्षया श्वसिति। अथवा,—पुष्पिताग्रां चूतशाखां दृष्ट्वा श्वसितीति युक्तार्थः। एवंविधां चूतशाखां दृष्ट्वा स्मरशरजर्जरितशरीरः सोऽवश्यं मामेष्यतीति ॥ वृत्तमपि पुष्पिताग्रा ॥ १२ ॥ इदानीं 'मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति न्यायमाचरन् कविराशिषमाह—वृष्टीति। कंसद्विषः कृष्णस्य बाहुर्भवतां श्रोतॄणां श्रेयांसि तनोतु। किं कुर्वन्? उद्धृत्य गोवर्धनं गिरिं बिभ्रत्। कस्मात्? वृष्टिव्याकुलगोकुलावनरसात्। वृष्ट्या व्याकुलं यद्गोकुलं तस्य यदवनं पालनं तत्र रसो रागो वीर्यं वा तस्मात्। पुनः किंभूतो बाहुः? बल्लववल्लभाभिर्गोपाङ्गनाभिरधिकानन्दाच्चिरं चुम्बितः। पुनः किंभूतो बाहुः? तदर्पिताधरतटीसिन्दूरमुद्राङ्कितः। ताभिश्चुम्बनार्थमर्पिता या अधरतटी तस्याः सिन्दूरमुद्रयेव शोणितत्वेनाङ्कितः। उत्प्रेक्षते—गोवर्धनोद्धरणलक्षणजातगर्वेणेव शोणितः। किंविधस्य कंसद्विषः? गोपतनोः गोपस्य तनुरिव तनुर्यस्य

किमिति धात्रा नयनयोर्निमेषः सृष्टः? यतः क्षणोऽपि जगदीश्वरमुखारविन्ददर्शने प्रत्यूहो भवतीति खेदयुक्तयेति भावः। असौ राधा चिरविरहेण कथं श्वसिति। जीवतीत्यर्थः। किं कृत्वा? पुष्पिताग्रां पुष्पितोऽग्रभागो यस्यास्तादृशीम्। रसालशाखां चूतशाखां विलोक्य दृष्ट्वा। श्वसितीत्यत्र 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा. ३।३।१३१) इति लट्। छन्दोऽपि चेदं पुष्पिताग्रानामकमिति ध्वनितम्। तल्लक्षणं वृत्तरत्नाकरे—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥ १२ ॥ वृष्टिव्याकुलेति। कंसद्विषः श्रीकृष्णस्य बाहुः भवतः शुश्रूषोः कल्याणानि श्रेयांसि तनोतु विस्तारयतु। अन्योऽपि हस्तेनैव दिसितं प्रयच्छतीति बाहोः कर्तृत्वम्; सामर्थ्यसूचनार्थमत्र 'कंसद्विट्' पदो-

पाठा०—१ 'चिरविरहेऽपि' R.P. २ ''वनवशात्' G., B.

टिप्प०—1 पुष्पिताग्रामिति। वसन्तागमेन कामोदय उक्त इति ध्वनिः संजीविनी। 2 गोवर्धनपर्वतमुद्धृत्य चिरं सप्ताहं बिभ्रद्यत्। कीदृशो बाहुः? बल्लववल्लभाभिर्गोपसुन्दरीभिरधिकानन्दादतिहर्षादधरो रासरसादौ गोवर्धनोद्धरणसमये वा चुंबितः—संजीविनी।

दर्पेणेवं[1] तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो
बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥१३॥

इति श्रीजयदेवकृतौ श्रीगीतगोविन्दे[2] स्निग्धमधुसूदनो
नाम चतुर्थः सर्गः ॥ ४ ॥

---

तः; गोपवेषस्येत्यर्थः । अत्राद्भुतो रसः । उत्प्रेक्षोपमे अलंकृती । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

"मालवश्रीः स्मृतो रागस्तालो निःसारसंज्ञकः ।
वाग्गेयकारनामाङ्कपदत्वस्तेन सन्ततिः ॥
शतः पादाः पदानि स्युः पञ्चपाणि रसोऽत्र यः ।
शृङ्गारो वासुदेवस्य क्रीडनं रासकादिभिः ॥
छन्दोऽपि रासको ज्ञेयं स्वेच्छया वा कृतं भवेत् ।
स्निग्धमधुसूदनोऽयं रासावलयनामकः ।
प्रबन्धः पृथिवीभर्त्रा प्रबद्धः प्रीतये हरेः ॥

इति स्निग्धमधुसूदनरासावलयनामा नवमः प्रबन्धः ।" इत्ययं नवमप्रबन्धस्य टीकायां ज्ञेयः ॥

एकस्तावदनूनधन्विविषयश्रीकारलब्धोऽपरः
स्फूर्जद्गुर्जरसूरनायकजयप्रोद्दामिवाडम्बरः ।
तुष्यन्मालवमूलकोषणविधौ सर्गस्तृतीयः कृत-
स्तुर्यः कुम्भमहीभृतात्र विवृतौ श्रीगीतगोविन्दतः ॥

इति श्रीगयाविमुक्तिस्थलकल्पितपितृकुलविमुक्तिदेन श्रीचित्रकूटाधिपतिना
विरचिते गीतगोविन्दविवरणे स्निग्धमधुसूदनो नाम चतुर्थः सर्गः ॥

---

पादानम् । कथं? तस्य गोपतनोः परमोदारश्रीगोपराजकुलोत्पन्नस्य शत्रुत्वं दर्पयति—उद्धृत्य गोवर्धनगिरिं बिभ्रत् । कुतः? तृष्णा व्याकुलं यद्गोकुलं तस्य यद्वनं पालनं तत्र रसो रागो वीर्यं वा तस्मात् । कथंभूतो बाहुः? बल्लवबाला-भिर्वैदग्ध्याभिरधिकानन्दाच्चिरं चुंबितः । पुनः कीदृशः? दर्पेण सौभाग्यमदेन ताभिश्चुंबनार्थमर्पिता या अधरतटी तस्याः सिन्दूरवदरुणमुद्रास्ताभिरंकितश्चिह्नितः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

क्व सर्वशास्त्रार्थविचारचातुरी क्व काव्यटीकाव्यसनैर्दिनव्ययः ।
तथापि कृष्णस्मरणोत्सवो बलाद्विधातुमस्मान्व्यवसाययत्यदः ॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां
गीतगोविन्दटीकायां रसमञ्जर्याख्यायां चतुर्थः सर्गः ॥ ४ ॥



---

१ 'दर्पेणैव'. C., S., D.   २ 'महाकाव्ये' D.

टिप्प०–1 दर्पेण कन्दर्पगर्वेणैव ताभिरर्पिता दत्ता अधरतट्य एव सिन्दूरस्य मुद्राः सिन्दूरचिह्नानि तैरङ्कितः, अधरलोहित्यात्संभोगचिह्नाङ्कित इत्यर्थः । तथा श्रीराधयाऽनुरागेण चिह्नित इति वा सखीपक्षे—संजीविनी ।

## पञ्चमः सर्गः

-साकाङ्क्षपुण्डरीकाक्षः-

अहमिह निवसामि याहि राधा-
मनुनय मद्वचनेन चानयेथाः ।
इति मधुरिपुणा सखी नियुक्ता
स्वयमिदमेत्य पुनर्जगाद राधाम् ॥ १ ॥

**देशीवराडीरागेण रूपकतालेन गीयते ॥ प्रबन्धः १०**

वहति मलयसमीरे मदनमुपनिधाय ।
स्फुटति कुसुमनिकरे विरहिहृदयदलनाय ॥ १ ॥
तव विरहे वनमाली सखि ! सीदति ॥ ध्रुवपदम् ॥

---

पुरीमिव पालयिताखिलभुवं कुम्भनरेशो नत्वा शिवम् ।
गायति धातुं रसिकामृतं जयदेवोदितं मातौ वृत्तम् ॥

इदानीं सखीनिवेदितो माधवस्तदभिमुखीभूय तदानयनाय सखीं प्रहितवान् । अयमिति । सेत्यध्याहार्यम् । या पूर्वं प्रहिता राधया सखी सैव स्वयमेव पुना राधामेत्य वक्ष्यमाणं जगाद । किंभूता सखी ? मधुरिपुणा इति नियुक्ता इत्यादिष्टा । इतीति किम् ? अहमिह यमुनाकुञ्जे निवसामि । 'यावदागमिष्यति तावत्प्रतीक्षां करिष्ये' इति । त्वं याहि, मद्वचनेन राधामनुनय, अनुनीय च आनयेथाः । पुष्पिताग्रावृत्तम् ॥ १ ॥ तदेव वक्ष्यमाणमाह—अत्राभिसारिका नायिका वर्णनीया; 'संस्कृतात्प्राकृतमिष्टं ततोऽपभ्रंशभाषणम् । ततः प्रियतरा वेश्या सर्वतश्चाभिसारिका' इति भरतः ॥ तल्लक्षणमुक्तं भरतेन—'लज्जां हित्वा समाकृष्टा यौवनेन व्रजेत्तु या । अभिसारगतं कान्तं कीर्तिता साऽभिसारिका ॥' अत्र पूर्वं 'तव विरहे' इति ध्रुवः । अथ पदानि । वहतीति । क सति ? मदनमुपनिधाय मदनस्य स्पृहामुत्पाद्य मलयसमीरे वहति सति । पुनः क सति ? विरहिहृदयदलनाय

---

अहमिति । मधुरिपुणा इति 'एवंप्रकारेण नियुक्ता आज्ञप्ता सखी स्वयमेत्यागत्य राधां वक्ष्यमाणं जगादोवाच । इति किम् ? त्वं राधां याहि मद्वचनेन तामनुनय । कृतापराधेन मया साक्षाद्वक्तुं न शक्यते, अतो माधवेनैवमेवमुक्तमित्युक्त्वा त्वमनुनयेति भावः । तां च मदन्तिकमानयेथा आनय । ननु कुत्र मयानेया इत्यत आह—अहमिह निवसामि, इहैव कुञ्जेऽहं तां प्रतीक्षमाणस्तिष्ठामीत्यर्थः ॥ १ ॥ यत्तत्सखी जगाद तदेव गीतेन कथयति—वहतीति । गीतस्यास्य देशीवराडी-

---

पाठा०—१ 'वराडीरागे रूपकताले' क.

---

टिप्प०—1 'विनोदयन्ती दयितं सुकेशी शुकद्युतिं चामरचालनेन । कर्णे दधाना सुरपुष्पगुच्छं वराङ्गनेयं कथिता वराडी ॥' इति वराडीरागलक्षणम्—बाल० ।

दहति शिशिरमयूखे मरणमनुकरोति ।
पतति मदनविशिखे विलपति विकलतरोऽति । तव वि० ॥ २ ॥
ध्वनति मधुपसमूहे श्रवणमपिदधाति ।
मनसि कलितविरहे[1] निशि निशि रुजमुपयाति । तव वि० ॥ ३ ॥
वसति विपिनविताने त्यजति ललितधाम[1] ।
लुठति धरणिशयने बहु विलपति तव नाम । तव वि० ॥ ४ ॥

---

कुसुमनिकरे स्फुटति सति विकसति सति ॥ १ ॥ अपि च,–दहतीति । शिशिरमयूखे हिमरश्मौ दहति सति मरणमनुकरोति मृतकल्पो भवति । तत एवं मदनविशिखे पतति सति विकलतरोऽतिशयेन विकलः सन्नत्यतीव विलपति ॥ २ ॥ अपि च,–ध्वनतीति । मधुपसमूहे ध्वनति सति श्रवणमपिदधाति आच्छादयति । निशि निशि प्रतिरात्रौ मनसि कलितविरहे सति झटिति रुजं पीडामुपयाति प्राप्नोति ॥ ३ ॥ अपि च,–वसतीति । विपिनविताने वनविस्तारे चण्डविपकल्पे वने वसति संतिष्ठते । त्वद्विरहेण ललितं मनोहरमपि धाम त्यजति । पुनः किं करोति ? धरणिशयने

---

रागो रूपकतालः । तालक्षणमुक्तं प्राक् । गीतार्थस्तु—हे सखि ! वनमाली कृष्णः सीदति । क्व सति ? मलयसमीरे मलयसंबन्धिवाते वहति, कुसुमनिकरे पुष्पसमूहे विरहिणां हृदयदलनाय विदारणाय स्फुटति विकसति सति । किं कृत्वा ? मदनं काममुपनिधाय समीपवर्तिनं कृत्वा । तथा च कुसुमनिकरैरेव बाणैस्तत्संनिहितेन कामेन विरहिणां हृदयं विदारणीयमिति भावः ॥ १ ॥ किं च, दहतीति । शिशिरमयूखे हिमकिरणे दहति सति मरणं मरणावस्थामनुकरोति । मरणावस्थायां यादृशी मूर्च्छादिरूपा चेष्टा तां स्वीकरोति । अथ च,–मदनविशिखे कामबाणे पतति सति विकलतरोऽतिविह्वलतरोऽति विलपत्यतिशयेन विलापं करोति ॥ २ ॥ किंच ध्वनतीति । मधुपसमूहे भ्रमरसमूहे ध्वनति गुञ्जति सति श्रवणं श्रोत्रं हस्ताभ्यामपिदधाति मुद्रयति । अथ च,–निशि निशि प्रतिरात्रौ चित्ते रुजं पीडामुपयाति प्राप्नोति । कीदृशे मनसि ? कलित उद्भूतो विरहो यत्र तादृशे ॥ ३ ॥ किंच, वसतीति । स विपिनविताने वनविस्तारे वसति तिष्ठति । ललितं मनोहरं धाम मन्दिरं त्यजति । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति विश्वः । किंच, स धरणीशयने भूशय्यायां लुठति । तव नाम 'हे प्राणेश्वरि, हे प्रिये, हे राधे !' इत्येवं बहु वारं वारं विलपति विशे-

---

पाठा०–१ 'चलितविरहे' (=संदीप्तवियोगाग्नौ ) S., D., B. 'वलितविरहे' P., C.

---

टिप्प०–1 ललितं सुन्दरं धाम गृहं त्यजति । नैतादृशस्य त्वामन्तरा सुखलेश इति भावः । 'धाम'शब्दवाच्यान्सर्वान् त्यजतीति ध्वनिः—संजीविनी ।

भणति कविजयदेवे विरहविलसितेन ।
मनसि रभसविभवे हरिरुदयतु सुकृतेन । तव वि० ॥ ५ ॥
पूर्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धय-
स्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्माधवः ।

तव नाम कृत्वा परिदेवनं करोति ॥ ४ ॥ अपि च,–भणतीति । कविजयदेवे भणति सति विरहविलसितेन वियोगविलासेन रभसविभव उत्साहसंपत्के मनसि । अर्थात्तव सुकृतेन हरिरुदयतु उदयं प्राप्नोतु तव मनसि हरेरनुरागो वसतु ॥५॥ अत्र वाक्यौचिती सङ्गीतराजे—'निःसारताललचितो रागे केदारसंज्ञके । कविनामाङ्कितपदाप्पाटैः स्वल्पतरैश्रितः ॥ ततः पद्यं विकासे स्रोल्लासतो जगतीपतेः । इत्थं हरिसमुदयागरुडपदसंज्ञकः ॥ प्रबन्धः पृथिवीभर्त्रा हरिनरकेन वर्णितः ॥' इति हरिसमुदयागरुडपदनामा दशमः प्रबन्धः ॥ १० ॥ इदानीं त्वय्येव माधवमनोऽस्तीति तां राधां प्रगुणीकरोति—पूर्वं यत्रेति । हे राधे ! माधवस्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे भूयो बाहुल्येन पुनरपि त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति । त्वत्कुचयोर्निर्भरो यः परिरम्भः स एवामृतमिव तत्तीर्थोद्भूतं जलम् । जलं हि कुम्भेनैव ग्राह्यं भवतीत्युक्तिलेशः । किं कुर्वन् ? अनिशमनवरतं त्वां ध्यायंस्त्वैवालापमन्त्रावलीं जपन् । एकान्तध्यानजपाभ्यां हि देवताग्रतो जाग्रतः पुरः स्फुरत्येव । तस्मिन्निति कस्मिन् ? यत्र निकुञ्जमन्मथमहातीर्थे कामतीर्थे पूर्वं रतिपतेः कामस्य त्वयोपलक्षितास्त्वय्येव प्रसन्नायां लभ्याः सिद्धयः समं समकालमविलम्बेनैव प्राप्ताः । 'रतिपतेः' इत्यत्र कामस्याभिलषितस्येति वक्तव्ये

येण जल्पति ॥ ४ ॥ भणतीति । श्रीजयदेवकवौ भणति कथयति सति यत्सुकृतं पुण्यं जातं तेन मनसि । अर्थाद्गायतां शृण्वतां च हरिः कृष्ण उदयत्वाविर्भवतु । कीदृशे मनसि ? रभसस्य कृष्णकीर्तनविषयोत्साहस्य विभवः प्राचुर्यं यत्र तादृशे हरिविरहविलसितेन विलासेनोपलक्षिते । वस्तुगत्या तस्य कालान्तर्यामिरूपतया न केनापि सह विश्लेषः, अपि तु लीलया तस्य विरहविलासमात्रमिति भावः । विरहविलसितेनेत्यत्र 'कर्तृकरणयोः' ( पा. २।३।१८ ) इति सूत्रेण तृतीया ॥ ५ ॥ ॥ १० ॥ पुनः कृष्णस्य राधाविषयिणीमुत्कण्ठां श्लोकेनाह—पूर्वमिति । हे सखि ! माधवः कृष्णो भूयस्त्वदीयौ यौ कुम्भाविव कुचौ स्तनौ, तयोर्निर्भरं गाढं यः परिरम्भ आलिङ्गनं तदेवामृतं मोक्षस्तं वाञ्छति । सान्द्रानन्दसन्दोहाविर्भावजनकत्वेन तत्कुचकुम्भपरिरम्भस्य मोक्षत्वेन निरूपणम् । वेदान्तिनां भाट्टानां च मते परमानन्दावाप्तेरेव मोक्षत्वात् । किं कुर्वन् ? तस्मिन्नेव निकुञ्जरूपे मन्मथस्य कामस्याधिष्ठानभूते महातीर्थेऽनिशं निरन्तरं त्वामेवेष्टदेवतां ध्यायन् । त्वैवालापास्त एव मन्त्रास्तेषामेवावलीं पङ्क्तिं जपन् । महातीर्थे हेतुगर्भं विशेषणमाह—पूर्वमिति । पूर्वं पुरा यत्र त्वया सह रतिपतेः कामस्य चुम्बनालिङ्गना-

पाठा०–१ 'वसन्माधवः' D., B.

ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमन्त्रावली

भूयस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति ॥ २ ॥

**गुर्जरीरागेण एकतालीतालेन गीयते॥ प्रबन्धः॥११॥**

रतिसुखसारे गतमभिसारे मदनमनोहरवेषम्।

न कुरु नितम्बिनि ! गमनविलम्बनमनुसर तं हृदयेशम् ॥१॥

---

'रति'ग्रहणं तस्यामतिशयितप्रीत्युपादानार्थम् । अथवा,-रतिपतेः कामाख्यया सहायभूतया त्वमं सिद्धय आसादिताः । तदाप्तये पुनः सहायभूतां त्वामेव वाञ्छति । अथ च यत्र निकुञ्जादौ कामपूरकतीर्थे येन यस्यास्सिद्धिराप्ता स तमेव ध्यायञ्जपन् निर्भरपरीरम्भामृतं मोक्षं वाञ्छतीत्युक्तिलेशः । शार्दूलविक्रीडितं वृत्तम् । अत्र काव्यलिङ्गमलंकारः ॥ २ ॥ सांप्रतं तमभिमुखमभिसर्तुं राधां त्वरयति ॥ तत्र पूर्वं ध्रुवपदं व्याक्रियते—**धीरसमीर** इति । इति पदार्थपाठः कुत्रचिदस्ति । गोपीपीनपयोधरमर्दनचपलेन करयुगलेनाढ्य इत्यर्थः । 'आढ्यः शालिनि विख्यातः' । हे राधे ! यमुनातीरे वने । यमुनातीरविषये वने । अथवा,-वेतसवने वनमाली श्रीकृष्णो वसति । किंभूते वने ? धीरसमीरे मन्दवायुनि । एतेन वायोस्त्रैविध्यमुक्तम् । तस्याश्च स्थानेनोत्कण्ठा जनिता । इति ध्रुवः ॥ **रतिसुखेति** । हे नितम्बिनि! तं वनमालिनमनुसर । गमनविलम्बनमभिसाराय कालातिक्रमं न कुरु, नितम्बिनी हि बृहन्नितम्ब-

---

दिक्त्वाः सिद्धय आसादिता माधवेन प्राप्ताः । तथा झटिति वाञ्छितफलप्रदत्वेन महातीर्थं तदपि बोध्यम् । अन्योऽपि साधको मोक्षमृतं वाञ्छन् यत्र सिद्धिं पूर्वं प्राप्नोति तत्रैव सिद्धनिकुञ्जादिमहातीर्थे कस्याश्चिद्देवताया मन्त्रावलीं जपति, तामेव देवतां ध्यायति । अत्र 'आवली'पदोपादानान्मालामन्त्रत्वमस्य प्रतिपादितम् । तत्प्रयोजनं च सिद्धसुसिद्धसाध्यारिगणनादिशोधनमन्तरेणैव फलसामर्थ्यं प्रतिपादितम् । तदुक्तं **योगरत्नावल्याम्**—'खप्ने प्राप्ते स्त्रिया दत्ते मालामन्त्रे तथैव च । वैदिकेषु च सर्वेषु सिद्धादीन्नैव शोधयेत् ॥' इति । निकुञ्जादिमहातीर्थे मन्त्रादि जपन्झटिति फलसिद्धिर्भवतीति ध्वनितम् । तदुक्तं **मञ्जूषायाम्**-'एकगोष्ठवनारामनदीनगपुरालये । समीपे वा गुरोस्तस्य सिद्धिः स्यादुत्तरोत्तरा' इति । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्' इत्यमरः ॥२॥ किंचित्प्रसादोन्मुखीं राधां वेगेन गमनाय त्वरयितुमाह—**रतिसुखेति** । गीतस्यास्य गुर्जरीरागः एकतालीतालः ।

---

पाठा०-१ 'नाममन्त्रावलीम्' B., 'जपन्निह तवैवालाप'' S. २ 'वेशम्' RP., P.

---

टिप्प०-1 त्वामेव नान्यामिह तीर्थेऽनिशं निरन्तरं तवाल्पा एव मन्त्राः परमासिद्धिप्रदा मन्त्रास्तेषामावलीं परम्परां जपन्नवर्तयन् त्वामिष्टदेवत्वेनावर्तयन् इति खेदातिशयः सूचितः । समासोक्तिरलंकारः—संजीविनी ।

धीरसमीरे यमुनातीरे वसति वने वनमाली ।
गोपीपीनपयोधरमर्दनचञ्चलकरयुगशाली ॥ ध्रुवपदम् ॥
नामसमेतं कृतसङ्केतं वादयते मृदुवेणुम् ।
बहु मनुतेऽतनु ते तनुसङ्गतपवनचलितमपि रेणुम् । धीर० ॥ २ ॥

---

त्वाचलितुं न शक्नोतीति शं त्वरयति । किंभूतम् ? अभिसारे संकेतस्थाने गतम् । किंभूतेऽभिसारे ? रतिसुखसारे रतिसौख्यप्रधाने । किंभूतं तम् ? मदनवत्कामवन्मनोहरवेशम् । पुनः किंभूतम् ? हृदयेशं मनस ईशम् । तव मनस्तदधीनमित्यर्थः । अथवा,–हृदये वर्तमानं तं वनमालिनमिति योज्यम् । किंभूतम् ? आयुर्वेदमिविवत्सुखहेतुत्वाच्छमेव ॥ १ ॥ अपि च,–नामसमेतमिति । हे राधे ! स हरिर्मृदुवेणुं कोमलवंशीं वादयते । मृद्विति क्रियाविशेषणं वा । कथम् ? नामसमेतं यथा स्यात्तथा च नामाक्षरसंयुक्तं कृतसंकेतं यथा स्यात्तथा च । पुनस्ते तव तनुः शरीरं शरीरसंगतपवनचलितं

---

गीतार्थस्तु–हे नितम्बिनि प्रशस्तनितम्बवति ! हृदयेशं कृष्णमनुसर गच्छ । गमनविलम्बनं गमने कालक्षेपं मा कुरु । कीदृशं तम् ? अभिसारेऽभिसरणस्थाने गतं प्राप्तम् । कीदृशेऽभिसारे ? रतिसुखस्य सारमुत्कृष्टफलं यत्र तादृशे । पुनः कीदृशम् ? मदनस्य कामस्येव मनोहरश्चित्तहरणक्षमो वेशो यस्य तम् । 'आकल्पवेशौ नेपथ्यं' इत्यमरः । 'वेशो वेश्यागृहे प्रोक्तो नेपथ्ये गृहमात्रके' इति विश्वः ॥ १ ॥ अभिसारस्थलमेवाह—**धीरसमीर** इति । यमुनातीरे वने वनमाली वनमालाशाली कृष्णो वसति । कीदृशे वने ? धीरो मन्दः समीरो वायुर्यत्र तादृशे । अत्र 'धीरे' इति पदेन वायोर्मन्दत्वं, 'यमुनातीर' इत्यनेन शैत्यं, 'वने' इत्यनेन सौगन्ध्यमुक्तम् । कीदृशो वनमाली ? गोपीनां पीनपयोधरमर्दनेन चञ्चलं यत्करयुगं तेन शालते शोभत इति तथा । पाठान्तरे तु गोपीपीनपयोधरपरिसरस्य[1] मांसलस्तनप्रान्तस्य मर्दनं यत्करयुगं हस्तयुगलं तेन शालितं शोभितं शीलं यस्य तादृशः । 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमरः । 'धीरः पण्डितमन्दयोः' इति धरणिः ॥ इति ध्रुवः ॥ यदि मद्वचने न प्रत्येषि तदा कृष्णेन वाद्यमानं वेणुमेवाकर्णयेत्याह—**नामसमेत**मिति । नामसमेतं त्वन्नामाक्षरसहितं यथा स्यादेवं मृदुवेणुं वादयते । हे राधे, प्राणेश्वरि, हे सुन्दरि ! इत्येवं कृष्णेन वाद्यमानाद्वेणोः स्वर आविर्भवतीत्यर्थः । कीदृशं वेणुम् ? कृतसंकेतं यदा यत्र मया वेणुर्वाद्यते तदा तत्र त्वं राधां नयेत्यर्थः । यद्वा,–मया कृतो यः संकेतस्तं त्वन्नामसमेतं त्वन्नामाक्षरसहितं वेणुं वादयते । अहमेतस्मिन्कुञ्जे तिष्ठामि, राधे ! त्वरितमेहीति कृष्णेन वाद्यमानो वेणुर्वदतीत्यर्थः । किं च नन्विति

---

पाठा०–१ '°धरपरिसरमर्दनकर' B., 'मर्दनचञ्चलकर' RM. २ 'मनुते तनु ते' C., B.

पतति पतत्रे विचलति पत्रे शङ्कितभवदुपयानम् ।
रचयति शयनं सचकितनयनं पश्यति तव पन्थानम् । धीर० ॥ ३ ॥
मुखरमधीरं त्यज मञ्जीरं रिपुमिव [२]केलिसुलोलम् ।
चल सखि ! कुञ्जं सतिमिरपुञ्जं शीलय नीलनिचोलम् । धीर० ॥४॥

---

रेणुमपि बहु मनुते । कथम् ? अतनु अनल्पं यथा भवति तथा ॥ २ ॥ अपि च,–पततीति । हे राधे ! हरिः शयनं रचयति । तव पन्थानं पश्यति । कथम् ? सचकितनयनं यथा भवति तथा । किंभूतं पन्थानम् ? शङ्कितभवदुपयानम् । शङ्कितं भवत्या उपयानमागमो यस्मिंस्तत् । क सति ? पतत्रे पक्षिपत्रे पतति सति । पुनः क सति ? पत्रे वृक्षपत्रे विचलति सति ॥ ३ ॥ अपि च,–मुखरमिति । हे सखि राधे ! कुञ्जं चल । अभिसाराजुरूपां सामग्रीं शिक्षयति—मञ्जीरं नूपुरं त्यज । किंभूतं मञ्जीरम् ? अधीरमलम् । अत एव मुखरं वाचालमभिसारोचितं न जानाति । अथवा,–साध्वेतन्मञ्जीरस्य मुखरत्वं यतो निमित्तनैमित्तिकं, कुतो मञ्जीरध्वनाविव उत्पत्तेः । पुनः किंभूतम् ? केलौ क्रीडायां सुलोलमतिलोलम् । अत एव रिपुमिव । अपि च,–नीलनिचोलं नीलं रक्तकृष्णं वस्त्रं शीलय परिधेहि ।

---

संबोधने । ये तनुसंगतस्त्वदङ्गसंबन्धी यः पवनो वायुस्तेन चलितमागतमपि रेणुं धूलीं बहु मनुतेऽधिकं यथा स्यादेवमाद्रियते । अयं रेणुर्धन्यो यस्त्वदङ्गसङ्गिना महता स्पृश्यते, अहमपि धन्यो यत्तेन रजसा स्पृश्ये' इत्येवं बहु मनुत इति भावः । 'रेणुर्द्वयोः स्त्रियां धूलिः' इत्यमरः ॥ २ ॥ किं च,–पततीति । स कृष्णः शयनं शय्यां रचयति । कथम् ? यथा पतत्रिणि पक्षिणि पतति गच्छति सति शङ्कितं तर्कितं भवत्या उपयानं समीपे गमनं यत्र एवं यथा स्यात् तथा । कीदृशे पतत्रे ? विचलितं पतत् पत्रं यस्मात्तत्र । क्वचित् 'विचलति पत्र' इति पाठः सुगम एव । सचकितनयनं यथा स्यादेवं तव पन्थानं त्वदागमनवर्त्म पश्यति । पत्रे मर्मरचञ्चलताभ्यामायाता मे प्राणेश्वरीति शङ्कया चकितं पन्थानं पश्यतीति भावः । 'पतत्रं पक्षपक्षिणोः' इति धरणिः । तदुपयानमित्यत्र 'सर्वनाम्नो वृत्तिमात्रे' (वा. १३७६) इति पुंवद्भावः ॥ ३ ॥ गमनोत्कण्ठितां बद्धाह—मुखरमिति । हे सखि ! मञ्जीरं नूपुरं त्यज । कीदृशम् ? केलौ सुलोलं चञ्चलमत एवाधीरममन्दं यथा स्यादेवं मुखरं शब्दायमानम् । कमिव ? शत्रुमिव । रिपुरप्यधीर उत्तरलो मुखरो वाचालः केलौ सुलोलश्च भवतीति मञ्जीरे तत्साम्यम् । हे सखि ! तिमिरपुञ्जेनान्धकारसमूहेन सहितं कुञ्जं चल गच्छ । नीलं निचोलं प्रच्छदपटं शीलय परिधेहि । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः ।

---

पाठा०–१ 'पतत्रिणि विचलितपत्रे' B. २ 'केलिषु लोलम्' D., B.

उरसि मुरारेरुपहितहारे घन इव तरलबलाके ।
तडिदिव पीते ! रतिविपरीते राजसि सुकृतविपाके । धीर० ॥ ५ ॥
विगलितवसनं परिहृतरसनं घटय जघनमपिधानम् ।
किसलयशयने पङ्कजनयने निधिमिव हर्षनिदानम् । धीर० ॥ ६ ॥

---

किंभूतम् ? कुञ्जे तिमिरपुञ्जेन सहितं । अथवा,–सतिमिरपुञ्जं यथा स्यात्तथा चल ॥४॥ उरसीति । हे राधे ! हे पीते पीतवर्णे गौरि ! त्वं मुरारेरुरसि सुकृतविपाके पुण्यपरिणामे राजसि राजिष्यसि । वर्तमानसामीप्ये वर्तमानवत् । किंभूत उरसि ? उपहित आरोपितो हारो यस्मिन् । का कस्मिन्निव ? तरलबलाके चञ्चलपक्षिविशेषे घन इव मेघ इव । केव ? तडिदिव । कदा ? रतिविपरीते पुरुषायितरतिसमये । उपहितहारमुरस्तरलबलाकघनेनोपमीयते । सा पीता तडित् । तस्याः पुरुषायिते चञ्चलत्वम् ॥ ५ ॥ विगलितेति । हे राधे ! किसलयशयने शय्यायां वर्तमाने पङ्कजनयने पुण्डरीकाक्षे जघनं घटय ।

---

'निचोलः प्रच्छदपटः' इति यादवः ॥ ४ ॥ राधाया अत्युत्कण्ठां जनयितुमाह—उरसीति । हे पीते गौराङ्गि ! । पुनः कीदृशे ? सुकृतविपाके सुकृतस्य पुण्यस्य विपाकः परिणामो यस्यास्तादृशी । पुनः कीदृशे ? उपहितहारे उपहितोऽर्पितो हारो यया तादृशे । रतिविपरीते रतौ सुरते विपरीते वैपरीत्ये पुंवद्भवनाय त्वं मुरारेरुरसि हृदये राजसि । अधुनैव राजिष्यसि । राजतीत्यत्र भविष्यत्सामीप्ये वर्तमानः । यद्वा,–'सुकृतविपाके', 'उपहितहारे' इति द्वयमपि 'उरसि'इत्यस्यैव विशेषणम् । तदा त्वत्सुकृतस्य विपाकस्वरूपे, उपहितः हारो यत्र तादृशे उरसीत्यर्थः । केव ? तडिदिव विद्युदिव । उरसि कीदृश इव ? तरलबलाके । तरला चञ्चला बलाका बकपङ्क्तिर्यत्र तादृशे । घन इव मेघ इव । अत्र पीतविद्युतो राधाया उपमानान्मेघस्य सजलत्वं विवक्षितम् । तदुक्तम् 'पीता वर्षाय विज्ञेया' इति । अत्र कृष्णहृदयस्य श्यामत्वेन सजलमेघसाम्यम् । राधायाश्चलद्धारस्य चञ्चलबलाकापङ्क्तिसाम्यम् । राधायाश्च तदानीं तरलतया पीततया पीतविद्युत्साम्यम् । अत्र यद्यपि बलाकाया मेघस्याधः स्थितत्वाद्विद्युतश्चोपरि वर्तमानत्वाद्धारविशिष्टकृष्णोरःस्थलस्याधोपमानं च तरलबकपङ्क्तिविशिष्टमेघोपरिस्थितविद्युतो विरुद्धं, तथापि मेघोपरि बकपङ्क्तिर्यदि भवति तदुपरि च विद्युदेतादृशं राधाया उपमानं भवतीत्यभूतोपमा बोध्या । तदुक्तं दण्डिना (का. २।३८)—'सर्वपद्मप्रभासारः समाहृत इव क्वचित् । त्वदाननं विभातीति तामभूतोपमां विदुः ॥' यद्वा,–'तरलबलाके' इत्यपि राधाया एव विशेषणम् । तथा च हे तरलबलाके ! हे चञ्चलकामुकीत्यर्थः । तस्मिन्कोटिकन्दर्पलावण्ये दृष्टे त्वमेव कामुकी सती पुरुषायितमाचरिष्यसीति भावः । 'बलाका बकपङ्क्तौ स्याद्बलाका बिसकण्ठिका । बलाका कामुकी चैषा बलाकश्च बको मतः' इति शाश्वतः ॥ ५ ॥ पुरुषायितसुखोत्कण्ठां कारयित्वा संप्रति नायककृतरतोत्कण्ठां जनयितुमाह–विगलितमिति । हे पङ्कजनयने

---

पाठा०–१ 'परिहृतरसनं' C. २ '°निधानम्' BM., C., S.

हरिरभिमानी रजनिरिदानीमियमपि याति विरामम् ।
कुरु मम वचनं सत्वररचनं पूरय मधुरिपुकामम् । धीर० ॥ ७ ॥
श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम् ।
प्रमुदितहृदयं हरिमतिसदयं नमत सुकृतकमनीयम् ॥ धीर० ॥ ८ ॥

---

किंभूतं जघनम् ? विगलितवसनम्, स्वयमेव ततः परिहृतरसनं त्यक्तमेखलम् । अत एव वसनपिधानरहितम् । अत एव निधिना उपमीयते । कमिव ? निधिमिव । किंभूतं निधिं जघनं च ? हर्षनिदानं हर्षस्यादिकारणम् ॥ ६ ॥ हरिरभिमानीति । हे राधे ! सत्वररचनं शीघ्रसाधनं यथा स्यात्तथा मम वचनं कुरु । किंभूतं वचनम् ? मधुरिपुकामं कृष्णवाञ्छां पूरय । न पूर्यते चेत् किं स्यात् ? हरिरभिमानी, स्वतो लाघवं न सहते, पश्चात्त्वां त्यक्ष्यति । पश्चादपि करिष्यसि चेदिदानीमेव कुरु । अन्यथेदानीमियं रजनिरपि विरामं याति । अभिसारकालोऽपि यास्यति । वर्तमानसामीप्याद्वर्तमानवत् ॥ ७ ॥ श्रीजयदेवेति । हे वैष्णवाः ! हरिं नमत नमस्कुरुत । किंभूतं हरिम् ? जयदेवे अतिसदयम् । किंभूते जयदेवे ? परमरमणीयमिदं पूर्वोक्तं भणति ।

---

पद्मनयने राधे ! किसलयशयने नवपल्लवशय्यायां कृष्णेन रचितायां जघनं घटय आरोपय । कीदृशं जघनम् ? विगलितं कोटिकन्दर्पलावण्यश्रीकृष्णदर्शनेन स्वयमेव स्खलितं वसनं यस्य तत् । अत एव पिधानमावरणं तद्रहितम् । पुनः कीदृशम् ? परिहृता दूरीकृता रसना क्षुद्रघण्टिका येन तादृशम् । पुनः कीदृशम् ? हर्षस्यानन्दस्य निधानं गृहम् । कमिव ? निधिमिव । 'रसना काञ्चिजिह्वयोः' इति विश्वः ॥ ६ ॥ हरिरिति । हरिः कृष्णोऽभिमानी मनस्वी । तथा चैतावता दैन्येनापि दुर्लभमलभमानस्त्वां त्वयि को वेदौदास्यमेवाचरेदिति भावः । इयं रजनिरपि रात्रिरपीदानीं विराममवसानं याति । तथा च मम वचनं 'चल सखि कुञ्जम्' इत्यादि महावाक्यं कुरु । कीदृशम् ? सत्वरं त्वरया वेगेन सहितं गमनं रचयेति सत्वररचनम् । मधुरिपोः कृष्णस्य कामं वाञ्छां पूरय । नायिका चात्राभिसारिका । तल्लक्षणं च **रसार्णवे**–'मदनानलसंतप्ता याऽभिसारयति प्रियम् । ज्योत्स्नीतमस्विनीयानयोग्याम्बरविभूषणा ॥ स्वयं चाभिसरेद्या तु सा भवेदभिसारिका ॥' इति ॥ ७ ॥ **श्रीजयदेवेति** । श्रीजयदेवे कवौ । कृता हरेः सेवा येन तादृशे परमरमणीयं यथा स्यादेवं भणति सति । हे जनाः ! हरिं कृष्णं नमत । कथम् ? प्रमुदितमानन्दयुक्तं हृदयं यथा स्यात्तथा तादृशम् । कीदृशं

---

पाठा०–1 'सत्वरगमनं' RM.

---

टिप्प०–1 यतस्त्वय्येवातिशयेन प्रेम्णाऽभिमानवान्, अतो मधुर्वसन्तोऽपीह क्षोभकत्वेन यस्य तस्य मधुरिपोः कामं कामाभिलाषं पूरय पूर्णं कारय । रिपुवीक्षितः प्रियेन वशीकृतो भविष्यतीति भावः–संजीविनी ।

विकिरति मुहुः श्वासानाशाः पुरो मुहुरीक्षते
प्रविशति मुहुः कुञ्जं गुञ्जन्मुहुर्बहु ताम्यति ।
रचयति मुहुः शय्यां पर्याकुलं मुहुरीक्षते
मदनकदनक्लान्तः कान्ते ! प्रियस्तव वर्तते ॥ ३ ॥

---

तव एव प्रमुदितहृदयम् । पुनः किंभूते जयदेवे ? कृतहरिसेवे । किंभूतं हरिम् ? सुकृतमिव कमनीयं मनोहरम् ॥८॥ इदानीं सत्वरागमनाय प्रोत्साहयति—विकिरतीति । हे कान्ते ! तव प्रियो मदनकदनक्लान्तो वर्तते मदनेन क्लान्तिं प्राप्तो वर्तते । तथाविधः सन्किं करोतीत्याह—त्वं नागतैवेति कृत्वा मुहुः श्वासान्विकिरति निःश्वासधारां मुञ्चति । नागतैवेति कृत्वाग्रे मुहुर्वारंवारमाशा ईक्षते विलोकयति । व्याकुलतया कस्या दिशः समेष्यतीति सर्वा एककालमिवावलोकयति । तत्राप्यदृष्ट्वा भ्रान्तः सन्कुञ्जं प्रविष्टा भविष्यतीति मुहुर्वारंवारं कुञ्जं प्रविशति । मुहुर्मुहुरिति कोऽर्थः ? तत्राप्यदृष्ट्वा बहिर्निर्यातस्तत्रैव निह्नुत इव तिष्ठतीति मुहुर्मुहुः प्रविशतीति । मुहुर्मुहुर्वारंवारं 'कुतो नागता, किं केनचिन्निवारिता, उत कुतो भयाद्वा ?' इत्यादि तस्या अनागमनहेतुं विमृश्य मुहुर्वारंवारं बहु बहुविधं गुञ्जन् अव्यक्तशब्दं कुर्वन् ताम्यति ग्लायति । अथवा,–वृथेदं विमर्शनम्, आगमिष्यत्येवेति मुहुः शय्यां रचयति । तथाप्यदृष्ट्वा पर्याकुलं यथा स्यात्तथा ममानुरागादागमिष्यत्येवेति मुहुरीक्षते

---

हरिम् ! सदयं दयासहितम् । पुनः कीदृशम् ? सुकृतेन पुण्येन कमनीयं वाञ्छनीयम् ॥ ८ ॥ श्लोकेनापि नायकस्योत्कण्ठामाह—विकिरतीति । हे कान्ते ! तव प्रियो मदनकदनक्लान्तः । मदनः कामस्तज्जनितं कदनं दुःखं तेन क्लान्तो ग्लानो वर्तते । मुहुर्वारंवारं श्वासान्संतापनिःश्वासान्विकिरति क्षिपति । नासापुरो नासाग्रं मुहुर्वारंवारमीक्षते । ध्यानेनापि प्रियां पश्यामीति नासाग्रं वीक्षमाणस्त्वां ध्यायतीति भावः । ध्यानसमये नासाग्रवीक्षणेन मनःसंयमो भवतीति 'नासापुर' इत्युक्तम् । क्वचित् 'श्वासानाशा' इति तालव्यशकारवान्पाठस्तदा श्वासान्विकिरति । अथ पुर आशाः पुरोभागस्थदिशः अनेन वर्त्मनागमिष्यतीत्याशयेन दृष्ट्वा मुहुरीक्षत इत्यर्थः । मुहुर्वारंवारं कुञ्जं प्रविशति गुञ्जच्छब्दं कुर्वन्कदाचिदनेन वर्त्मनागत्य निलीय तिष्ठतीत्याशयेन ध्याने त्वां दृष्ट्वा केलये वा कुञ्जं प्रविशतीत्यर्थः । मुहुर्वारंवारं बह्वधिकं यथा स्यादेवं ताम्यति ग्लानो भवति । ध्यानविच्छेदे त्वां तत्रापश्यंस्ताम्यतीति भावः । क्वचित् 'कूजन्मुहुस्ताम्यति' इति पाठः । तदा कूजचार्तनादं कुर्वंस्ताम्यतीत्यर्थः । मुहुर्वारंवारं शय्यां रचयति । एतावत्कालं गुरुजनभीत्या नायातोऽतः परमायास्यतीति शय्यां रचयतीति भावः । मुहुर्वारंवारं परित आकुलं यथा स्यादेवमीक्षते । 'नासा तु नासिकायां स्यात्' इति विश्वः । 'आशास्तृष्णा दिशः प्रोक्ताः' इति च ॥ ३ ॥

---

पाठा०–१ 'श्वासापुरो' BM. २ 'कूजन्मुहुस्ताम्यति' B.

त्वद्वाम्येन समं समग्रमधुना तिग्मांशुरस्तं गतो
गोविन्दस्य मनोरथेन च समं प्राप्तं तमः सान्द्रताम् ।
कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना
तन्मुग्धे ! विफलं विलम्बनमसौ रम्योऽभिसारक्षणः ॥ ४ ॥
आश्लेषादनु चुम्बनादनु नखोल्लेखादनु स्वान्तज-
प्रोद्बोधादनु संभ्रमादनु रतारम्भादनु प्रीतयोः ।

---

इति 'कदन'शब्दतात्पर्यम् । हरिणी छन्दः । दीपकालंकारः ॥ ३ ॥ इदानीं सांप्रतमेव गन्तुं सांप्रतमिति हेतुमाह—त्वद्वाम्येनेति । हे मुग्धे ! समग्रं यथा स्यात्तथाधुना त्वद्वाम्येन समं तव वक्रतया सहितं रविरस्तं गतः (रविः) तवाभिमानक्षोभयमेवाभिसारविलम्बकर्तुं गतमित्यर्थः । च पुनर्गोविन्दस्य मनोरथेन सह तमः सान्द्रतां प्राप्तम् । तिग्मांशावस्तं गते चन्द्रे चानुदिते तमः सान्द्रं भवत्येव । अयं कालोऽभिसारस्त्वरायै । अनु च सान्द्रे तमसि मत्प्रियाऽऽगमिष्यतीति गोविन्दस्य मनोरथो वृद्धिं प्राप्तः । अनु च मम प्रार्थना कोकानां चक्रवाकानां करुणस्वनेन सदृशी दीर्घा जाता । सदृशीति विरहाभिव्यक्तकरुणनिवेदकस्वरत्वात् । तत्तस्मात्कारणाद्विलम्बनं विफलम्, अभिसरणक्षणातिपातो निरर्थकः । असावभिसारक्षणो रम्यो वर्तते । ईदृशी प्रियवादिनी प्रियसखी, सान्द्रान्धतमसं चानुकूलं, नीलनिचोलादि साधनं, प्रियतमस्त्वदेकध्यानः । एवं सति गमनविलम्बने 'मुग्धे' इति संबोधनमौचितीमावहति । सहोक्तिरलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥ तत्रागतायास्ते बहुविधकामकौतुकं भविष्यतीति प्रलोभयति—आश्लेषादिति ।

---

पुनरपि त्वरयितुमाह—त्वद्बाष्पेति । हे मुग्धे ! असावभिसारक्षणोऽभिसारयोग्यः क्षणो रम्यस्ततो विलम्बनं विफलं निष्फलम् । रम्यत्वहेतुमाह—त्वद्बाष्पेण त्वदीयनेत्रजलेन सह तिग्मांशुः सूर्यः समग्रं यथा स्यात्सामस्त्येन यथा स्यादेवमस्तं गतः । त्वदीयबाष्पमप्यस्तं गतं सूर्योऽप्यस्तं गत इत्यर्थः । क्वचित् 'वाक्येन समम्' इति पाठः । तदा त्वदीयवाक्येन त्वदीयवचनेन समं तिग्मांशुरस्तं गतः । मयि गमनाय त्वरयन्त्यामुत्तरमप्रयच्छन्त्यास्ते वाक्यं मुखान्नोपलभ्यत इत्यर्थः । तमस्तिमिरं गोविन्दस्य मनोरथेन समं वाञ्छया सह सान्द्रतां निबिडतां प्राप्तं गतम् । गोविन्दस्य मनोरथोऽन्धकारश्च निबिडो जात इत्यर्थः । कोकानां चक्रवाकानां करुणस्वरेण करुणरसगर्भेण (ध्वनिना) सदृशी दीर्घा विस्तीर्णा मदभ्यर्थना संपन्ना । यथा कोकानां करुणस्वरो नानाप्रकारः श्रूयते, एवं मदीया चाटुकथोऽपि संप्रति तवाग्रे भवन्तीति भावः । अयं सहोक्तिनामालंकारः । तदुक्तं दण्डिना (का. २।३५१)—'सहोक्तिः सहभावेन कथनं गुणकर्मणाम्' इति ॥४॥ पुनरप्यन्धकारस्य नैबिड्यकथनेनाभिसारक्षणस्यातिरम्यतामेवाह—आश्लेषादिति ।

---

पाठा०-१ 'त्वद्बाष्पेण' RM., 'त्वद्वाक्येन' S., C. २ 'स्वरेण' RM., B.

अन्यार्थं गतयोर्भ्रमान्मिलितयोः संभाषणैर्जानतो-
र्दम्पत्योरिह को न को न तमसि व्रीडाविमिश्रो रसः ॥ ५ ॥

इह तमसि वर्तमाने दम्पत्योर्व्रीडाविमिश्रः कः को रसो न इति न, अपि तु सर्व एव रसो भवतीति । व्रीडाविमिश्रत्वे हि सर्वमपि सर्वरसागमं भवतीति । किंभूतयोर्दम्पत्योः ? अन्यार्थं गतयोः परस्त्रीपरपुरुषत्वेन प्राप्तयोः । पुनः किंभूतयोः ? भ्रमान्मिलितयोः प्रतिकूलमितस्ततः परिभ्रमणान्मिलितयोः । सान्द्रे तमसि परस्परालापैरेव जानतोः । अथवा,—आलापैरित्यत्र सात्त्विकभावेन स्वरभङ्गादेवावगमात् । अथवा,—अन्यमर्थं प्रयोजनमुद्दिश्य गतयोः । परस्त्रीपरपुरुषौ हि व्याजान्तरेणैव मिलतः । अन्येषां भ्रान्तिमुत्पाद्य मिलितयोः । तमेव रसमाह—आक्षेपादनु भयस्थायिभावो भयानकः प्रादुर्भावमासादयति । चुम्बनादनु मा मेति क्षामाक्षरोल्लापिनी कान्तां कामलम्पट कुतः इदकृष्येति शोकमिवानुभवन्करुणाकलितान्तःकरणो भवति । तदनु प्रोत्साहनार्थमुरस्ताडनमा नखोल्लेखादनु वीरोऽवतरति । एवं साधने संमिलिते किमिदमपूर्वं सुखमन्वभवमिति भावान्तरं गमितयोर्विस्मयसहचरोऽद्भुत उद्भटतामाटीकते । एवं च कोमोद्बोधे नानाविलासविलसितादनु हासमहावस्थानो हास्यः समुल्लसति । एवं कृतपरिकरसंकरः सकलरसचक्रवर्ती आनन्दमधुसन्दोहमधुरो रतिसहचरः शृङ्गाररसः समुज्जृम्भते । रत्यतिकरादनु प्रीतयोरुक्तरसः सर्वोऽपि व्रीडासंवलितः शृङ्गारत्वे समुज्जृम्भते । अथाक्षेपानन्तरं चुम्बनं, ततो नखक्षतं, ततः कामविकाराः, ततो मैथुनं, ततः प्रीतिः, ततो रसभावनेति क्रमोऽपि कामशास्त्रकथितः । तदुक्तं भरतेन—'आक्षेपचुम्बननखक्षतका-

इह तमसि दम्पत्योर्गोपायतोः को न व्रीडाविमिश्रो लज्जासमन्वितो रस आविर्भवतीत्यर्थः । कीदृशयोर्दम्पत्योः ? अन्यार्थं गतयोरन्यां नायिकामन्यनायकं चोद्दिश्य गतयोः । पुनः कीदृशयोः ? आक्षेपादनु आलिङ्गनादनन्तरं चुम्बनं, तदनु यो नखोल्लेखः, तदनु यः संभ्रमः संभोगादरः कामोद्वेगः, तदनु यो रतारम्भः सुरतारम्भः, तदनु प्रीतयोर्लब्धानन्दयोः संभाषणैर्जानतोरन्यनायिकानामग्राहिण्युरन्यनायकनामग्राहिपत्न्या वाक्यैः कथं पतिः कथमियं मे पत्नीति स्वरविशेषेण जानतोरित्यर्थः । रतान्ते परस्परं ज्ञातेऽपि न तुल्यापराधात्परस्परदोषोद्भावनम् । किंतु लज्जासहितः शृङ्गाररस एवाविर्भवतीत्यर्थः । अथ प्रथममाक्षेपः, ततश्चुम्बनं, ततो नखक्षतं, ततः कामोद्रेकः, ततः संभ्रमः, ततो रतान्तः, ततः प्रीतिः, ततो रसभावनमिति कामशास्त्रसिद्धः क्रमोऽपि कथितः । तदुक्तं भरतीये—'आक्षेपचुम्बननखक्षतकामबोधशीघ्रत्वमैथुनमनन्तसुखप्रबोधम् । प्रीतिस्ततोऽपि रसभावनमेव कार्यमेवं नितान्तचतुराः सुचिरं रमन्ते' इति । नन्वष्टधा सुरतं तत्प्रत्युक्तं कामशास्त्रे, तत्र च दन्तक्षतकूजितकेशग्रहणादिकमप्युक्तम् । तथा च कामशास्त्रोक्तक्रमरक्षा नेति न वाच्यम् । तस्य निःशङ्कुकेलिकमात्रपरकत्वात्; इह तु परपुरुषं परनारीं चोद्दिश्य

पाठा०—१ 'भ्रमान्मिलित॰' RM. २ '॰र्निहितो' P.

सभयचकितं विन्यस्यन्तीं दृशं तिमिरे पथि
प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम् ।
कथमपि रहःप्राप्तामङ्गैरनङ्गतरङ्गिभिः
सुमुखि ! सुभगः पश्यन्स त्वामुपैतु कृतार्थताम् ॥ ६ ॥

---

मयोषश्रीप्रत्यमैथुनमनन्तसुखमबोधम् । प्रीतिस्ततोऽपि रसभावनमेव कार्यमेवं नितान्तचतुराः सुचिरं रमन्ते ॥' शार्दूलविक्रीडितं छन्दः । दीपकमलंकारः समुच्चयो भ्रान्तिमांश्च ॥ ५ ॥ इदानीं त्वत्प्राप्तिरेव श्रीकृष्णस्य सर्वस्वमिति दर्शयन्नाह—सभयेति । हे सुमुखि राधे ! स सुभगः श्रीकृष्णस्त्वां पश्यन्नानन्दकृतार्थतामुपैतु कृतकृत्यो भवतु । अत्र दर्शनैकाग्रमने वर्तते । किंभूतां त्वाम् ? तिमिरे तिमिरवति पथि मार्गे सभयचकितं यथा स्यात्तथा दृशं विन्यस्यन्तीम् । सभयचकितमिति भयविस्मयस्थायिभावौ भयानकाद्भुतावुक्तौ भवतः । निविडे हि तमसि भयं भवत्येव । तादृशी च भावितभयानके पथि संकेतस्थानं यामीति विस्मयः । एवं प्रियस्यापि प्रियतमेन समं समागमो भविष्यति न वेति शङ्कावकाशोऽपि । किंभूतां त्वाम् ? प्रतितरु तरुं तरुं प्रति स्तननितम्बभारभरालसतया मुहुर्वारंवारं स्थित्वा कोऽपि मां मा द्राक्षीदिति मन्दं पदानि वितन्वतीम् । प्रतितरु अत्र वा स मे प्रियो भविष्यतीत्याशङ्कया मुहुः स्थित्वेति योजनीयम् । किंभूताम् ? कथमपि केनचित्प्रकारेण पूर्वोक्तसखीवचनलील-

---

गतयोः शङ्काकुलचित्तत्वात्संक्षिप्तपूर्वोक्तक्रमेणैव सुरतारम्भ उचित इति भावः । तथाह रुद्रः (शृं. ति. १।६९)—'ईर्ष्या कुलस्त्रीषु न नायकस्य निःशङ्ककेलिर्न पराङ्गनासु' इति । तस्मादेतादृशे गाढान्धकारे ते गमनविलम्बनमनुचितमिति भावः । 'दम्पती जम्पती जायापती भार्यापती च तौ' इत्यमरः ॥ ५ ॥ पुनरपि त्वरयितुं कृष्णोत्कण्ठामाह—सभयेति । हे सुमुखि ! सुभगः शोभनः श्रीकृष्णस्त्वां पश्यन्कृतार्थतामुपैतु प्राप्नोतु । कीदृशीम् ? तिमिरेऽन्धकारे सति पथि वर्त्मनि दृशा भयचकितं भयसहितं यथा स्यादेवं दृशं नेत्रं विन्यस्यन्तीमर्पयन्तीम् । पुनः कीदृशीं त्वाम् ? प्रतितरु तरुं तरुं प्रति मुहुः पुनः पुनः स्थित्वा मन्दं यथा स्यादेवं पदानि वितन्वतीम् । गाढान्धकारे तमालविटपेषु को वेदात्र कृष्णः स्थितो भविष्यतीत्याशयेन वाऽयमेव कृष्ण इति भ्रमात्तदन्तिकमुपेत्य पश्चाद्विशेषदर्शने सति तत उत्थाय पुनरग्रे तथैवेवं प्रतितरु स्थित्वा गच्छन्तीमिति भावः । पुनः कीदृशीम् ? कथमपि शनैः शनैश्चरणक्षेपादिना रह एकान्तस्थलं प्राप्ताम् ।

---

पाठा०—१ 'विनश्यन्तीं' B. २ 'दृशौ' C., S. ३ '°मुपैति' P. ४ 'कृतार्थाम्' C.

---

टिप्प०—1 कथमपि महता कष्टेनाङ्गे रह एकान्तगृहं प्राप्तां सुमुखीं । अन्धकारे प्रद्योतकपुष्पकम् । अत्र रसवदलङ्कारः—संजीविनी ।

राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थली-
नेपथ्योचितनीलरत्नमवनीभारावतारान्तकः ।
स्वच्छन्दं व्रजसुन्दरीजनमनस्तोषप्रदोषोदयः
कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥ ७ ॥

इति श्रीजयदेवकृतौ श्रीगीतगोविन्देऽभिसारिकावर्णने
साकाङ्क्षपुण्डरीकाक्षो नाम पञ्चमः सर्गः ॥ ५ ॥

---

निचोलादिसाधनसंपत्त्याऽभिमानपरित्यागेन मय्यनुकम्पया वा रहःप्राप्ताम् । पुनः किंभूताम्? अनङ्गतरङ्गिभिः कामकल्लोलकल्लैरङ्गैरुपलक्षिताम् । अत्र तमसो नैबिड्यादर्शनायोग्यत्वेऽङ्गस्पर्शनादेव ज्ञातेति कृत्वा दृष्टोर्णनार्थौ व्याख्यात इत्याकूतम् । अत्र हरिणी वृत्तम् । अतिशयोक्तिरलंकारः ॥ ६ ॥ इदानीं संभोगाख्यं शृङ्गारमवतारयंस्तदापातनिकाद्वारेण सर्गान्ताशिषमाह— राधामुग्धेति । देवकीनन्दनः श्रीकृष्णस्त्वामवतु रक्षतु । किंभूतो देवकीनन्दनः? राधामुग्धमुखारविन्दमधुपः । मुखमरविन्दमिव मुखारविन्दं, मुग्धं च तत् मुखारविन्दं च मुग्धमुखारविन्दम् । राधाया मुग्धमुखारविन्दं तस्मिन्मधुप इव मधुपः । अनेन भावी संभोगो द्योतितः । पुनः किंभूतो हरिः? त्रैलोक्यमौलिस्थलीनां किरीटदेशादीनां नेपथ्योचितं भूषणोचितं नीलरत्नमिव । पुनः किंभूतो देवकीनन्दनः? अवन्या भूमेर्भारायावतारो जन्म येषां शिशुपालदन्तवक्त्रादीनां तेषामन्तक इवान्तकः । यमसदृशोऽभूदित्यर्थः । पुनः किंभूतो देवकीनन्दनः? व्रजे सुन्दर्यः व्रजसुन्दर्यः । व्रजसुन्दरीणां जनस्य मनस्तोषप्रदोषोदय इव । पुनः किंभूतो हरिः? कंसध्वंसनधूमकेतुः कंसस्य ध्वंसनं विनाशस्तत्र धूमकेतुरिव विनाशसूचकस्ताराविशेष इव । जातमात्र एव कंसविनाशं सूचितवानित्यर्थः । अत्र कंसध्वंसने गोपीनां परमेश्वरादन्यत्र शक्तिविनाशे धूमकेतुर्बृहद्भानुरिव प्रकाशकत्वात् । प्रकाशे हि स्वेच्छाविहारभङ्गो जायते । अथवा,—कंसेः शासनार्थत्वाद्राधायाः कामेन यच्छासनं तत्र धूम-

---

पुनः कीदृशीम्? अनङ्गतरङ्गिभिरनङ्गस्य कामस्य यस्तरङ्गः पुनःपुनरुद्बोधस्तद्युक्तै-रङ्गैरुपलक्षिताम् । अङ्गैरित्यत्र विशेषणे तृतीया ॥ ६ ॥ सर्गावसाने कविराशिषमाचष्टे—राधेति । देवकीनन्दनः श्रीकृष्णस्त्वामवतु रक्षतु । कीदृशः? राधाया मुग्धं रमणीयं यन्मुखारविन्दं तत्र मधुपः भ्रमर इव । मुखारविन्दे माधुर्यं पाति रक्षति, नित्यानुकूलतया वृद्धिं प्रापयतीत्यर्थः । माधुर्यमात्रं तृष्णया पिबतीति वा । त्रैलोक्यस्य या मौलिस्थली वृन्दाटवी तदलंकारायोचितनीलरत्नं, श्यामसुन्दरत्वमित्यर्थः । त्रैलोक्ये एवाखिलकान्तानां मौलिस्थलीति वा । उक्तं च—'अहो

---

पाठा०—१ '°पृथिवी°' RM., D. २ 'स्वच्छन्दव्रज°' C. ३ 'तोषप्रदोषशिरम्' RM., D., C., P.

केतुरिव। स्वच्छन्दप्रदोषोदय इति यदा यदा प्रदोषोदयं वाञ्छति तदा तदा स्र एवेति। अथवा,–प्रगतो दोषोदयो यस्मात्तेन सह क्रीडतीनां दोष एव नास्तीति। अथ च राधामुग्धमुखारविन्दे मधु माधुर्यं पाति रक्षतीति। चिरं विप्रलम्भे हि प्रियदर्शनान्माधुर्यमुपपद्यत एवेति पदानामौचिती। अत्र श्लेषलुप्तोपमापरिकरवर्णोपमालंकाराः। शार्दूलविक्रीडितं वृत्तम्। पाञ्चाली रीतिः। आरभटी वृत्तिः। गीत्यादि पूर्वोक्तमेव ॥ ७ ॥

प्रत्याहृत्य पञ्चतयारिसैन्यं यो योजयत्याहवकुम्भकर्णः।
स कुम्भकर्णो रसिकप्रियायाः समस्करोत्पञ्चतयात्र सर्गम् ॥

इति कुम्भकर्णेन विरचितायां गीतगोविन्दटीकायां
रसिकप्रियायां सर्गोऽगात्पञ्चमः ॥

---

मधुपुरी धन्या वैकुण्ठाच्च गरीयसी।' इति। पृथिव्या भारभूतोऽवतारो येषामसुराणां तेषामन्तको नाशकः; अत एव कंसध्वंसने धूमकेतुस्तद्विनाशपिशुनग्रहः, आतमात्र एव तस्य नाशं सूचितवानित्यर्थः। तदेव—स्वच्छन्दं व्रजसुन्दरीजनमनस्तोषाय चित्ताभिलाषपूरणाय चिरमपारं प्रदोषो रजनीमुखमिव। चिरं नित्यमेवावत्विति वा ॥ ७ ॥

नो भूपाः कति सन्ति तेषु विरला विद्वद्गुणग्राहिण-
स्तन्मध्येऽपि नवप्रबन्धगणनानिर्बन्धिनो दुर्लभाः।
द्वित्रास्तेष्वपि कैटभद्विड्दयत्प्रेमानुबन्धाः क्षिता-
वेषेषां धुरमेक एव वहति श्रीशालिनाथप्रभुः ॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां
गीतगोविन्दटीकायां रसमञ्जर्याख्यायां पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ६

– धन्यवैकुण्ठकुङ्कुमः –

अथ तां गन्तुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा ।
तच्चरितं गोविन्दे मनसिजमन्दे सखी प्राह ॥ १ ॥

**[1]गुणकरीरागेण रूपकतालेन गीयते । प्रबन्धः ॥ १२ ॥**

पश्यति दिशि दिशि रहसि भवन्तम् ।
त[2]दधरमधुरमधूनि पिबन्तम् ॥
नाथ हरे ! सीदति रा[3]धाऽऽवासगृहे ॥ ध्रुवपदम् ॥ १ ॥

इदानीं कुत्रचित्कुञ्जे राधां संस्थाप्य दूती तच्चेष्टितं कृष्णे विनिवेदयति—अथ तामिति । अथानन्तरं राधासखी तच्चरितं राधायाश्चरितं गोविन्दे निवेदयामास । किंभूते गोविन्दे ? मनसिजमन्दे । किं कृत्वा ? तां राधां गन्तुमशक्तां ज्ञात्वा । शरीरान्तर्गतान्याः शक्तेर्दर्शनाविषयत्वेन दृष्ट्वेति दृशिरत्र ज्ञानार्थः । किंभूताम् ? तां चिरं गोविन्देऽनुरक्ताम् । अथवा,–लतागृहे इति तस्याधिकरणत्वेन व्याख्येयम् । अत्रैव लतागृहे सङ्केतस्य कृतत्वात् । आर्याछन्दः ॥ १ ॥ पूर्वं ध्रुवपदं व्याक्रियते—नाथ हरे इति । हे नाथ ! आवासगृहे सङ्केतस्थाने राधा सीदति अवसादं प्राप्नोति ॥ अथ पदानि–पश्यतीति । सा राधा रहसि रहोनिमित्तान्तरनिमित्तं एकान्तनिमित्तं वा दिशि दिशि भवन्तं पश्यति । सर्वा दिशस्तस्यास्त्वन्मया एव जाता इत्यर्थः । त्वदद्वैतमभवदित्यर्थः । 'सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः । सङ्गे सापि तथैका त्रिभुवनमपि तन्मयं विरहे ॥' किं कुर्वन्तम् ? तदधरमधुरमधूनि

अथेति । अथानन्तरं सखी तच्चरितं गोविन्दे गोविन्दं विषयीकृत्य प्राहोवाच । कीदृशे गोविन्दे ? मनसिजेन कामेन मन्दे मन्दगतौ । किं कृत्वा ? तां राधां लतागृहे कस्मिंश्चिल्लतामण्डपे चिरं बहुकालं व्याप्यानुरक्तां दृष्ट्वास्मिन्नेव लतागृहे केलिः कर्तव्येति चिरकालीनं तस्यानुरागं ज्ञात्वेत्यर्थः । पुनः कीदृशीम् ? गन्तुमशक्तां कृष्णान्तिकं प्रयातुमसमर्थाम् । 'मन्दः खले मन्दगते मूर्खे स्वैरेऽल्परोगिणोः' इति विश्वः ॥ १ ॥ भाषया यदुवाच तद्गीतेन कथयति—पश्यतीति । गीतस्यास्य गुणकरी रागो रूपकतालः । गीतार्थस्तु—हे नाथ हे हरे ! राधा वासगृहे सङ्केतः सकाशात्सीदत्यवसन्ना भवति । विशेषतस्त्वमेव तस्या अवसादकारणमिति भावः । रहस्येकान्ते दिशि दिशि भवन्तं पश्यति । कीदृशं भवन्तम् ? त्वदधरमधुरमधूनि स्वीयाधररूपाणि मधुरमधूनि पिबन्तमास्वादयन्तं, भावनया स्वकीयाधरपानं कुर्वन्तं त्वामेव दिशि दिशि पश्यतीति भावः । यद्वा,–तच्छब्दस्त्वन्यवाचकः । तथा च–तदधरमधुरमधूनि तस्याऽन्यस्या नायिकाया अधरमधुरमधूनि पिबन्तं दिशि दिशि पश्यतीति भावः । तच्छब्दस्यकारान्तोऽन्यपर्यायः

पाठा०–१ 'गोण्डकरी°' RP., गोण्डकिरी°' O. २ 'त्वदधर' P., RM. ३ 'राधा वासगृहे' RM.

त्वदभिसरणरभसेन वलन्ती ।
पतति पदानि कियन्ति चलन्ती ॥ नाथ हरे० ॥ २ ॥
विहितविशदबिसकिसलयवलया ।
जीवति परमिह तव रतिकलया ॥ नाथ हरे० ॥ ३ ॥
मुहुरवलोकितमण्डनलीला ।
मधुरिपुरहमिति भावनशीला ॥ नाथ हरे० ॥ ४ ॥

---

पिबन्तम् । तस्या राधाया एव अधरमधूनि पिबन्तम्, एवमवस्थमेवेत्यर्थः । तदधरसंसर्गान्मधुराणि मधूनि यान्यक्षराणि तानि शृण्वन्तम् । अत्यादरं श्रवणं पानमुच्यते । तस्यादरश्रवणेन तस्यालीकत्वं द्योत्यते । प्रतिवचनाभावात् ॥ १ ॥ त्वदभिसरणेति । हे माधव ! सा राधा त्वदभिसरणे रभसेन वलन्ती संभ्रममाना । अर्थादभिसारवेगम् । कियन्ति पदानि चलन्ती सती पतति । तस्मात्स्थानादधिकं गन्तुमशक्तेत्यर्थः ॥२॥ विहितेति । सा परं तव रतिकलया रतिविज्ञानेन रतिशिल्पेन परं जीवति, नान्य उपायः । किंभूता सा ? कृतपाण्डुरमृणालाङ्कुरकटका ॥ ३ ॥ मुहुरिति । सा मुहुर्वारंवारमवलोकिता मण्डनानां लीला विलासो यया सा । इमानि तानि मण्डनानि तत्सुरतसमारम्भयोग्यानीति मुहुर्मुहुः कानिचित्परिदधाति । किंभूता सती ? अहं मधुरिपुरिति भावनशीला ध्यानस्वभावा । एतेन स्त्रीयोग्यानि मण्डनानि मुक्त्वा त्वद्विरहदुःखापनोदाय पुरुषायितसुरतयोग्यानि मण्डनानि दधाना स्वयमेव त्वद्रूपीभूय कालमतिवाहयतीत्यर्थः । अथवा त्वदलाभात्स्वयमेव त्वं च राधा च भूत्वा ।

---

सर्वनामगणे पठितः । तदुक्तं सर्वादिगणव्याख्याने प्रक्रियाप्रसादे 'स्वच्छन्दोऽन्यवाची द्विःपठितः स्वरभेद एक उदात्तोऽनुदात्तः' इति काशिकाकारमतम् । ग्रन्थान्तरमते तु 'एकोऽकारान्तोऽन्यस्त्वकारान्तो द्वावप्यनुदात्तौ' इति । 'भोगावासो वासगृहम्' इति हारावली ॥१॥ ननु किमिति सीदति ? अत्रैव किमिति नायातीत्यत आह—त्वदिति । तवाभिसारे यो रभस उत्साहस्तेन चलन्ती प्रसाधनादौ व्याप्रियमाणा कियन्ति पदानि कतिपयानि पदानि चलन्ती त्वदन्तिकमागन्तुं गच्छन्ती पतति स्खलति । तथा च त्वद्विरहसंततया त्वदन्तिकमागन्तुमसमर्था ॥ २ ॥ नन्वेवं चेदवस्था तर्हि कथं जीवतीत्यत आह—विहितेति । सा परं केवलं तव रतिकलया पूर्वानुभूतायास्तव रतेराकलनेन जीवति । कीदृशी ? विहितानि विशदैर्निर्मलैर्बिसैर्मृणालैः किसलयैर्नवपल्लवैश्च वलयानि कङ्कणानि यस्याः सा । 'कलनाकालयोः कला' इति विश्वः । 'वलयं कङ्कणेऽपि च' इत्यपि ॥ ३ ॥ पुनः कीदृशी ? मुहुरिति । मुहुर्वारंवारमवलोकिता वीक्षिता मण्डनैर्मुकुटकुण्डलवनमालाभिर्लीला तवानुकृतिर्यया सा । पुनः कीदृशी ? अहं

---

पाठा०–१ 'चलन्ती°' RM., S. २ 'मण्डललीला' B.

त्वरितमुपैति न कथमभिसारम् ।
हरिरिति वदति सखीमनुवारम् ॥ नाथ हरे० ॥ ५ ॥
श्लिष्यति चुम्बति जलधरकल्पम् ।
हरिरुपगत इति तिमिरमनल्पम् ॥ नाथ हरे० ॥ ६ ॥
भवति विलम्बिनि विगलितलज्जा ।
विलपति रोदिति वासकसज्जा ॥ नाथ हरे० ॥ ७ ॥

---

'स्त्रीणां प्रियालोकफलो हि वेशः' इति त्वच्चेतोहराणि मण्डनानि आदधाना वर्तते ॥ ४ ॥ त्वरितमिति । सा राधा अनुवारं वारंवारं सखीमिति वदति । इतीति किम् ? हे सखि ! हरिस्त्वरितं शीघ्रं अभिसारं सङ्केतस्थानं कथं नोपैति कथं न याति ? ॥५॥ श्लिष्यतीति । हे हरे ! सा हरिरुपगत इति कृत्वा स्निग्धनीलत्वसाम्यादनल्पं स्थूलं तिमिरमन्धकारं श्लिष्यति चुम्बति च । किंभूतं तिमिरम् ? किंचिज्जलधरसदृशम् ॥ ६ ॥ भवतीति । हे हरे ! सा वासकसज्जा नाम नायिका । भवति त्वयि विलम्बनकारिणि सति विलपति विलापान्करोति । रोदिति अश्रूणि विमुञ्चति । 'दूतीमहरहः प्रेष्य सज्जिते वासवेश्मनि । यस्या न मिलति प्रेयान्सा हि वासकसज्जिका ॥' इति ॥ ७ ॥

---

मधुरिपुरिति भावनशीला चिन्तनपरा । रहसि तव वेशं विधायानुरागातिशयेनाङ्गमेव मधुरिपुरिति चिन्तयन्तीति भावः । लीला च हावविशेषस्तदाह वात्स्यायनः—'प्रयोजनस्य चेष्टा याऽनुरागातिशयेन या । क्रियतेऽनुकृतिः सेयं लीलोक्ता मुनिसत्तमैः' इति ॥ ४ ॥ त्वरितमिति । हरिस्त्वरितमभिसारकुञ्जं कथं नोपैत्यागच्छतीति सखीमनुवारं सा वदति ॥५॥ श्लिष्यतीति । सा हरिः कृष्ण उपगत आगत इति बुद्ध्याऽनल्पमधिकं तिमिरमन्धकारं श्लिष्यत्यालिङ्गति चुम्बति च । कीदृशं तिमिरम् ? जलधरकल्पं श्याममेघसदृशम् । यदा यदोत्थाय त्वदन्तिकं चलति तदा तदा निकुञ्जद्वारि पुञ्जीभूतमन्धकारं दृष्ट्वा त्वद्भ्रमात्तत्रैव चुम्बनालिङ्गनादिकमाचरतीत्यागन्तुमेव न पारयतीति भावः । भ्रान्तिमानयमलंकारः । तल्लक्षणं प्रागेवोक्तम् ॥ ६ ॥ भवतीति । पश्चाद्विश्लेषदर्शने सति, भवति त्वयि विलम्बिनि विलम्बं कुर्वति सति विगलितलज्जा सती सा वासके लीलागृहे कान्ताभिसरणाय सज्जा संभृतसकललीलोपकरणा विलपति । हे निष्कृप ! कथमेतावदौदास्यं मयि त्वया रचितमिति विलापं करोति । रोदिति रोदनं करोति । वासकसज्जालक्षणं तु **रसार्णवसुधाकरे**—'भरताद्यैरभिदधे स्त्रीणां वासस्तु वासकः । स्ववासकवशात्कान्ते समेष्यति गृहं प्रति । सज्जीकरोति चात्मानं या सा वासकसज्जिका' इति । **शृङ्गारतिलके** ( १।७६ )—'भवेद्वासकसज्जासौ

श्रीजयदेवकवेरिदमुदितम् ।
रसिकजनं तनुतामतिमुदितम् ॥ नाथ हरे० ॥ ८ ॥

विपुलपुलकपालिः स्फीतसीत्कारमन्त-
र्जनितजडिम काकुव्याकुलं व्याहरन्ती ।
तव कितव ! विधायामन्दकन्दर्पचिन्तां
रसजलनिधिमग्ना ध्यानलग्ना मृगाक्षी ॥ ९ ॥

---

श्रीजयदेवेति । श्रीजयदेवकवेरिदमुदितं रसिकजनं अतिमुदितं हृष्टतरं तनुताम् । अथवा,–रसिकजने मुदितं हर्षं तनुताम् ॥ ८ ॥ तथा च सङ्गीतराजे–'मालवीयः स्मृतो गौडो रागस्तालोऽद्भुतालकः । शृङ्गारो विप्रलम्भाख्यो रसो देवादिवर्णनम् । पदसंततितत्स्तेनाः पाटाः स्वरसमुच्चयः ॥ ततः पद्यानि यत्र स्युर्लयमध्यममानतः । स प्रबन्धवरो ज्ञेयो धन्यवैकुण्ठकुङ्कुमः ॥' इति धन्यवैकुण्ठकुङ्कुमनामा द्वादशः प्रबन्धः । शठो नायकः । गूढविप्रियकृच्छठः । चिन्तापरवशा वासकसज्जा नायिका । तल्लक्षणं—'केलीगृहमथात्मानं मण्डयत्येष्यति प्रिये । सखी दूती······समासि समगादिति' (?) ॥ ८ ॥ इदानीं तस्यास्तदेकपरत्वमाह—विपुलेति । हे कितव धूर्त ! सा मृगाक्षी तव अमन्दकन्दर्पचिन्तामतिशयितकामचिन्तां कृत्वा विधाय ध्यानलग्ना सती रसजलनिधिमग्ना शृङ्गाररसागरे लीना । किंभूता सा ? विपुला महती रोमाञ्चपङ्क्तिर्यस्याः सा । अपि किंभूता ? स्फीतसीत्कारं प्रवृद्धसीत्कारं यथा स्यात्तथा । अन्तः अर्थात् विरहेणैव जनिताभ्यां जडिमकाकुभ्यां व्याकुलं यथा स्यात्तथा व्याहरन्ती भाषमाणा । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति मालिनी

---

सञ्जिताहरवाख्या' इति ॥ ७ ॥ श्रीजयदेवेति । श्रीजयदेवकवेरिदमुदितं कथितम् । रसिकजनं शृङ्गाररसास्वादपुरःसरभगवद्भक्तिरूपरसास्वादग्राहिणमतिमुदितमतिशयेनानन्दितं तनुतां विस्तारयतु ॥ ८ ॥ विपुलेति ।······इत्यादिकन्दर्पचिन्तां विधाय तथापि त्वं चेन्न मिलसि तदा तव ध्यानमेवाचरतीत्यर्थः । कीदृशी ? विपुला प्रचुरा पुलकपालिः रोमाञ्चपङ्क्तिर्यस्याः । ध्यानकल्पितत्वत्करस्पर्शोद्गतरोमाञ्चवतीत्यर्थः । किं कुर्वती ? काकुव्याकुलं यथा स्यात्काका ध्वनिविकारविशेषेण व्याकुलं यथा स्यादेवं व्याहरन्ती । ध्यानेनैव तव करं नीवीबन्धनोन्मोचनासक्तं परिकल्प्य कुट्टमिताख्यहावमाश्रिता 'मुञ्च माम्' इत्यादिनिषेधकं वाक्यं कथयन्तीति भावः । पुनः कथं यथा स्यात् ? स्फीतः प्रवृद्धः सीत्कारो यत्र एवं यथा स्यात् । ध्यानेनैव त्वद्दत्तनखक्षतादिकं परिकल्प्य सीत्कारं करोतीति भावः । पुनः कथं यथा स्यात् ? अन्तश्चित्ते जनितो जडिमा जाड्यं यत्रैवं यथा स्यात् । ध्यानकल्पितविलासबाह्यादिसमयस्तम्भाख्यः (स्तम्भाख्यः) सात्त्विको भवति । अन्यस्यापि जलनिधिमग्नस्यान्तर्जाड्यशीतवशात्सीत्कारो व्याकुलं तुच्छहर्षं यथा

---

पाठा०–१ 'जनितजडिमकाकुव्याकुलं' RP. २ "जलधिनिमग्ना' C.

अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि संचारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति ।
इत्याकल्पविकल्पतल्परचनासङ्कल्पलीलाशत-
व्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥ २ ॥

छन्दः । रसवदलंकारः ॥ २ ॥ इदानीं सा राधा ध्यानाद्विना त्वया सह रममाणापि साक्षात्त्वामलभमाना न कथंचिन्निर्वृतिमेष्यतीत्याह—अङ्गेष्विति। हे माधव ! एषा मत्सखी । एषेति एतत्पदप्रत्यक्षे व्यापाराद्बुद्धौ प्रत्यक्षीकृत्याह । एषा वरतनुरित्येवंक्रमेण आकल्पविकल्पतल्परचनासंकल्पलीलाशतव्यासक्तापि नेपथ्यवितर्ककिसलयशय्याविरचनस्वप्नाह्युचितविलासशतनेष्व्यासक्तापि सती त्वया विना निशां न नेष्यति निशां नेतुं न शक्ता भविष्यतीति । इतीति किम् ? तान्येव कानिचिदाह—अङ्गेषु अवयवेषु त्वच्चित्तापहारि आभरणं करोति । कथं ? बहुशः । बहुश इति अननुरूपपरित्यागेन त्वच्चित्तप्रीतिकरपरिग्रहो द्योत्यते । अपि च,—पत्रे वृक्षपत्रे पतत्रिपक्षेऽपि वा । 'अपि'शब्दात्तृणादिपरिस्पन्दो लभ्यते । तस्मिन्संचारिणि संचरणशीले त्वामेव प्राप्तं परिशङ्कते विचारयति । अत्र एवकारं विनापि 'पार्थो धनुर्धरः' इतिवत्सर्वाणि वाक्यानि सावधारणान्येवेति कृत्वा एवकाराक्षेपः । अपि च अवश्यमागमिष्यतीति कृत्वा शय्यां वितनुते । तत-

त्स्यादेवं भवतीति ध्वनिः । इयं च जडताख्या पञ्चम्यवस्था । तल्लक्षणं चोक्तं प्राक् । कुट्टमितलक्षणं **रसार्णवसुधाकरे**—'केशाधरादिग्रहणे मोदमानापि मानसे । दुःखितेव बहिः कुप्येद्यत्र कुट्टमितं तु तत्' इति । 'स्तम्भचेष्टा प्रतिध्वनिः' इति **श्रृङ्गारदीपिका** । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः ॥ २ ॥ पुनः कृष्णं त्वरयितुमाह—अङ्गेष्विति । हे कृष्ण ! त्वया नैका वरतनुः सुन्दरी रात्रिं न नेष्यति न प्रभातं प्रापयिष्यति । कीदृशी ? इति अनेन प्रकारेणाकल्पोऽलंकारः विकल्पस्त्वदागमनशङ्का, तल्पं शय्या, तद्रचना संकल्पस्त्वदीयसङ्गादिध्यानमित्यादिलीलाशतव्यासङ्गेऽपि त्वत्सङ्गाभिलाषिण्यास्तस्या न कुत्रापि मनो रमत इति भावः । अलंकारादिव्यासङ्गमेवाह—अङ्गेष्विति । अङ्गेष्वाभरणं करोतीति भावः । अनेनाकल्प उक्तः । अथ च बहुशो वारंवारं पत्रेऽपि संचारिणि पक्ष्यादौ चरणघातेन चलति सति त्वां प्राप्तमागतं परिशङ्कते । अनेन विकल्प उक्तः । अथ च,—शय्यां शयनीयं वितनुते विस्तारयति । अनेन तल्परचनोक्ता ।

**पाठा०**—१ 'व्यासङ्गेऽपि' RM. २ '°नैका' RM.

**टिप्प०**—1 ननु मया सह रमणं जातमेव; किमर्थं मम तत्र गमनम् ? चेदेवं रममाणापि साक्षात्त्वां विना वक्ष्यमाणव्यापारवत्यपि निशां नेतुं न समर्था भविष्यतीत्याह—दीपिका ।

किं विश्राम्यसि कृष्णभोगिभवने भाण्डीरभूमीरुहि
भ्रातर्यासि न दृष्टिगोचरमितः सानन्दनन्दास्पदम् ।

---

त्वामपश्यन्ती चिरं त्वामेव ध्यायति । शय्यां विरचय्य तेन सह यथात्रैव कामकेलयः कर्तव्या इति चिरं ध्यायति । अन्योऽपि यः कश्चिन्मानसव्यथाभिभूतो रजन्यतिवाहनेऽसमर्थः स तदतिवाहनार्थं कार्यान्तरव्यासक्त्या चेतो रमयति । शार्दूलविक्रीडितं वृत्तं, समुच्चयोऽलंकारः ॥ २ ॥ इदानीमाशीर्व्याजेन सर्गान्तमाविष्करोति—किमिति । गोविन्दस्य गिरो जयन्ति सर्वोत्कर्षेण वर्तन्ते । भावगर्भतया चतुर्वैदग्ध्यख्यापनेन सर्वोत्कृष्टत्वम् । तत्त्वेन च नमस्कार्यत्वम् । किंभूता गिरो वाचः ? सायमतिथिप्राशस्त्य-

---

अथ च,-चिरं बहुकालं व्याप्य त्वां ध्यायति चिन्तयति । अनेन संकल्प उक्तः । तथा च तवागमनप्रत्याशया एतैर्व्यापारैः संप्रति कालं नयति । यदि च सर्वथा त्वया न गन्तव्यं तदा त्वत्सङ्गं प्रति निराशा सती रात्रिं नेतुं न शक्ष्यतीति भावः । अल्पतास्त्यत्र हावो वर्णितः । तदुक्तम्—'अल्पता सा तु कथिता प्रियस्यागमने सति । विरहक्षोभयोत्कृष्टरत्नवैभ्रममलंकृतिः' इति । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । 'तर्को विकल्पः शङ्का च' इति च । 'तल्पं च शयनीये स्यात्तल्पमट्टकलत्रयोः' इति विश्वः । 'संकल्पः कर्म मानसम्' इत्यमरः ॥ २ ॥ सर्गान्ते जयदेवः प्रमाशास्ते—गोविन्दस्येति । गोविन्दस्य गिरो वाण्यो जयन्ति सर्वोत्कर्षेण वर्तन्ते । कीदृशाः ? सायमतिथिप्राशस्त्यगर्भाः सायंकाले येऽतिथयस्तेषां प्राशस्त्यं स्वागतादिप्रशंसा 'धन्योऽयमतिथिर्गृहिणां पुण्योत्पादकः' इत्येवंरूपा । वस्तुतस्तु प्रियाभिसारसंकेतज्ञापनादयं बहुसुखप्रदातेति गर्भेऽभ्यन्तरे यासां ताः । प्रशंसयाऽभ्यन्तरेऽभिप्रायविशेषयुक्ता इत्यर्थः । व्याजोक्तिरलंकृतिः । कीदृशस्य गोविन्दस्य ? नन्दान्तिके पितुः समीपे तादृक्संकेतसूचनारूपं अध्वगमुखाच्छ्रुतं श्रीराधाया वचनं गोपतः संगोपनं कुर्वतः । किं तत् ? हे भ्रातः पथिक ! 'भ्रातः' इति कोमलामन्त्रणे, भाण्डीरभूमीरुहि वटवृक्षे किं विश्राम्यसि ? विश्रामं मा कृथाः । तत्र हेतुः—कृष्णभोगिभवनेति । कृष्णश्चासौ भोगी च कृष्णभोगी, तस्य भवने कालसर्पवासे । पक्षे—शृंगारिणः श्यामसुन्दरस्य विलासगृहे । पक्षद्वये नेह स्थेयमिति चेति 'भ्रातृ'पदोपादानम् । श्लेषालंकारश्च । 'कृष्णः केशवकृष्णयोः' इति धरणिः । 'भोगी कामुकसर्पयोः इति विश्वः । तर्हि क्व यामि इत्यत आह—इतो वटात् सानन्दं आनन्दसहितं नन्दगृहं न यासि, अपि तु याहि इति शून्यसर्पावासपरित्यागेन श्रीमद्गृहातिथ्येन च निर्वृतो भविष्यसीत्यर्थः । तद्दूरे भविष्यतीत्यत आह—दृष्टिगोचरमिति । आसन्नमेव पथिकवचनेन संकेतसूचनात् श्रीकृष्णस्य

राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतो
गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ ३ ॥

इति श्रीगीतगोविन्दे वासकसज्जावर्णने धन्यवैकुण्ठो
नाम पञ्चः सर्गः ॥ ६ ॥

---

गर्भाः । सायंकालेऽतिथयः सायमतिथयः तेषां प्राशस्त्यं स्वागतादिसंभारेण प्रशंसा, तद्गर्भे यासां ताः । कथा–किंविशिष्टस्य गोविन्दस्य ? नन्दान्तिके नन्दसमीपे तत्तादृक्संकेतसूचनारूपमध्वगमुखाद्विःसृतं राधाया वचनं गोपतः गोपायितुः । गां पालयतीति गोपः, गोपायतेः पचाद्यच् । 'आदायः–' इति तल्लोपे सार्वविभक्तिकस्तसिः । तस्य गोपतः । अत्र पितुः सङ्केताशङ्का मा प्रापदिति गोपने तात्पर्यम् । अत्र तदपह्नवादपह्नुतिरलंकारः । प्रशंसाछलना व्याजोक्तिरपि । पितुः समीपे तादृग्वचो लज्जावहमिति तदपाकरणार्थं अप्रस्तुतप्रशंसापि । तदिति किम् ? हे भ्रातः पथिक ! भाण्डीरभूमीरुहि इतः वटवृक्षे । किं विश्राम्यसि ? अत्र विश्रामं मा कृथाः । कुत इति हेतुगर्भविशेषणमाह । किंविशिष्टे वृक्षे ? कृष्णभोगिभवने । कृष्णश्चासौ भोगी च कृष्णभोगी, तस्य भवनं तस्मिन् । कृष्णसर्पावासे इत्यर्थः । अत्र 'भ्रातृ'पदेन भ्रातृत्वम् । तेन च मत्सङ्केतस्थानमेतदिति व्यज्यते । पक्षे,–कृष्णश्चासौ भोगी शृङ्गारी च तस्य निवासः । अत्रार्थद्वया-श्लेषिकृष्णशब्देन श्लेषोऽलंकारः । तर्हि किं कुर्विस्याशङ्क्याह–इतो वटात्सानन्द-नन्दास्पदं न यासि अपि तु याहि इति लोडर्थलक्षणो लट् । सानन्दमृद्धिमच्च तन्नन्दास्पदं चेति । अनेनात्र अन्यपरित्यागेन यत्प्रार्थ्यते तत्सुलभमिति ।

---

तादृग्भावप्रकटनेन श्रीराधाया वचांसि जयन्तीत्यपि ध्वनितम् । अत्र चातुर्यादि-गुणविशिष्टौ राधामोहनावालम्बनौ, स्वयं दूती नायिका, वटाद्युद्दीपनविभावाः । एवं रसराट् शृंगारो निरूपितः ॥ ३ ॥

---

पाठा०–१ 'नन्दन्ति केचिन्मुकुन्दौ'' ड. २ 'सायमतिथेः सुस्निग्धगर्भा' ठ.

---

टिप्प०–1 केचित्तु श्रीमद्वृन्दावनैश्वर्या विप्रलंभमसहमानाः पूर्वसर्गान्ते संयोगमनु वर्णयन्ति; अत्र सप्तमे च वैचित्र्यविप्रलंभाख्यमद्भुतरसविवर्तं निरूपयन्ति; तत्रैवं संगतिः—पूर्वसर्गे स्वयं दौत्येन संयोगः, अभिमानपरया प्रेमविक्षेपः, तत्र मत्वानन्त्या दूत्या विषादव्यञ्जनेन सीवमेव रमितमन्यामुद्दिश्य प्रबन्धद्वयेन श्रीराधाया निरूपितम् । सर्गान्ते मन्यायुतं निर्णीय तत्संगमचिह्नैरेव नागरमौलेः तस्याग्रे प्राह नीकनिचो-लेत्यादि, ततोऽष्टम वद्व्यमावमदविह्वल्या नागर्या कृतानुनयविनीतस्यापि 'याहि याहि' इति तिरस्कारः, तदग्रे सुगम एव । तदीयानां परितोषायैवेदं व्याकृतं, तत्क्षन्तव्यम्–इति दीपिका ।

तर्हि दूरे भविष्यतीत्याशङ्क्याह–दृष्टिगोचरं आसन्नमेव । सानन्देति पथिकविशेषणं वा । सांप्रतमानन्देऽपि सर्पदंशादकुशलतामाप्स्यसीति औचितीमाह । अत्र कृष्णवटाद्यैरालम्बनैर्विभावैस्तद्पाकृतिनिषेधाभिव्यक्तो रतिस्थायी विप्रलम्भाख्यः शृङ्गारो रसः । आशीरुत्तरे अलंकृती ॥

निसर्गचित्रोज्ज्वलसूक्तिसर्गं व्याचष्ट षष्ठं रसिकप्रियायाः ।
सर्गं नृपग्रामकिरीटरत्नं श्रीकुम्भकर्णस्तुणितस्मरोऽत्र ॥

इति श्रीमहाराजाधिराजाभिनवभरतश्रीकुम्भकर्णविरचिते श्रीकुम्भस्वामिमन्दरस्थादरे गीतगोविन्दविवरणे वासकसज्जावर्णने धन्यवैकुण्ठो नाम षष्ठः सर्गः ॥ ६ ॥

---

गुणेषु ये दोषदृशः परेषां ब्रूमः स्वदोषावरणाय किं तान् ।
स्वतः पिधास्यन्ति ममात्र दोषान्सन्तस्ततस्तानपि किं ब्रवीमि ॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां गीतगोविन्दटीकायां षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ७

– नागरनारायणः –

अत्रान्तरे च कुलटाकुलवर्त्मपात-
संजातपातक इव स्फुटलाञ्छनश्रीः ।
वृन्दावनान्तरमदीपयदंशुजालै-
र्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः ॥ १ ॥

प्रसरति शशधरबिम्बे विहितविलम्बे च माधवे विधुरा ।
विरचितविविधविलापं सा परितापं चकारोच्चैः ॥ २ ॥

---

नृपः कुम्भकर्णः श्रुतं वाधि धत्ते
मनोऽधीश्वरासेवने सन्निधत्ते ।
हृदीशं परं वासुदेवं निधत्ते
वरं गीतगोविन्दगानं विधत्ते ॥

इदानीं मानिनीमानखण्डनाखण्डमण्डलं चन्द्रोदयं वर्णयन्नाह—अत्रान्तर इति । अत्रान्तरे एतस्मिन्नवसरे इन्दुर्वृन्दावनान्तरमंशुदीपैरदीपयत् प्रकाशितवान् । किंविशिष्टः ? स्फुटलाञ्छनश्रीः स्फुटकलङ्कशोभः । उत्प्रेक्षते—कुलटाकुलवर्त्मघातसंजातपातक इव । अन्योऽपि यः कश्चन यस्य कस्यचन मार्गघातं करोति स कलङ्की भवत्येव । किंभूत इन्दुः ? दिक्सुन्दरीवदनश्रीखण्डतिलक इव । वसन्ततिलका । अत्र रूपकोत्प्रेक्षे अलंकृती ॥ १ ॥ इदानीं विप्रलब्धायास्तस्या विधुरत्वं कथयति—प्रसरतीति । सा राधा उच्चैः परितापं चकार खेदं चकार । कथं यथा भवति ? विरचितविविधालापं यथा स्यात्तथा । किंभूता सा ? अतिशयविधुरा । क सति ? शशधरबिम्बे प्रसरति उद्गच्छति सति । माधवे च कृतविलम्बे सति । 'प्रेष्य दूतीं स्वयं दत्त्वा निकेतं

---

अत्रान्तर इति । अत्रान्तरेऽस्मिन्नवसरे । इन्दुश्चन्द्रोऽंशुजालैः किरणसमूहैर्वृन्दावनान्तरं वृन्दावनमध्यमदीपयत्प्रकाशितवान् । दिक् पूर्वा, दिक्सैव सुन्दरी कामिनी तस्या वदनस्य मुखस्य चन्दनबिन्दुर्मण्डलाकारचन्दनतिलकम् । अत्र पूर्णचन्द्रो वर्ण्यत्वेन बोध्यः; अन्यचन्द्रे चन्दनबिन्दुत्वादृश्याभावात् । पुनः कीदृशः ? स्फुटीभूता प्रकटिता लाञ्छनस्य कलङ्कस्य श्रीः शोभा यत्र तादृशः । कुलटाकुलस्य व्यभिचारिणीसमूहस्य यो वर्त्मपातः संकेतगमनमार्गप्रतिरोधस्तेन संजातं पातकं यस्य सः । अपरस्यापि कृतपापस्य कलङ्कः स्फुटीभवतीति ध्वनिः ॥ १ ॥ प्रसरतीति । शशधरबिम्बे चन्द्रबिम्बे प्रसरति सति । माधवे कृष्णे विहितविलम्बे कृतकालक्षेपे सति । विधुरा दुःखिता राधोच्चैः परितापं चकार ।

---

पाठा०–१ "वर्त्मपात°" D., S., P., G. RM. २ "विविधालापं" RP., D.

मालवरागयतितालाभ्यां गीयते । प्रबन्धः ॥ १३ ॥

कथितसमयेऽपि हरिरहह न ययौ वनं
मम विफलमिदममलरूपमपि यौवनम् ।
यामि हे कमिह शरणं सखीजनवचनवञ्चिता ॥ ध्रुवपदम् ॥ १ ॥
यदनुगमनाय निशि गहनमपि शीलितं
तेन मम हृदयमिदमसमशरकीलितम् ॥ यामि हे० ॥ २ ॥

---

नागरः प्रियः । यस्यास्तेन विना दुःखा विप्रलब्धा तु सा मता' । आर्या ॥ २ ॥ पूर्वं ध्रुवः । यामीति । हे सखि ! इह अस्मिन्नवसरे कं शरणं यामि ? किंभूताहम् ? सखीति । सख्य एव जन इतरजनवत् तद्वचनेन 'त्वमत्र संकेतस्थाने तिष्ठ तमहमानयामि' इति कथनेनात्रैव स्थिता या विप्रलब्धा । इति ध्रुवः ॥ अथ पदानि–कथितेति । आत्मगतं कथयति–मम इदं यौवनं विफलम् । किंभूतम् ? अमलरूपमपि । अथवा,–यौवनं रूपं च द्वयमपि निष्फलम् । अत्र 'अपि'शब्दो भूषणकलादीनामनुक्तानां समुच्चयार्थः । अत्र कारणमाह—'अहह' इति कष्टे । हरिः कथितसमयेऽपि संकेतितकालेऽपि वनं न ययौ न प्राप्तवान् । यतः 'प्रियेषु सौभाग्यफला हि योषितः' ॥ १ ॥ अपि च,–यदिति । यस्माद्धेतोर्निशि रात्रौ अनुगमनाय । अर्थात् हरेरनुगमनाय । गहनमपि, 'अपि'शब्देन यत्कथमपि न क्रियते

---

विरचितो विविधो नानाविधो विलापो यत्रैवं यथा स्यात् । पूर्वं तदागमनशङ्काप्यासीत् । चन्द्र उदितेऽभिसारिणां कुत्र संचार इति तदागमनं प्रति निराशयाधिकं विललापेति भावः ॥ २ ॥ विविधविलापमेव गीतेन कथयति—कथितेति । गीतस्यास्य गौडमालवरागः । प्रतिमण्ठतालः । गीतार्थस्तु–इह विपिने कं जनं यामि शरणम् ? यद्वा,–कं जलमग्निं यमं च शरणं यामि । तेन विना जलप्रवेशमग्निप्रवेशं यमगृहं यामीत्यर्थः । कीदृशी ? सखीजनानां वचनेन वञ्चिता प्रतारिता । मया हरिरानीयत एवेति सखीजनेन प्रतारितेत्यर्थः । सख्योऽप्येवं प्रतारिकास्तदा कोऽन्यो विश्वासपात्रं भवेदिति भावः । 'को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च । पावके च मयूरे च सुखशीर्षजलेषु कम् ॥' इति विश्वः । 'शरणं गृहरक्षित्रोः' इत्यमरः । सखीवचनमेवाह—कथितेति । कथित-

---

पाठा०–१ 'गौडीमालवरागे प्रतिमण्ठताले' RM., S., P. २ 'ललितसमये'. ३ '°मेतदनुरूपमिति'.

---

टिप्प०–1 भ्रमलक्षणं प्रोक्तम्—'भूषणाभूषणाभ्यां हि चमत्कारेण नेत्रयोः । परस्परस्पृहासुरमनलं वामकीर्तितम् ॥' इति बाल० । 2 यौवनलक्षणम्—'नितम्बौ विपुलौ मध्यं कृशमङ्गं वरत्वचि । पीनौ कुचावूरुयुगं रंभाभं पूर्णयौवने ॥' इति दीपिका ।

मम मरणमेव वरमिति वितथकेतना ।
किमिति विषहामि विरहानलमचेतना ॥ यामि हे० ॥ ३ ॥
मामहह विधुरयति मधुरमधुयामिनी ।
कापि हरिमनुभवति कृतसुकृतकामिनी ॥ यामि हे० ॥ ४ ॥

---

तदपि शीलितमनुभूतम् । तेन कारणेन मम इदं हृदयमसमशरकीलितं वर्तते । अथवा,-यदित्यव्ययं सर्वनामप्रतिरूपकं यत्रेत्यर्थे । यस्यानुसरणाय एवं कृतं तेन हेतुना तमेव हेतुं कृत्वा मम हृदयमसमशरकीलितं वर्तते । अथवा,-यदिति यद्वचनेनाव्यवहितमेव सखीवचनं परामृश्यते । यद्वचनानुसरणाय गहनं शीलितं तेन तद्वचनहेतुना मम हृदयमसमशरपीडितं । वर्तते । अत्र यच्छब्दस्याप्राधान्यात्समासेन निर्गुणत्वाच्च न प्रधानत्वेनान्वयः संभवी, विवक्षितार्थालमर्पकत्वात् ॥ २ ॥ अपि च,-ममेति । इहाचेतनाहं चैतन्यरहिता विह्वलत्वमाप्ता विरहानलं विषहामि । कथमिति विषहामीति । धात्वन्तरमप्यस्तीत्यवधार्यताम् । तदसद्भावे भ्रान्तिर्मास्तु । तत्संदेहनिराकरणार्थं कामधेनावीक्ष्यताम् । अत्र विषहा किं शक्यादित्यस्य (?) दिवादित्वचुरादित्वभ्वादित्वपरस्मैपदिनो न सन्ति । किंविशिष्टा अहम् ? इतीव हेतोः वितथकेतना वितथं केतनमावासो यस्याः । प्रियशून्यत्वात् । अथवा,-वितथं निमन्त्रणं यस्याः सा । सखीमात्रवचनेन हि तामनुसरणेन वा ईदृशस्य साहसस्यानुपपत्तात् । अथवा,-वितथं केतनं देहो यस्याः प्रियाप्राप्तेः ॥ एवं सति मम मरणमेव वरं, न देहधारणम् ॥ ३ ॥ अपि च,-मामहहेति । मधुरमधुयामिनी कोमला सरसा वसन्तरात्रिर्मां विधुरं करोति । अपि च,-कापि कृतसुकृतकामिनी कृपया हरिमनुभवति । एता-

---

समयेऽपि सकथमे स्वयमेव कथितो यः समयः कालोऽस्मिन्नवसरे मया सङ्केतस्थलमागन्तव्यमिति । यद्वा,-सख्या मदग्रे यः समयः कथितस्तदपि वनं सङ्केतनिकुञ्जं न ययौ न गतवान् । इदमारूढमेव मे यौवनं तारुण्यममलरूपमपि निर्मलसौन्दर्यमपि विफलम् । पूर्वं तदागमनप्रत्याशया स्थितं, संप्रत्यवधिलङ्घने निरवधिदुःखाहं भोगेऽसमर्था शरीरं त्यक्ष्याम्येव, मम यौवनं यास्यतीति भावः ॥ १ ॥ यस्य कृष्णस्यानुगमनायानुसरणाय निशि रात्रौ गहनमपि शीलितं तेन कृष्णेन निमित्तभूतेन मम हृदयमसमशरेण कामशरेण कीलितं विद्धम् ॥ २ ॥ मम मरणमेव वरमुत्कृष्टम् । तत्र हेतुमाह—इह वनेऽचेतना समूर्च्छा । यद्वा,-अचेतना मूर्च्छया ज्ञानरहिता । यद्वा,-अः कृष्णस्तत्र चेतना बुद्धिर्यस्यास्तादृशी । विरहानलं विरहाग्निं किमिति विषहामि सहे । तथा च-इह मम दुःखस्य कोऽपि ज्ञातापि न, इत्यरण्यरुदितं किमित्याचरा-

---

पाठा०-१ "°मतिवितथ' RM., S., P., G. २ 'किमिह वि°' RP., D. ३ 'यामि हे कमिह' G.; 'मामिह' P.

अहह कलयामि वलयादिमणिभूषणम् ।
हरिविरहदहनवहनेन बहुदूषणम् ॥ यामि हे० ॥ ५ ॥
कुसुमसुकुमारतनुमतनुशरलीलया ।
स्रगपि हृदि हन्ति मामतिविषमशीलया ॥ यामि हे० ॥ ६ ॥
अहमिह निवसामि नगणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा ॥ यामि हे० ॥ ७ ॥

---

यताऽहं मन्दभाग्या यतत्प्राप्त्यर्थं मया प्रयत्नः कृतः, अन्यया च हरिरत्सुखमनुभूयते ॥ ४ ॥ अपि च,–अहहेति । 'अहह' इति खेदे । हरिविरहदहनवहनेन वलयादिकं मणिभूषणं बहुदूषणं कलयामि । यतः 'स्त्रीणां प्रियालोकफलो हि वेषः' इति ॥ ५ ॥ अपि च,–कुसुमेति । हे कान्त ! हृदि वर्तमाना स्रगपि मामतनुशरलीलया कामबाणसाधर्म्येन हन्ति । मया पुष्पस्रगिति धार्यते; तस्याश्च स्मरशरमयत्वात् हननस्वभावः । अत एवातिविषमशरलीलया । अति विपरीयते यस्मिंस्तदतिविषमं तच्छीलं यस्याः सा तथा । अथवा,–मां हृदि मनसि हन्ति, मनो विध्यतीत्यर्थः । अत एव विषमशीलया अन्यशरेभ्यो विषमस्वभावया । तथा च 'अपूर्वेयं धनुर्विद्या मन्मथस्य महात्मनः । शरीरमक्षतं कृत्वा भिनत्त्यन्तर्गतं मनः ॥' किंभूतां ? कुसुमादपि सुकुमारतनुम् । यो हि यस्माद्धीनबलः स तं सुखेन हन्ति ॥ ६ ॥ अपि च,–अहमिति । हे कान्त ! अहमिह कुञ्जे नगणितवनवेतसा निवसामि

---

मीति भावः । कीदृश्यहम् ? अतिवितथकेतनातिशयेन वितथं मिथ्याभूतं केतनं गृहं यस्यास्तादृशी । यद्वा,–अतिवितथं केतनं शरीरं यस्याः सा । तथा च–निरुपमसौन्दर्यास्पदमपीदं शरीरं तेन विना विफलमित्यर्थः । अतिवितथकेतनमिमं स्वपतिं विहायान्यपुरुषमभिसृतवतीत्येवंरूपलाञ्छनं यस्यास्तादृशी । तस्मिन्मिलिते लक्षणमपीदं न मे दुःखाय स्यात् । संप्रति तु मृषालक्षणमात्रं मे दुःखदमिति भावः । 'केतनं लाञ्छने कार्ये गृहे चोपनिमन्त्रणे ।' इति विश्वः । 'गह मर्षणे' इति चुराद्यन्तर्गणयुजादौ परस्मैपदी विकल्पेन णिजन्तः पठितः । तस्य णिचोऽभावे विषहामीति प्रयोगः ॥ ३ ॥ मामित्यादि । अहहेति खेदे । इयं मधुरा मनोहरा मधुयामिनी वसन्तरात्रिर्मां विधुरयति विकलयति । कापि कृतं पुण्यं यया एतादृशी कामिनी हरिं कृष्णमनुभवति । केलिसमये पश्यति । 'विधुरं स्यात्प्रविश्लेषे विधुरो विकलेऽन्यवत्' इति विश्वः । 'मधुरं सरसे ज्ञेयं स्वाद्वन्यपि मनोहरे' इति धरणिः । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः ॥ ४ ॥ अहहेति । अहहेत्यद्भुते । वलयादिमणिभूषणं कटकादिमणिखचितमलंकारं हरिविरहदहनवहनेन कृष्णविरहाग्निधारणेन बहुदूषणमनेकदोषं पश्यामि । स्त्रीणां प्रियाण्याभरणानि, तान्यप्यधुना भारभूतानीत्यद्भुतमिति भावः ॥ ५ ॥ कुसुमेति । स्रगपि पुष्पमालापि । अतनुशरलीलया अतनुः कामस्तस्य ये शरास्तेषां

हरिचरणशरणजयदेवकविभारती ।
वसतु हृदि युवतिरिव कोमलकलावती ॥ यामि हे० ॥ ८ ॥

तत्किं कामपि कामिनीमभिसृतः किं वा कलाकेलिभि-
र्बद्धो बन्धुभिरन्धकारिणि वनाभ्यर्णे किमुद्भ्राम्यति ।

---

न गणितानि वनानि वेतसाश्च यया । 'वनवेतस'ग्रहणमन्येषामपि वनस्थविषमाणामुपलक्षणार्थम् । तेन दुर्लङ्घ्यमप्युल्लङ्घ्य न चिन्तामहमागता, परं मधुसूदनस्तु मां चेतसापि न स्मरति । अतीव गुढाभिनिवेशः संभोगपराङ्मुखो भवतीति व्यङ्ग्यम् । नगणितेत्यादौ निषेधार्थकनकारेण समासः । 'अनुनीतश्च नगः स नैकधा' इतिवत् । शेषविवक्षाभावान्मां स्मरतीत्यत्र न षष्ठी ॥ ७ ॥ अपि च,–हरिचरणेति । हरिचरणौ शरणं गृहं यस्याः, सा चासौ जयदेवकविभारती च । अथवा,- हरिचरणेति जयदेवविशेषणम् । तत्र शरणं रक्षितृ । हृदि वसतु । अर्थाद्भक्तानाम् । किंलक्षणा ? कोमला कलावती च । तथा च सङ्गीतराजे—'रागः स्यात्स्थानगौडाख्यस्तालो वर्णयती रसः । शृङ्गारो विप्रलम्भाख्यः प्रमदा मदनाकुला ॥ पञ्चनामावलेः पादा गुम्फिता यत्र गीतके । स्निग्धमधुसूदनोऽयं रासावलयनामकः ॥ प्रबन्धः पृथिवीभर्त्रा प्रबद्धः प्रीतये हरेः ॥' इति स्निग्धमधुसूदनरासावलयनामा प्रबन्धस्त्रयोदशः ॥ ८ ॥ राधा तदनागमने स्वगतान्हेतून्वितर्कयति—तत्किमिति । वयस्यात्कान्तः कामुकः सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः मनोहरवेतसलतागृहेऽपि

---

लीलया मां हृदि हन्ति ताडयति । कामबाणा अपि पुष्पाण्येव स्रगपि पुष्पमयीति तल्लीलया हन्तीति भावः । कीदृश्या अतनुशरलीलया ? अतिविषमशीलया अतिशयेन विषमं शीलं स्वभावो यस्यास्तादृश्या । अन्यबाणा हि क्षिप्ताः सन्तः क्षतमुत्पाद्य घ्नन्ति । कामबाणास्तु हृदि संगताः क्षतमकृत्वैवान्तरे घ्नन्तीति विषमशीलयेति भावः । कीदृशीं माम् ? कुसुमसुकुमारतनुं पुष्पकोमलाङ्गीम् ॥ ६ ॥ अहमिति । अहमिह निकुञ्जे वसामि । कीदृशी ? न गणिता न संभाविता वनवेतसा विपिनस्य वेत्रलता यया सा । मधुसूदनः कृष्णो मां चेतसा न स्मरति । अपि च चेतोमात्रसाध्यं स्वया स्वयं स्मरणमपि न करोति, अन्यस्य का वार्तेति 'चेतसा' इत्यनेन ध्वनितम्; अन्यथा स्मरणस्य चेतोजन्यत्वेन चेतसेत्यस्य वैयर्थ्यापत्तेः । नगणितेत्यत्र नशब्देन निषेधवाचकेन समासः, न तु नञ्शब्देन । नञा सह समासेऽगणितेति स्यात् । यद्वा,–नण् विरथालने । तथा च गणिताः प्रतिलतं कृष्णमन्वेषयन्त्या परिसंख्याता वनवेतसा यया सा । यद्वा,– अहमिह वने किं नातिवसामि ? अपि तु निवसाम्येव । शेषं पूर्ववत् । विप्रलब्धा चेयं नायिका । तल्लक्षणम्—'कृत्वा संकेतमप्राप्ते दयिते व्यथिता तु या । विप्रलब्धेति सा प्रोक्ता बुधैरस्यास्तु विक्रियाः । निर्वेदचिन्ताखेदास्तु मूर्च्छानिःश्वसितादयः' इति ॥ ७ ॥ हरिचरणेति । हरेश्चरणौ शरणं यस्याः

---

पाठा०–१ 'किंवाऽबलाकेलि°' S. २ 'बन्धुभिरन्धकारविपिनेऽभ्यर्णे' P.

कान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः

सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः ॥ १ ॥

अथागतां माधवमन्तरेण सखीमियं [1]वीक्ष्य विषादमूकाम् ।

विशङ्कमाना रमितं कयापि जनार्दनं दृष्टवदेतदाह ॥ २ ॥

---

यत्रायासीत्तस्मादहमिति वितर्कयामि । तमेव वितर्कमाह—कामपीति । कांचित्कामिनीमभिसृतः किमन्यकामिन्यर्थं गतः ? अथवा,–मामत्र संकेतस्थाने विहाय कथमन्यत्र विहरिष्यतीत्याशङ्क्याह—कलाकेलिभिर्बन्धुभिर्बद्धः किम् । कलेति । विलासक्रीडापरैः । मामभ्युपगच्छन्नन्तरापि क्रीडावशो जातः । अथवा,–मां विहाय अन्यत्करोतीति विचारेणाप्यलम् । किंतु मामेवाभिसरन् मामलभमान इतस्ततः सान्द्रेऽन्धकारे वनसमीपे परिभ्राम्यति । अथवा,– तदपि न घटते । अथवा,–क्लान्तमनाः सन् पथि मार्गे प्रस्थातुमेवाक्षम इति सुस्थितम् । शार्दूलविक्रीडितं वृत्तम् । संशयोऽलंकारः ॥ २ ॥ अथ सखीवि- षादानुमितं कृष्णस्यान्यासक्तत्वं वितर्कयन्नाह—अथेति । इयं राधा अथान-

---

तादृशी जयदेवकविरस्य भारती वाणी हृदि हृदये वसतु । अर्थात्कृष्णस्य भक्ता- नाम् । कीदृशी भारती ? कोमलाऽनिष्ठुरवर्णा कलावती विचित्रकलायुक्ता । केव ? युवतिरिव । कीदृशी ? कोमला मृद्वङ्गी । कलावती चतुःषष्टिकलाकुशला ॥ ८ ॥ तत्किमिति । कान्तः कृष्णः संकेतीकृतो मञ्जुर्मनोहरो वञ्जुललताकुञ्जो वेत्रलता- गृहं तत्रापि यत् यतो हेतोर्नागतस्तत्किमपि कामिनीं किमभिसृतः ? अन्यस्याः कस्याश्चिदभिसारभूमिं प्राप्त इति किमु इत्यर्थः । यद्वा,–बन्धुभिर्गोपभूमिं प्राप्तः कलाकेलिभिः कौतुककलाभिर्बद्धो नियन्त्रितः किमु ? यद्वा,–अन्धकारिणि घन- तरतरुच्छायायां निबिडान्धकारे वनोपान्ते संकेतीकृतविपिनसमीपे संकेतस्थ- लमप्राप्य भ्राम्यति किमु परिभ्रमणं करोति किम् ? संशयान्तरमाह—क्लान्तमना इति । प्रकृतकिमुशब्दोऽत्रापि संबध्यते । तथा च–क्लान्तं मद्विश्लेषे दुःखे- नोपतप्तं मनो यस्य एतादृशः । प्रस्थातुमक्षमः । ततश्चलितुमेवासमर्थः इति किमु इत्यर्थः । उत्का चेयं नायिका—( शृं. ति. १।७५ ) 'उत्का भवति सा यस्याः संकेतं नागतः प्रियः । तस्यानागमने हेतुं चिन्तयत्याकुलं यथा ॥' इति ॥ १ ॥ अथेति । अथानन्तरमियं राधा एतद्वक्ष्यमाणं दृष्टवदाह उक्तवती । यथा कस्य चिद्वृत्तान्तः केनचित्साक्षाद्दृष्टः कथयति तद्वदित्यर्थः । किं कृत्वा ? सखीं माधवमन्तरेण कृष्णं विनाऽऽगतां वीक्ष्य दृष्ट्वा । अत एव विषादेन मूकां मौनाम् । कीदृशी ? जनार्दनं कृष्णं कयाचिन्नायिकया रमितं शङ्कमाना तर्कयन्ती ।

---

पाठा०–1 'प्राप्य' B., S.

---

टिप्प०–1 संशयाक्षेपालंकारोऽयम्; तदुक्तं दण्डिना (का० २।१६३–४) 'किमयं शरदम्भोदः किं वा हंसकदम्बकम् । रुतं नूपुरसंवादि श्रूयते तन्न तोयदः ॥ इत्येष संशयाक्षेपसंशयो यन्निवर्त्यते । धर्मेण हंसमुलभेनास्पृष्टघनजातिना ॥' इति दीपिका ।

वसन्तरागयतितालाभ्यां गीयते । प्रबन्धः ॥ १४ ॥

स्मरसमरोचितविरचितवेशा
गलितकुसुमदरविलुलितकेशा
कापि मधुरिपुणा विलसति युवतिरधिकगुणा ॥ ध्रुवपदम् ॥
हरिपरिरम्भणवलितविकारा ।
कुचकलशोपरि तरलितहारा ॥ कापि० ॥ २ ॥

---

न्तरं कृष्णं विना आगतां सखीं वीक्ष्य दृष्ट्वा तत्प्रत्यक्षीकृतमिव यथा स्यात्तथा तद्वक्ष्यमाणमाह-किंभूतां सखीम् ? विषादमूकामकृतकार्यत्वाद्विषण्णतया प्रतिवक्तुमक्षमाम् । किंभूता राधा ? जनार्दनं कयापि कान्तया रमितं विशङ्कमाना । सखीविषादान्यथानुपपत्त्याऽन्यासङ्गो व्यज्यते । उपेन्द्रवज्रावृत्तम् ॥४॥ इदमेव प्रथयति-तत्र पूर्वं ध्रुवपदम् ॥ कापीति । सखि ! कापि युवतिः मधुरिपुणा सह विलसति । किंभूता ? अधिका गुणाः सौन्दर्यादयो यस्याः । अर्थान्मत्सकाशात् । मां विहाय यया रमत इति । 'मधुरिपुः' इत्यनेन तस्य माधुर्यानभिज्ञत्वं द्योत्यते । तेन 'अधिकगुणा' इत्यनेन मत्तो हीनेति व्यज्यते ॥ अथ पदानि । स्मरेति । किंभूता कापि ? स्मरसमरोचितो विरचितो वेषः प्रसाधनं यया सा । स्मरसमरः कामकेलिः । अथवा,-स्मरोपलक्षितः समर इव समरः । अपि किंभूता ? रतिविमर्दनेन विगलितपुष्पैरीषद्विलुलिताः केशा यस्याः सा । अनेनोकेनास्याः पुरुषायितत्वं व्यज्यते ॥ १ ॥ अपि च,-हरीति । पुनः

---

जनस्यार्दनस्वभावोऽयं, अतस्तस्य मम संतापकत्वमुचितमित्यभिप्रायेण 'जनार्दन' इत्युचित पदोपादानम् । तथा च जनानामर्दनस्वभावो यस्तस्य मम तापजनकत्वमुचितमेवेति भावः ॥ २ ॥ तदेव गीतेन कथयति—स्मरेति । गीतस्यास्य वसन्तरागः । एकताली तालः । गीतार्थस्तु—कापि युवतिर्मधुरिपुणा कृष्णेन विलसति रमते । अत एवाधिकगुणा अधिकः सौन्दर्यादिगुणो यस्याः सा । मत्संकेतागमनोत्सुकमपि कृष्णं गुणैरपहृत्य रमितवती । मत्तोऽप्यधिकगुणेति भावः । 'युवती विलसति' इत्यनेन कामिकर्तृकविलासाकथनाद्विपरीतरतमुक्तम् । कीदृशी ? स्मरसमरः कामसंग्रामः । सुरतमिति यावत् । तत्रोचितो योग्यो विरचितः कृतो वेश आभरणं यया सा । पुनः कीदृशी ? गलितः स्खलितः कुसुमभरो यस्यास्तादृशी । विलुलिताः कृष्णेन कचग्रहपूर्वकं चुम्बनादानेन स्रस्ताः केशा यस्याः सा । विपरीतरते च नायिकायाः केशग्रहणपूर्वकमेव चुम्बनं कार्यमित्युक्तं प्राक् । 'अस्त्रियां समरानीकरणाः' इत्यमरः । 'वेशो वेश्यागृहे प्रोक्तो नेपथ्ये गृहमात्रके ।' इति विश्वः ॥ १ ॥ पुनः कीदृशी ? हरीति । हरेः परिरम्भणेनालिङ्गनेन वलितो जातो विकारो रोमाञ्चादिर्यस्याः ।

---

पाठा०-१ "०रागे एकतालीताले" RM., S., P. २ 'कुसुमभरवि०' RM. ३ 'कापि चपला मधु०' P., O. ४ 'णचलित०' RM., S., P.

विचलदलककलितानन चन्द्रा ।
तदधरपानरभसकृततन्द्रा ॥ कापि० ॥ ३ ॥
चञ्चलकुण्डलदलितकपोला ।
मुखरितरसनजघनगतिलोला ॥ कापि० ॥ ४ ॥
दयितविलोकितलज्जितहसिता ।
बहुविधकूजितरतिरसरसिता ॥ कापि० ॥ ५ ॥

---

किंभूता? हरिपरिरम्भणेन चलितः संभक्तो विकारः कामोपलक्षितो मानसो भावो यस्याः । कुचकलशयोरुपरि तरलितश्चञ्चलो हारो यस्याः । अत्रापि हारतरलत्वं पुरुषायितमभिव्यनक्ति ॥ २ ॥ अपि च,–विचलदिति । पुनः किंभूता? विचलदलकैर्ललितो मनोहरो मुखचन्द्रो यस्याः सा तथा । पुनः किंभूता? तदधरपानरभसेन हर्षेण कृता तन्द्रा सुखजनितालीकनिद्रा यया ॥ ३ ॥ अपि च,–चञ्चलेति । किंभूता? चञ्चलकुण्डलाभ्यां ललितौ दलितौ कपोलौ यस्याः । पुनः किंभूता? मुखरितरसना या जघनगतिः जघनस्य गतागतं तया लोला ॥ ४ ॥ अपि च,–दयितेति । किंभूता? लज्जिता चासौ हसिता च लज्जितहसिता । दयितविलोकितेन लज्जितहसिता। अपि च किंभूता? बहुविधानि कूजितानि पारावतादीनामव्यक्तशब्दानुकरणानि

---

पुनः कीदृशी? कलशाविव कुचौ तत्र तरलितश्चञ्चलो हारो यस्याः सा ॥ २ ॥ पुनः कीदृशी? विचलदिति । विचलद्भिश्चञ्चलैरधिकैर्घूर्णकुन्तलैर्ललितो मनोहर आननचन्द्रो यस्याः सा । लालित्यं चालकानां कलङ्कसादृश्यान्मुखे चलत्कलङ्कवत्त्वं चन्द्रमसः प्रतीयते । पुनः कीदृशी? तस्य कृष्णस्याधरपानरभसः तेन कृता चक्षुर्निमीलनेनाविष्कृता तन्द्रा रतिसुखानुभवजनिता निद्रा यया सा ॥ ३ ॥ पुनः कीदृशी? चञ्चलेति । चपलाभ्यां कुण्डलाभ्यां दलितौ मृदितौ कपोलौ यस्याः सा । कुण्डलयोश्चापल्यं पुरुषायितस्खलनाविकारानुचापल्ये भवत्येव । पुनः कीदृशी? मुखरितेति । मुखरिता शब्दायमाना रसना क्षुद्रघण्टिका यस्य तादृशस्य जघनस्य गत्या गतेन लोला चञ्चला ॥ ४ ॥ पुनः कीदृशी? दयितेति । दयितस्य कृष्णस्य विलोकितेन वीक्षणेन लज्जितहसितं लज्जाहास्यं यस्याः सा । यद्वा,–दयितविलोकिते च लज्जिता लज्जावती हास्ययुक्ता चेत्यर्थः । पुरुषायमाणायास्तस्या अधःस्थितस्याज्ञायमानस्य कृष्णस्य दर्शनेन लज्जा हास्यं च तस्या अभूदिति भावः । लज्जितहसितेत्यत्र प्रथमव्याख्याने नपुंसके भावे क्तः । द्वितीयव्याख्याने लज्जधातोर्हासिवाचकस्य धातोश्चाकर्मकत्वात् 'गत्यर्थाकर्मक–' ( पा. ३।४।७२ ) इत्यादिना क्तः । कीदृशी? बहुविधं पिकशिखिकलहंसादीनामिव नानाप्रकारं कूजितं शब्दितं यत्र एतादृशो रतिरसः सुरतरसस्तेन रसिता हृष्टा ।

---

पाठा०–१ '॰ललितकपोला' RP., P., D.

विपुलपुलकपृथुवेपथुभङ्गा ।
श्वसितनिमीलितविकसदनङ्गा ॥ कापि० ॥ ६ ॥
श्रमजलकणभरसुभगशरीरा ।
परिपतितोरसि रतिरणधीरा ॥ कापि० ॥ ७ ॥
श्रीजयदेवभणितहरिरमितम् ।
कलिकलुषं जनयतु परिशमितम् ॥ कापि० ॥ ८ ॥

---

यत्र तथया स्यात्तथा रतिरसेन रतिरागेण रसिता शब्दिता । अथवा,–बहुविधं कूजितमव्यक्तः शब्दो यत्र तेन रतिरसेन शब्दिता ॥ ५ ॥ अपि च,–विपुलेति । विपुला बहवः पुलका रोमाञ्चा यत्र असौ विपुलपुलकः पृथुर्यो वेपथुस्तस्य भङ्गस्तरङ्गो यस्याः, भङ्ग इव भङ्गः । श्वसितनिमीलिताभ्यां विकसन्प्रकटीभवदनङ्गः एतल्लक्षणः कामो यस्याः ॥ ६ ॥ अपि च,–श्रमजलेति । किंभूता ? स्वेदबिन्दुक्लिन्नशरीरा । अपि च किंभूता ? उरसि पतिता । अर्थाद्धरेः । रतौ रण इव रतिरणः तत्र धीरा स्थिरा ॥ ७ ॥ श्रीति । इदं श्रीजयदेवभणितं विपरीतरताभि–( योग– )–क्रीडितं कलिकलुषं परिशमितं जनयत्विति शान्तिं नयतु ॥

---

यद्वा,–बहुविधं नानाप्रकारं पारावतादीनां यत्कूजितं तद्वद्रतिरसे रसितं शब्दितं यस्याः सा । 'रसितं शब्दिते हृष्टे' इति कोशः ॥ ५ ॥ पुनः कीदृशी ? **विपुलेति** । विपुलाः प्रचुरा ये पुलका रोमाञ्चास्तेषां पृथुर्महान्यो वेपथुः कम्पस्तस्य भङ्गस्तरङ्गो यस्याः सा, रोमाञ्चकम्पयोरुत्तरोत्पत्त्या तरङ्गसाम्यम् । 'भङ्गस्तरङ्गे रुग्भेदे भङ्गो जयविपर्यये ।' इति विश्वप्रकाशः । पुनः कीदृशी ? श्वसितं सुरतायासजनितो निश्वासो निमीलितं परमानन्दावाप्तिजनितं नेत्रनिमीलनं ताभ्यां विकसन्प्रकटीभवन्ननङ्गः कामो यस्याः सा । 'श्वसित–' इत्यनेनानन्दाश्वासिसान्निध्यं कथितम् । तदुक्तं **रतिरहस्ये**—'मुहुश्च सजनाक्षेपः सीत्काराभिसज्जितम् । हुङ्कारोच्छ्वसितं नार्या वीर्यसान्निध्यसूचकम् ॥' इति । 'निमीलित–' इत्यनेन च्युतिकालः कथितः । तदुक्तं तत्रैव—'मूर्च्छना मीलनं चाक्ष्णोश्च्युतिकालस्य लक्षणम् ।' इति ॥ ६ ॥ पुनः कीदृशी ? **श्रमजलेति** । श्रमजलकणेन सुरतायासजनितप्रस्वेदबिन्दुसमूहेन सुभगं मनोहरं शरीरं यस्याः सा । त्रुटितहारेऽपि वक्षसि स्वेदबिन्दुभिर्मुक्ताहारशोभाजननात्सुभगशरीरेति भावः । पुनः कीदृशी ? उरसि कृष्णस्य वक्षसि परिपतिता । पुनः कीदृशी ? रतिरणे सुरतसंग्रामे धीरा पण्डिता । अनेन सुरतान्तकाल उक्तः । तदुक्तं **रतिरहस्ये**—'अङ्गे स्वेदः श्लथत्वं च केशवस्त्रादिसंसृतिः । जाते च्युतिसुखे नार्या विरामेच्छा च जायते ॥' इति । बन्धश्चायं हंसलीलकाख्यः । तदुक्तं **रतिरहस्ये**—'नारी पादद्वयं दत्त्वा कान्तस्योरुयुगोपरि । कटिमान्दोलयेदाशु बन्धोऽयं हंसलीलकः' इति । 'स्वच्छेदकणापयः' इत्यमरः ॥ ७ ॥ **श्रीजयदेवेति** । श्रीजयदेवेन भणितं

---

पाठा०–१ 'शमयतु' P., B.

विरहपाण्डुमुरारिमुखाम्बुजद्युतिरयं [1]तिरयन्नपि वेदनाम् ।
विधुरतीव तनोति मनोभुवः सुहृदये हृदये मदनव्यथाम् ॥ १ ॥

अथात्र सङ्गीतराजे—'श्रीरागो यत्र रागः स्यात्तालस्तु ध्रुवमण्ठकः । वर्णनं वासुदेवस्य रतिलक्षणये स्त्रियाः । पदेभ्यः पाटसन्धानं स्वराङ्केनाखयैव च । प्रयोगश्च भवेद्यत्र स प्रबन्धवरः स्मृतः ॥ हरिरमितचम्पककर्णोऽन्यः शेखराभिधः' इति । हरिरमितचम्पकशेखरनामा चतुर्दशः प्रबन्धः ॥ ८ ॥ इदानीं विरहातुरा राधा चन्द्रमुद्दिश्याह—विरहेति । 'अये' कोमलामन्त्रणे । हे सखि ! अयं विधुः हृदये अर्थात् मम अतिमदनव्यथां तनोति । किंभूतः ? मनोभुवः मदनस्य सुहृन्मित्रम् । मुरारेर्विरहापरस्याकारणेनाह । किंभूतः ? विरहेण पाण्डु यन्मुरारिमुखाम्बुजं तस्य द्युतिरिव द्युतिर्यस्य । अत एव वेदनां तिरयन्नपि आच्छादयन्नपि । एतदुक्तं भवति—पूर्वं मदीयविरहपाण्डुमुरारिमुखकान्तिसाम्येन मम वेदनां नाशयन्नपि कामसुहृत्त्वेन वेदनां करोत्येव । तदमात्यापि मदपेक्षया तस्य स्थितत्वाद्दुःखं नाभूत्, सांप्रतमन्यासक्तं तं ज्ञात्वा मया स्थातुं न शक्यत इति भावः । द्रुतविलम्बितं वृत्तम् ॥ ५ ॥ इदानीं राधा विह्वलिते मनसि तत्स्वरूपमेव निरूपयति—अत्र पूर्वं ध्रुवपदम् ॥ रमत इति । अधुना मुरारिर्यमुनापुलिनवने रमते । अत्र 'मुरारि'पदं कामुकस्य कार्कश्येन रसभावं द्योतयति । किंभूतः ? विजयी मां पराभूय जयवान् । इति ध्रुवः । अथ पद्यानि । तमेव रमणप्रकारमाह

कथितं मद्वरैः कृष्णस्य रतिरमितं कीर्तितं कलेः कलियुगस्य कलुषं पापमर्षोत्कृष्टानां पाठकानां च परिशमितं जनयतु मर्दं करोतु ॥ ८ ॥ संप्रति चन्द्रोऽप्ययमधिकतरं व्यथयतीत्याह—विरहेति । 'अये' इति विषादे । अयं दृश्यमानश्चन्द्रो मम हृदये मदनव्यथां कामपीडां तावदधिकं यथा स्यादेवं तनोति विस्तारयति । कीदृशः ? विरहेण मद्विश्लेषेण पाण्डु धूसरं यन्मुरारेः कृष्णस्य मुखाम्बुजमाननपद्मं तद्वद्द्युतिर्यस्य सः । तथा च—तादृशकृष्णमुखाम्बुजसदृशचन्द्रदर्शने कृष्णमुखाम्बुजस्य स्मरणादतिव्यथा जायत इति भावः । किं कुर्वन् ? वेदनामपि तिरयंस्तिरोहितां कुर्वन् । तथा च—चन्द्रदर्शनेन तथा विवेकोन्मूलनं भवति यथा कृष्णमुपायेन कृतापराधमपि तमेव मनः स्मरतीति भावः । व्यथाजनकत्वे हेतुमाह—**मनोभुव** इति । मनोभुवः कामस्य सुहृन्मित्रम् । तथा च निकटस्थितस्यापि कृष्णस्यानुसरणं मया न कृतमिति मदनाज्ञालङ्घनात्कामो मे वैरी जातः । सम्प्रुत्यस्य साहाय्यं चिकीर्षता चन्द्रेणापि व्यथा जन्यत इति भावः । चन्द्रस्य कृष्णमनोजन्यत्वेन कामस्य मनसिजत्वेनैव प्रसिद्धेः । सोदरत्वेन कामचन्द्रयोः सौहार्दाच्च 'मनोभव'पदेन कामस्योपादानम् । तथा च श्रुतिः 'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।' इति । 'वेदना ज्ञानदुःखयोः । अये क्रोधे विषादे च संभ्रमे स्मरणेऽपि च' इति विश्वः । 'तिरोऽन्तर्धौ तिर्यगर्थे' इति च ॥ १ ॥ पूर्वं गीतेन कस्याश्चिद्वि-

पाठा०–1 'तिरयन्निव' P.

## गुर्जरीरागैकतालीतालेन गीयते । प्रबन्धः ॥ १५ ॥

समुदितमदने रमणीवदने चुम्बनवलिताधरे ।
मृगमदतिलकं लिखति सपुलकं मृगमिव रजनीकरे ॥ १ ॥
रमते यमुनापुलिनवने विजयी मुरारिरधुना ॥ ध्रुवपदम् ॥
घनचयरुचिरे रचयति चिकुरे तरलिततरुणानने ।
कुरबककुसुमं चपलासुषमं रतिपतिमृगकानने ॥ रमते० ॥ २ ॥

—समुदितेति । रमणीवदने मृगमदतिलकं कस्तूरीतिलकं लिखति । रमतेऽस्यामिति रमणी । लिखिरत्र लेखनसामान्याद्विन्यासे वर्तते । किंभूते वदने ? अत एव सम्यगुदितः कामो यत्र । पुनः किंभूते ? सतिलकं मुखमुद्वीक्ष्य दीप्तस्मरत्वात्सपुलकं यथा भवति तथा चुम्बनाद्वलितः सशब्दकोऽधरो यत्र । कस्मिन्क इव ? रजनीकरे मृग इव । पूर्णचन्द्रनिभे मुखे कस्तूरीतिलकेन राधा-निःश्वासैककामत्वं द्योत्यते । अत्र 'रजनीकर'ग्रहणेन तयोः क्षणदामित्वं द्योत्यते ॥ १ ॥ अपि च,—घनचयेति । स तथा इति प्रकरणलभ्यौ । चिकुरे कुन्तले । जातावेकवचनम् । कुरबककुसुमं शोणझिण्टिकापुष्पं शोणाम्लानपुष्पं वा रचयति । किंभूते ? रतिपतिः मृग इव तस्य कानने । किंभूते चिकुरे ? घनचयरुचिरे मेघपटलमनोहरे । पुनः किंभूते ? तरलिततरुणानने । तरलितानि तरुणानामाननानि येन । काननपक्षे तरलितानि तरुणानि कुरबककुसु-

परीतरसमुकम् , अधुना कस्याश्चित्स्वाधीनभर्तृकाया नायककर्तृकां क्रीडामाह—समुदितेति । गुर्जरीरागेऽस्यैकतालः । गीतार्थस्तु—विजयी जयशीलो मुरारिर्यमुना-पुलिने वने यमुनायाः सैकते मदने तत्र रमते क्रीडति । निःशङ्ककेलिप्रतिपादनाय 'विजयी' इत्युक्तं । क्रीडामेवाह—समुदितेति । रमणीवदने कामिनीमुखे सपुलकं सरोमाञ्चं यथा स्यादेवं मृगमदतिलकं कस्तूरीतिलकं लिखति । कीदृशे ? चुम्बनाय वलितः संमुखीकृत्य संकोचितोऽधरो यत्र तादृशे । कुत्र कमिव ? रजनीकरे चन्द्रे मृगमिव । कीदृशे चन्द्रे ? समुदितः सम्यगुदितो मदनो यस्मात्तादृशे । पूर्णचन्द्रस्य कामोद्दीपकत्वादिति भावः । पुनः कीदृशे चन्द्रे ? चुम्बनाय वलितः संमुखीकृतोऽधरो यस्मात्तादृशे । चन्द्रदर्शनात्पुनो चुम्बनादौ प्रवृत्तिः । अत्र मुखस्याह्लादकारित्वादिना चन्द्रसाम्यं, कस्तूरीतिलकस्य च मृगसाम्यं बोध्यम् ॥ १ ॥ केल्यन्तरमाह—घन-चयेति । चिकुरे तस्याः केशपाशे कुरबककुसुमं शोणाम्लानपुष्पं, अरुणझि-ण्टीपुष्पं वा रचयति । यथाविन्याससमर्पयतीत्यर्थः । कीदृशे चिकुरे ? घनचयवन्मेच-

पाठा०—१ 'घटयति···।···भूषिते ॥ २ ॥' S. २ 'कुरुबक' B., P.

टिप्प०—1 अन्यथा सह रमणनाशेन किमर्थं खेदं प्राप्स्यसीति ध्वनिः । कीदृशं ? चपलावत् विद्युदिव सुषमा शोभा यस्य तत् । यथा मेघे विद्युद् भाति तथा चिकुरे कुसुमानीति भावः—संजीविनी ।

घटयति सुघने कुचयुगगगने मृगमदरुचिरूषिते ।
मणिसरममलं तारकपटलं नखपदशशिभूषिते ॥ रमते० ॥ ३ ॥

मानां वा बालाविहङ्गानामग्रभागा यस्मिन् । रमणीपक्षे कुलटानां सुखरूपम् । यथा मृगः कानने बली तथात्र कामः । अत्र 'मृग'शब्देन तत्र रममाणस्य हरेः पशुत्वं ( पशुत्वं ) व्यज्यते ॥ २ ॥ अपि च,—घटयतीति । स तस्याः कुचयुगगगने कुचयुगं गगनमिव बृहत्त्वात् । अमलं मणिसरं हीरकहारं तारकपटलं तारकासमूहं घटयति योजयति । किंभूते ? सुघने सुतरां घने पीने । गगनपक्षे शोभनघने । किंभूते स्तनयुगे ? मृगमदरुचिरूषिते । कस्तूरीपरिष्वङ्गेन निवारितसुरतश्रमजले । गगनपक्षे मृगमदकान्तियुक्ते कज्जले च भावेन । पुनः कथंभूते ? नखपदं शशीव तेन भूषिते । पक्षे—नखपदमेव शशी तेन भूषिते । अत्र तस्मिन्नभिलाषशून्यत्वं गगनपदव्यङ्ग्यम् ॥ ३ ॥ अपि

समुद्गगह्वरे मनोहरे । पुनः कीदृशे ? रतिपतिः कामः स एव मृगस्तस्य कानने वने । पुनः कीदृशे ? तरलितानि विलोकनेन चपलीकृतानि तरुणानां यूनां मानसानि सुखानि येन तादृशे । कीदृशं कुसुमम् ? चपला इव रक्तविद्युदिव सुषमाधिवासिता शोभा यस्य तादृशम् । यद्वा,—चपलावत्सुषमं चारु । अत्र विरहतापसामकतयातिश्यामलतया चिकुराणां सजलमेघसाम्यम् । केशग्रथितकुरबककुसुमानां चान्तरान्तरा दृश्यमानतया विरहिणां शीतपजनकतया रक्तवर्णा लोहितविद्युत्साम्यम् । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः । 'रक्तः कुरबकः शोणाम्लानझिण्टीप्रभेदयोः' इति विश्वः । 'कुसुमं पुष्पफलयोः' इत्यपि । 'चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च' इत्यपि । 'सुषमं चारुसमयोः सुषमा परमा द्युतौ' इति च ॥ २ ॥ केशान्तरमाह—घटयतीति । कुचयुगं गगनमिव ? बृहत्त्वात् । तत्रामलं निर्मलं मणिसरं मुक्ताहारं तदेव तारकपटलं तारकसमूहं घटयति प्रापयति । कीदृशे कुचयुगगगने ? सुष्ठु अतिशयेन घनौ निबिडौ यत्र तादृशे । मृगमदस्य कस्तूर्या रुच्या दीप्त्या रूषिते व्याप्ते । पुनः कीदृशे ? नखपदं नखाङ्कमर्धेन शशी तेन भूषितेऽलंकृते । नखक्षतं चेदर्धेन्दुसाम्यं बोध्यम् । तदुक्तं **पञ्चसायके**—'अर्धेन्दुसंज्ञकमिदं नखक्षतमर्धेन्दुसंज्ञे कथितं समासतः । कक्षानितम्बस्तनपार्श्वमध्ये दातव्यमेतत्करजं सदैव' इति । अत एवात्र 'शशि'पदमप्यर्धचन्द्रपरं बोध्यम्; पूर्णचन्द्रस्य तत्साम्याभावात् । अत्र कुचयुगस्य विलीर्णैलाक्कस्तूरिकया श्यामलाङ्कनचन्द्रवत्त्वाद्गगनत्वेन निरूपणम्; गगनस्यापि कविसंप्रदाये श्यामत्वेनैव प्रसिद्धेः । अत एव 'सुघन' इत्यादिभिस्त्रिभिर्विशेषणैर्गगनस्य निरूपणोपयिकविशेषणोपादानात्साङ्गमेतद्रूपकम् । 'घनः सान्द्रे दृढे वीर्ये विस्तारे लोहमुद्गरे' इति विश्वः । 'गुण्ठितरूषिते' इत्यमरः । एतद्व्याख्यानसमये **क्षीरस्वामिनाप्युक्तम्**—'रूषिते लेपिव्याप्तयोरेवार्थः ।' 'यत्रान्तर्गिरिरेणुरूषितः ॥' 'नक्षत्रे चापि मध्ये च तारकं

पाठा०—१ 'घनचय······।······॥ ३ ॥' S.

**जित[1]बिसशकले मृदुभुजयुगले करतलनलिनीदले ।**
**मरकतवलयं मधुकरनिचयं वि[2]तरति हिम[1]शीतले ॥ रमते० ॥ ४ ॥**

च,–जितेति । स कृष्णसखा जितबिसशकले मृणालखण्डसदृशे भुजयुगले वर्तमाने । करतलनलिनीदले कराब्जपत्रे । शोणे करतले नीलमरकतसंचयः सभ्रमरपद्मशोभामनुकरोति । तेन तयोः भावकमण्डनकमनीयतान्यायेन औपाधिकस्नेहो रसाभावत्वेन व्यञ्जितः । मरकतवलयं मधुकरनिचयमेव वितरति प्रयच्छति । किंभूते करतले ? हिमशीतले । अत्र 'हिमशीतल'शब्दः सम्भिन्नकामाभावं द्योतयति । तथा चाह—'अनुरागोऽनुरक्तायां रसावह इति

तादृकापि च' इति मिश्रः ॥ ३ ॥ किंच,–**जितबिसेति** । मृदुभुजयुगले तस्याः कोमले बाहुयुगे मरकतवलयमिन्द्रनीलमणिकङ्कणं तमेव मधुकरनिचयं भ्रमरसमूहं विकिरति अर्पयति । कीदृशे भुजयुगले ? जितं निजमार्दवेन दौर्बल्येन चाभिभूतं बिसशकलं मृणालखण्डं येन तादृशे । पुनः कीदृशे ? करतलमेव नलिनीदलं पद्मं यत्र तादृशे । यद्वा,–करतलमेव नलिनीदलं पद्मिनीपत्रं यत्र तादृशे । पुनः कीदृशे ? हिमवच्छीतले । अत्र यद्यपि करतलस्य पद्मिनीपत्रत्वरूपणं न विरुद्धमिति द्वितीयव्याख्याने मरकतवलयस्य भ्रमरसमूहत्वेन रूपणात्करस्य पद्मरूपणमाक्षेपलभ्यमित्येकदेशविवर्तिरूपकम् । तदुक्तं **काव्यप्रकाशे** (१०।९४)—'श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।' अस्यार्थः—केचन पदार्थाः श्रौताः श्रुतिपठिताः साक्षाच्छब्दाः, केचन आर्थाः, तदन्यार्थानुपपत्तिगम्या यत्र रूपके तदेकदेशविवर्तीति । 'नलिनी पद्मिनी पद्मव्योमसिन्धुसरोवरे' इति विश्वः । 'मरकतो नीलमणिः' इति ॥ ४ ॥ किंच,–**रतिगृहेति** । रतेः शृङ्गारस्य गृहे आश्रये मणिमयरसनं मुक्तामयीं मेखलां विकिरति क्षिपति । अत्र विकिरतीत्यनेन काञ्चीबन्धनसमये श्रोणीस्पर्शजनितसात्त्विकवशात्कम्पमानकरः क्षिपति, न तु बध्नातीति ध्वनितम् । कीदृशे ? विपुलापघने विपुलो विस्तीर्णोऽपघनोऽवयवो यस्य तादृशे, अतिमांसल इत्यर्थः । पुनः कीदृशे ? मनसिजस्य कामस्यासने कनकनिर्मितसिंहासन इव विस्तीर्णत्वादतिगौरत्वाच्च जघनस्य कनकासनसाम्यम् । अत्र जघनस्य कनकासनत्वरूपणमनुपपद्यमानमनसिजस्य महाराजत्वमाक्षिपतीत्येकदेशविवर्ति रत्यादिरूपकमिति । कीदृशं मणिमयरसनम् ? तोरणस्य मङ्गलस्य स्रजो हसनमुपहासो यस्मात्तादृशम् । अन्योऽपि यदि सिंहासने उपविशति तदा तत्र परिजनैर्वन्दनमालिका बध्यते । मनसिजसिंहासनीभूते तस्या जघने क्षुद्रघण्टिकारूपमाङ्गल्यस्रजं बध्नातीति भावः । पुनः कीदृशे जघने ? कृतं वासनं वस्त्रं समाहृत्यापि काञ्चीं बध्नाति कृष्णोऽतिलज्जया नायिकया कृतं धारिकादिरूपं

पाठा०–१ 'जितविष॰' O. २ 'विकिरति' BM.

टिप्प०–1 हिमवत् शीतले संतापहरत्वात् पद्मिनीपत्रयुक्ते बिसशकले भ्रमरसमूहस्थितीति रूपकालंकारः—पद्द्योतनिका ।

रतिगृहजघने विपुलापघने मनसिजकनकासने ।
मणिमयरसनं तोरणहसनं ¹विकिरति कृतवासने ॥ रमते० ॥ ५ ॥
चरणकिसलये कमलानिलये नखमणिगणपूजिते ।
बहिरपवरणं यावकभरणं जनयति हृदि योजिते ॥ रमते० ॥ ६ ॥

---

स्थितिः । अभावे त्वनुरागस्य रसाभासं जगुर्बुधाः' ॥ ४ ॥ अपि च, रतीति । स तस्या रतिगृहजघने मणिमयरसनं मेखलां विकिरति । रतिगृहं च तज्जघनं च । जघनस्य रतिगृहेति नाम्ना सत्येव रतिं गृह्णाति । रतेरावासस्थापितत्वेन विशेषणपरता । किंभूते ? विपुलापघने विपुलावयवे । पुनः किंभूते ? मनसिज-कनकासने कामस्य हेमपीठे । किंभूतं रसनम् ? तोरणहसनम् । रतिगृहं तोरणसदृशमिति यावत् । किंभूते रतिगृहे ? कृतवासने कृतं वासनं गन्धादि यस्य । गृहं च अधिवासपरिकल्पितासनादि रमणीयं भवति । अत्र 'कनक'-शब्दः कारहरविपर्ययेण कामस्योद्दीपको भवतीति व्यज्यते ॥ ५ ॥ अपि च,–चरणेति । हरिस्तस्याश्चरणकिसलये यावकभरणं पूरणं जनयति । किंभूते ? हृदि योजिते योगं प्रापिते । अर्थात् श्रीकृष्णस्य हृदि । किंविशिष्टे चरणकिस-लये ? कमलानिलये लक्ष्मीनिवासस्थाने । पुनः किंभूते ? नखा एव मणि-गणाः भास्वरत्वात् । तैः पूजिते । किंभूतं यावकभरणम् ? चरणस्य स्वभा-वलोहित्याद्बहिर्भूतमाच्छादकम् । किंभूते हृदि ? कमलानिलये लक्ष्मी-निवासस्थाने । पुनः किंभूते ? नखमणिगणपूजिते । तया दत्तनखरत्वात् ॥ ६ ॥

---

इदं यत्रेत्यर्थः । यद्वा,–कृतं वासनं श्रीकृष्णवशीकरणाय धूपविशेषो यत्र तादृशे । अत एव तया वशीकृतः सन् मामनधूय तया सह रमत इति भावः । धूपविशेषश्च स्वदेहे नायकवशीकरणाय च नायिकया कर्तव्य इति कामशास्त्रे वचनम् । तदुक्तं **रतिरहस्ये**—'वरगुग्गुलमलयोद्भवसुरभैलाधर्जरस-विद्धार्थैः । सर्वाङ्गीणो धूपः सर्वजनानां वशीकरणम् ॥' इति । यद्वा,–कृता तत्कान्तिदर्शनाकृष्टेन वासना भोगेच्छा यत्र तादृशे । यद्वा,–कृतं वासनमर्थात्कामेन स्थानं यत्र तादृशे । यद्यपि 'मनसिजकनकासन' इत्यनेनैव काम-स्थानं प्राप्तं तथापि नित्यं तत्साक्षिध्यसूचनायैतदुक्तम् । 'भञ्जी प्रतीकोऽवयवोऽ-पघनोऽथ कलेवरम्' इत्यमरः । 'सिंहासनं तदैमम्' इत्यपि । 'रसनं स्वादने पाने रसना काञ्चिजिह्वयोः । रसनं चापि' इति विश्वः । 'मङ्गल्यतोरणोर्ध्वे भवेद्वन्दनमालिका' इति **क्षीरस्वामि**लिखितकोषः । 'वासनं वसने चाथ स्थाने ज्ञाने च धूपने' इति विश्वः ॥ ५ ॥ किंच,–चरणकिसलये चरण एव किसलयमाता-म्रत्वात्कोमलत्वाच्च । तत्र यावकभरणं जनयति । कीदृशे ? कमलायाः श्रियो निलय आश्रये । पुनः कीदृशे ? नखा एव मणिगणा मणिसमूहास्तैः पूजितेऽलंकृते । कीदृशं यावकभरणम् ? बहिर्भूतं दूरीभूतमपवरणं यस्य तादृशम्, स्पष्टमित्यर्थः । पुनः कीदृशे ? हृदि हृदये योजिते । अनुरागातिशयात्स्थापिते स्वहृदये स्वचरण-

---

पाठा०–१ 'चटयति' RM., B.

रमयति सुभृशं कामपि सुदृशं खलहलधरसोदरे ।
किमफलमवसं चिरमिह विरसं वद सखि! विटपोदरे ॥रमते०॥७॥
इह रसभणने कृतहरिगुणने मधुरिपुपदसेवके ।
कलियुग[1]रचितं न वसतु दुरितं कविनृपजयदेवके ॥ रमते० ॥ ८ ॥

---

अपि च,–रमयतीति । हे सखि! मौनं विसृज । विरसं यथा स्यात्तथा चिरमिह विटपोदरे निकुञ्जे फलप्राप्तिलक्षणरहितं चिरं किं अवसं विमुषिताऽस्मि । क सति ? खलहलधरसोदरे दुष्टे बलभद्रभ्रातरि कामपि आत्मसदृशीं खलां सुदृशं लक्षणया विरूपनेत्रां रमयति सति । अत्र 'हलधर'शब्दो मामनुकूलां विहायान्यासक्तोऽन्यां रममाणस्य तस्य पामरत्वं द्योतयति । ईदृशस्याऽस्य प्रतीक्षायां विलम्बया न स्थातव्यमिति भावः ॥ ७ ॥ अपि च,–इहेति । कविराजजयदेवके कलियुगेन रचितं दुरितं न वसतु न तिष्ठतु ।

---

किसलयं कृत्वा यावकं च रचयतीत्यर्थः । यद्वा,–हृदि तस्यैव विशेषणम् । कीदृशे हृदि ? कमलया लक्ष्म्या निलये आश्रये । लक्ष्म्याः कृष्णवक्षस्येव सर्वदा स्थितिः । पुनः कीदृशे ? नखा एव मणिगणास्तैर्भूषिते । लक्ष्म्या अपि यद्हृदि राधाचरणकिसलयं ददाति । तेन तस्य सौभाग्यातिशयो ध्वनितः । अत्र 'चरणकिसलये नखमणिगण' इत्यत्र रूप्यमाणयोः किसलयनखमणिगणयोः परस्परमयोगादद्भुतं नाम रूपकम् । तदुक्तं दण्डिना ( २।७८ )—'इदमार्द्रस्मितं ज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् । इति ज्योत्स्नोत्पलयोगादद्भुतं नाम रूपकम्' इति । 'कमलापीवरयोः' इति विश्वः । 'लाक्षा राक्षा जतु क्लीबे यावकालक्तकामयाः' इति विश्वः ॥ ६ ॥ रमयतीति । एवं स्वयमेव तत्तदाभरणं विधाय कामपि सुदृशं शोभने दृशौ नेत्रे यस्यास्ताम् । खलो दुर्जनो यो हलधरो बलभद्रस्तस्य सोदरो भ्राता कृष्णस्तस्मिन्सुरतमतिशयेन रमयति । हे सखि! वद कथय । इह विटपोदरे कुञ्जमध्ये विरसं रसशून्यं यथा स्यादेवमत एवाफलं यथा स्यादेवं चिरं बहुकालं व्याप्य किं किमित्येवं संस्थिताऽस्मीत्यर्थः । अत्र च हलधरसोदरत्वेन कृष्णस्योपादानम् । हलधरो ग्राम्यः, तत्सोदरोऽयमपि तथैव भविष्यतीति तस्य मां विहाय कयाचिद्गोपिकया सह केलिकरणमुचितमेवेति सूचनाय । 'विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः' इति विश्वः । अवसमिति 'वस निवासे' इत्यस्य धातोरुत्तमपुरुषैकवचनम् । लङ् । स्वाधीनभर्तृकेयं नायिका । तदुक्तं शृङ्गारतिलके ( १।७४ )—'यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति । विचित्रविभ्रमासक्ता स्वाधीनपतिका यथा' इति ॥ ७ ॥ इहैतत्काव्यकर्तरि कविनृपजयदेवके कलियुगेन

---

पाठा०–१ "चरितं" RM., P., S., B., P. C.

टिप्प०–1 इह विटपे पुष्पलतानिकुञ्जेऽफलं निष्प्रयोजनं विरसं रसरहितं यथा तथा चिरं बहुकालं किमवसं किमवस्थितास्मि, वद कथय, मौनं त्यक्त्वा न संयोगार्थगमनं प्रति सानुकूल्यात्मकं कथयेत्यर्थः–संजी० ।

नायातः सखि ! निर्दयो यदि शठस्त्वं दूति ! किं दूयसे ?
स्वच्छन्दं बहुवल्लभः स रमते, किं तत्र ते दूषणम् ? ।

---

किंभूते ? रसभणने रसोद्दीपके । कर्तरि ल्युः । पुनः किंभूते ? कृतहरिगुणने कृतहरिकथाभ्यासे । पुनः किंभूते ? मधुरिपुपदसेवके । अथ च,-इह रसभणने इति प्रबन्धविशेषणत्वेन योजनीयम् । इयमष्टपदी स्तुतिनिन्दापरत्वेन बोद्धव्या ॥ तथा च सङ्गीतराजे-'द्रुतमण्ठेन तालेन द्रुतेनैव लयेन च । मल्लारे रसराजे स्यात्पदानां संततेः पुनः । स्वरग्रामलया पाटास्तेना अपि यथाक्रमम् । हरिरसमन्मथतिलकाख्यः प्रबन्धराट् ॥' इति हरिरसमन्मथतिलकनामा पञ्चदशः प्रबन्धः ॥ कृष्णानागमने हेतुं दूतीं विषादोपनयपुरःसरं सोत्कण्ठा राधा प्रकटयति—नायात इति । हे सखि राधे ! स मया बहुप्रेयस्यापि आहूतः परं निर्दय इति नायातः । अथ राधाह—हे दूति ! स यदि शठः धूर्तः तर्हि किं दूयसे ? त्वं मा विषादं कार्षीः । त्वं दूतीकर्मण्येव प्रभुः । दूत्याह—हे राधे ! अहं अत एव दूये । स बहुवल्लभः सन् बह्व्यो वल्लभाः प्रेयस्यो यस्य सः स्वच्छन्दं यथा स्यात्तथा रमते क्रीडति । पुना राधाह—तत्र ते किं दूषणं ? न हि त्वं विपरीताचरणेति मदीयमेव दैवं बलवत्तरमित्याह—हे सखि ! पश्य जानीहि । चतुरं शास्यसि वा । इदं हृदयं चेतो यास्यति । किंभूतं चेतः ? स्वयं स्फुटद्विदलत् । उत्प्रेक्षते—उत्कण्ठार्तिभरादिव प्रियमिलनेच्छापीडाभरादिव । अन्योऽपि आर्तिभरतापितो विदीर्यत एव । किंभूतं चेतः ? अस्य प्रियसङ्गमाय दयितस्य गुणैः आकृष्यमाणं मया निरुध्यमानमपि नीयत एव । आशाभिः च तानि प्रियाणि च तेषां तैर्वा सङ्गमः सद्भावः प्राप्तिः तस्मै, तेन वा दयितः, तस्य वा । आशाप्रियसङ्गमे निमित्ते अयेन शुभावहेन विधिना दयितस्य ।

---

चरितमाचरितं कृतं दुरितं न वदतु न तिष्ठतु । कीदृशे ? रसस्य कृष्णविषयशृङ्गाररसस्य भणनं कथनं यस्य तादृशे । अत एव कृतं हरेर्गुणनं चिन्तनं येन तादृशे । अत्र हेतुमाह—मधुरिपोः कृष्णस्य पदसेवके ॥८॥ पूर्वमन्यस्याः कस्याश्चित्कृष्णेन सह केलीमुत्प्रेक्ष्य सखया अग्रे वर्णितवती । संप्रति दूतीं कृष्णेनोपभुक्तां शङ्कमाना वक्रोक्त्या दूतीं प्राह—नायात इति । हे सखि दूति दूत्यकर्मकुशले ! स निर्दयो दयारहितोऽत एव शठः कृतगूढमदपराधो यदि नायातस्तदा किं दूयसे किमिति दुःखिता भवसि ? स तु शठो न भवति; किं तु धृष्टः स्वच्छन्दमेव रमतेऽतः किं दूयसे इत्याह—स्वच्छन्दमिति । स कृष्णो बहुवल्लभोऽनेकनायिकाप्रियोऽत एव स्वच्छन्दं निःशङ्कं रमते । यथा कयाचिद्गोपिकया सह केलिं करोति । तत्रार्थे हे तव किं दूषणम् ? अपि च,-आश्चर्यरम्यस्य प्रियस्य कृष्णस्य संगमाय भिन्नायेदं मम चेतोऽन्तःकरणं यास्यति । कीदृशम् ? दयितस्य कृष्णस्य गुणैः सौन्दर्यादिभिराकृष्यमाणं बलात्कारेणानीयमानम् । अपरमपि गुणैः रज्जुभिरा-

पश्याद्य प्रियसंगमाय दयितस्याकृष्यमाणं गुणै-
रुत्कण्ठातिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ ६ ॥

देशवराडीरागेण रूपकतालेन गीयते ॥ प्रबन्धः ॥१६॥

अनिलतरलकुवलयनयनेन ।
तपति न सा किसलयशयनेन ।
सखि ! या रमिता वनमालिना ॥ ध्रुवपदम् ॥ १ ॥

---

अथवा,—आत्मप्रियसङ्गमायेति चतुर्थ्यन्तं भिन्नपदम् । एतदुक्तं भवति—हरिसंगमे पूर्वानुभूतस्मरणादिदं चेतो यास्यत्येव, न ते दूषणं न मम । सोऽपि नोपालम्भमर्हति; विधेः पराङ्मुखत्वात् । अथवा,—एवंविधमिदं चेत एव यास्यति ज्ञास्यति इत्यनेव शावाक्यार्थं निवृत्तिमेष्यतीत्युपरम्यते । अथाद्य पश्य । तद्गुणैराकृष्यमाणं सत् प्रियसङ्गमाय यास्यति ॥ अत्र शार्दूलविक्रीडितं वृत्तम् । काव्यलिङ्गमलंकारः । उत्प्रेक्षोत्तरे च ॥ ६ ॥ तानेव दयितस्य सुरतसौशील्यादिकाननुगालम्बनादिकामप्रकारेण निन्दास्तुतिपरत्वेनाह—अनिलेति । तत्र पूर्वं ध्रुवपदं यथा—सखि येति । हे सखि ! या गोपिका

---

कृष्यमाणमन्यत्र नीयत इति ध्वनितम् । कीदृशं चेतः ? उत्कण्ठातिभरादिव स्फुटत् । उत्कण्ठा औत्सुक्यमार्तिः पीडा तयोर्योऽतिशयस्तस्मादिव बहिर्भवत् । अपरमपि परस्परान्तरसंकुले स्थाने स्थितं वस्तु बाहुल्या बहिर्भवतीति ध्वनितम् । तथा च अतःपरं विरहदुःखं सोढुमशक्ततया तद्गुणानेव स्मरन्त्या प्राणा एव त्याज्यास्ततः 'अन्ते या मतिः सा गतिः' इति न्यायमेव चेतस्तत्र यास्यतीति किमतः परं तवात्र गतागतायासेनेति भावः । अथ वस्तुविशेषाद्ध्वन्यविशेषाच्छठादिपक्षाश्च ध्वनितोऽयमर्थः—हे दूति ! यदि स नायातस्तदा त्वं किं दूष्यसे ? तदनागमनं ममोत्सवे मुच्यसे, न तव । त्वं तु तत्सङ्गभोगेनैव कृतार्था जातेति सखीमपि सोत्कण्ठमाह । समीचीनं सख्यमाचरितमिति भावः । यदि च निर्दयकुचोपमर्दनगाढालिङ्गनादिना स्वाङ्गप्रपीडने दयारहितस्तदापि त्वं किं दूष्यसे ? नायकस्य तादृशं दयाराहित्यं नायिकया भाग्येन लभ्यत इति भावः । यदि च शठस्तदापि किं दूष्यसे ? शठत्वेनैव मद्गमनं कृतवता त्वमुपभुक्तेति शठतेति भावः । यदि च बहुवल्लभः स्वच्छन्दं रमते स तदापि ते किं दूषणम् ? किं च बह्वीषु वल्लभासु मध्ये संप्रति त्वमेका प्रिया जातेति भावः । पद्यत्रयेति । तथा च भवादृशीनामुपभोगमात्रमुद्देश्यमिति तस्य बहुवल्लभत्वेऽपि न क्षतिः । मम तु प्रथमानुरागसमयमारभ्य प्रियेणान्या मनसापि न कृता । ममापि स्वप्नेऽपि तदन्यो नेच्छाविषयोऽभूत्, अधुना तु विधिवशाद्वैपरीत्ये प्राणानेव त्यक्ष्यामीति भावः । अत्र प्रथमपद्ये शठो नायक उक्तः । 'स्वच्छन्दम्' इत्यादिना च धृष्टः । तदुभयलक्षणं रसार्णवसुधाकरे—'अनुकूलस्त्वेकजानिः शठो गूढापराधकृत् । धृष्टो व्यक्तान्ययुवतिभोगलक्ष्मोऽपि निर्भयः' इति ॥ १ ॥ संप्रति कृष्णेन रममाणायाः सौभाग्यसुखं तद्विरहिण्याश्च संतापमहत्तया कथयति—अनिलेति । गीतस्यास्य देशवरागो

---

पाठा०—१ 'देशाड्वरा०' 'देशाखराग०' RM., S., R., P.

विकसितसरसिजललितमुखेन ।
स्फुटति न सा मनसिजविशिखेन ॥ सखि ! या० ॥ २ ॥

---

वनमालिना हरिणा रमिता । रमणमिता रमिता । अथवा,–रमः संजातो यस्य इति वनमालिना सह क्रीडितेत्यर्थः । अथवा,–उद्यानविहारादिभिर्हरिणा वा रममाणा गोपिका हरिणैव तद्विशेषक्रीडने नियुक्ता । आत्मना सह क्रीडनार्थं प्रेरितेति यावत् । अथवा,–वनमालिना सह कामेन रन्तुं प्रेरिता, तत्रैव साभिलाषा क्रीडापरा बभूवेत्यर्थः । निन्दापक्षे तु—वनमालिनेति मालायाः सद्धावात्तस्याः संभोगपराङ्मुखत्वं सूचितम् । वनलक्ष्म्या मलिनेव; इतस्ततः पुष्परसास्वादात् । इति ध्रुवः ॥ अथ पदानि । अनिलेति । तत्र प्रतिपदमेकैकं विशेषणम् । तृतीयान्तं वनमालिनः, प्रथमान्तं च या इति पदोपलक्षितायास्तस्याः । तत्रापि च ध्रुवपदाद्विशेषणानां वैपरीत्येन । पक्षे—एतद्विपरीतोऽर्थः सूचितो भवति । किंभूतेन वनमालिना ? अनिलेन तरले ये नीलोत्पले ते इव । नीले कमले इव नयने यस्य । सा गोपिका किसलयशयनेन न तपति नोपतप्ता भवति । पक्षे—या विलासमन्थरेण प्रियान्तरनिरीक्षणप्रहितचञ्चललोचनेनोपभुज्यते सा किसलयशयनेऽपि न तपतीति न, अपि तु तापं प्राप्नोत्येव ॥ १ ॥ अपि च,–विकसितेति । किंभूतेन हरिणा ? स्फुरितारविन्दमिव मनोहराननेन सा गोपिका कामबाणेन विद्धा न भवति । पक्षे–विलासकलाविमुखेन । केवलं प्रसारितमुखेन संभोगमाप्नोति । सा मदनबाणैर्मनसि न विध्यते ? अपि तु

---

रूपकतालः । गीतार्थस्तु—हे सखि ! या वनमालिना कृष्णेन रमिता क्रीडिता सा किसलयशयने पल्लवशय्यायां न तपति नोपतप्ता भवति । कृष्णाश्लेषे तत्सुखपदमेव भवतीति भावः । कीदृशेन वनमालिना ? अनिलेन वायुना तरलेऽनिलचञ्चले तरले चञ्चले कुवलये तद्वन्नयने यस्य तेन । नायिकासंनिधौ साध्वसवशाच्चञ्चलनेत्रेणेत्यर्थः । अथवा,–याऽरमितेत्यत्र अश्लेषः । तथा च या वनमालिना अरमिता सा किसलयशयने न तपतीति, अपि तु तपत्येव । नह्ययं प्रकृतसंगतार्थस्य प्राप्तेः । यद्वा,–किसलयशयनेनेत्येवं तृतीयैव । नञ् विरहाख्याने । तथा चायमर्थः—या रमिता वनमालिना किसलयशयनेन न तपति ? अपि तु तपत्येव नेति काका लभ्यते । 'अनिलो वसुवातयोः' इति विश्वः ॥ १ ॥ अथ च,–विकसितेति । या वनमालिना रमिता सा मनसिजविशिखेन कामबाणेन न स्फुटति न द्विधा भवति । कीदृशेन वनमालिना ? विकसितं पुष्पितं यत्सरसिजं पद्मं तद्वल्ललितं मनोहरं मुखं यस्य तेन । मुखहास्येन विकसितपद्मसाम्यं बोध्यम् ।

---

टिप्प०–1 अपरमपि बहुवनान्तरसंकुले स्थाने स्थितं वस्तु सांकर्यात्प्रतिभवतीति स्फुटदिदलदिति वा । अन्योऽपि गुणे रज्जुभिराकृष्टः सन् प्रयातीति । उत्प्रेक्षालंकारः–पद० ।

अमृतमधुरमृदुतरवचनेन ।
ज्वलति न सा मलयजपवनेन ॥ सखि ! या० ॥ ३ ॥
स्थलजलरुहरुचिकरचरणेन ।
लुठति न सा हिमकरकिरणेन ॥ सखि ! या० ॥ ४ ॥
सजलजलदसमुदयरुचिरेण ।
दलति न सा हृदि चिरविरहेण ॥ सखि ! या० ॥ ५ ॥
कनकनिकषरुचिशुचिवसनेन ।
श्वसिति न सा परिजनहसनेन ॥ सखि ! या० ॥ ६ ॥

---

विप्यत एव ॥ २ ॥ अपि च,–अमृतेति । किंभूतेन हरिणा ? अमृतवन्मधुरतरं कोमलं वचनं यस्य तेन । सा मलयानिलेन न ज्वलति न दीप्यते । अतिप्रियवचनस्य दाता न भार्यं पीडयति । तेन 'प्रियवाक् श्री (?) स्त्रीणां भवति वल्लभः' इति वाक्यान्यनिरासाम्मनोऽनवस्थानाम्मलयमारुतेन ज्वलत्येव ॥ ३ ॥ अपि च,–स्थलेति । किंभूतेन हरिणा ? स्थलकमलकान्तिवच्चरणेन सा गोपिका चन्द्रकिरणेन न लुठति न भूमौ परिवर्तते । ततः पक्षे–'स्थलकमल'ग्रहणेन तद्वत्स्य तस्थापद्मादित्वमुक्तम् ॥ ४ ॥ अपि च,–सजलेति । किंभूतेन हरिणा ? सजलजलदोदयवच्छोभिमता । सा गोपिका हृदि दुःसहविरहभरेण न दीर्यते । पक्षे–अत्र 'सजलजलद'ग्रहणेनैव विरहेण संयोगेऽपि प्रियविरहसाम्यमिति निन्दार्थः ॥ ५ ॥ अपि च,–कनकेति । किंभूतेन

---

अथ च,–या विपाशितेन शरदिजलजितमुखेन वनमालिना रमिता सा मनसिजविशिखेन न स्फुरति ? अपि तु स्फुरत्येवेति पूर्ववत् ॥ २ ॥ अथ च,–अमृतेति । या वनमालिना रमिता सा मलयजपवनेन मलयगिरिजातेन वातेन न ज्वलति न दीप्यते । कीदृशेन वनमालिना ? अमृतादपि मधुरं मृदुतरमतिशयेन कोमलवचनं यस्य तेन । अमृतेत्यादिविशेषणोपपत्त्या चामृतरसेन ज्वलनाभावस्योचितत्वात् । अथ चामृतमधुरमृदुतरवचनेन वनमालिना या रमिता सा मलयजपवनेन न ज्वलति ? अपि तु ज्वलत्येवेति ॥ ३ ॥ स्थलजलेति । कीदृशेन वनमालिना ? स्थलोद्भवं जलरुहं कमलं तद्वद्रुचिर्येषोस्ताहशौ करौ चरणौ यस्य तेन । अथ च या वनमालिना रमिता सा हिमकरकिरणेन न लुठति किं ? अपि तु लुठत्येव ॥ ४ ॥ सजलेति । अथ च,–या वनमालिना रमिता सा विरहाधिक्येन हृदि हृदये न दलति न दीर्यते । पुनः कीदृशेन ? सजलो जलसहितो यो जलदो मेघस्तत्समुदयवद्रुचिरेण मनोहरेण । अथ च,–या वनमालिना रमिता सा विरहभरेण हृदि न दलति ? अपि तु दलत्येवेत्यर्थः ॥ ५ ॥ कनकेति ।

---

पाठा०–१ 'हिमकरकरणेन' C. २ 'विरहभरेण' BM., S., P., C.

---

टिप्प०–1 वसनमिति । श्रीराधाकृतीसितदुस्थालीतांबरधारणं, ननु मन्यनार्थमिति भावः । तथा–'पीताम्बरं किमिति नन्दसुतो बिभर्ति नीलाम्बरं किमिति गानुसुता बिभर्ति । मन्ये दिनेऽपि निजजीवनधारणार्थमालिङ्गनं कलयतो वसनच्छलेन ॥'–इति पद्० ।

मनोभवानन्दन चन्दनानिल !
प्रसीद रे दक्षिण ! मुञ्च वामताम् ।
क्षणं जगत्प्राण ! [1]विधाय माधवं
पुरो मम प्राणहरो भविष्यसि ॥ १ ॥

---

इति नारायणमदनायासननामा षोडशः प्रबन्धः ॥ ८ ॥ चेतो वाञ्छतीति सखीं प्रेष्य अन्तरा पुनः तत्कार्ये कालविलम्बं कृत्वा पुनः अत्यन्तत्रासहा मलयानिलमुपालभ्युमाह—मनोभवेति । हे चन्दनानिल ! जगदाह्लादक ! प्रसीद विपरीतलक्षणया क्षमां कुरु । कथं वैपरीत्यम् ? यतः जगदाह्लादकत्व-रूपप्रच्युत्या मम रिपोर्मनोभवस्य आनन्दमकरोः अतो मनोभवानन्दन ! प्रसीद क्षमां कुरु । दक्षिणोऽहमिति कृत्वा हिताहितलक्षणवक्रतानभिज्ञत्वा-न्नोपालभ्योऽहमिति वदसीति चेत्तर्हि जितम् । हे दक्षिण ! क्षणं क्षणमात्रं वामतां मुञ्च । कृतजगत्प्राणस्य मे सर्वसाधारण्येन नेयं प्रकृतिरिति चेत्,—हे जगत्प्राण अङ्गीकृतजगत्प्राण ! त्वं माधवं पुरो विधाय अग्रे कृत्वा सांप्रतमेव मम प्राणहरो भविष्यसि । तर्हि साधु चेष्टितम् । नाहमन्यथा मरणनिमित्तं, किंतु माधव इतीदमेव वामताया विलसितमिति । अत्र वंशस्थं वृत्तम् ।

---

स्वर्थः ॥ ६ ॥ चन्दनानिलमेव संतापदं मत्वोपालभते—मनोभवेति । हे चन्दनानिल चन्दनसंबन्धिपवन ! मे मम प्रसीद प्रसादं कुरु । हे दक्षिण ! सर्वेषां विलासिनामनुकूलस्वभाव ! वामतां प्रतिकूलतां मुञ्च । अत्र चन्दनसं-सर्गतस्य वामत्वं नोचितमिति चन्दनानिलदक्षिणपदाभ्यां ध्वनितम् । वामत्वे हेतुगर्भविशेषणमाह—मनोभवेति । मनोभवं काममानन्दयतीति मनोभवा-नन्दनः । तथा च मम वैरी कामस्तं यदानन्दयसि तदैव प्रतिकूलमाचरसीति भावः । यदि च वामतां न मुञ्चसि तदा माधवं कृष्णं क्षणं मम पुरोऽग्रे निधाय पश्चात्तद्दर्शनं कृत्वाऽस्य प्राणहरः प्राणानां हर्ता भविष्यसि । यथा विरहिणीं मां व्यथयसि तथा मया विरहितं तमपि संतापय । यथा मदन्तिकं स आयास्यति तथा कुर्विति भावः । एतेन जगत्प्राणहरणे वायोः सामर्थ्यं ध्वनितम् । यद्वा,—चन्दनानिल ! क्षणं वामतां मुञ्च । माधवं पुरो निधाय पश्चान्मम प्राणहरो भविष्यसी-त्यन्वयः । शेषं पूर्ववत् । जगत्प्राण जगतां प्राणभूत ! । दक्षिणस्य वामत्वं जगत्प्राणस्य प्राणहरत्वमिति विरोधालंकारः । 'वामं सव्यं प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः । 'दक्षिणः सरलावामपरच्छन्दानु-

---

पाठा०—१ 'निधाय' S., P., D.
गीत० १२

रिपुरिव सखीसंवासोऽयं शिखीव हिमानिलो
विषमिव सुधारश्मिर्यस्मिन्दुनोति मनोगते ।
हृदयमदये तस्मिन्नेवं पुनर्वलते बला-
त्कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ २ ॥
बाधां विधेहि मलयानिल ! पञ्चबाण !
प्राणान्गृहाण न गृहं पुनराश्रयिष्ये ।

---

अतिशयोक्तिरलंकारः ॥ १ ॥ इदानीं स्वचित्तमेवोपालभते—रिपुरिवेति । हे सखि ! यस्मिन्गते सति अन्यत्र स्थिते सति अथवाऽज्ञातस्वरूपे सति अयमनुकूलोऽपि सखीसंवासः रिपुरिव मनो दुनोति । अयं च शीतो वायुः ज्वलन इव मनो दुनोति । अपि च,–अमृतदीधितिर्हालाहलमिव मनो दुनोति । एवमप्यदये तस्मिन्नप्यदये हृदयं पुनर्बलाद्वलते तदभिमुखीभवति । किं तर्हि क्रियते स्त्रैणस्थितिरियम् । कुवलयदृशां निकामनिरङ्कुशः कामो वाम एव वर्तते । निकामनिरङ्कुशः अतिशयोच्छृङ्खलः । अत्र हरिणीवृत्तम् । विरोधालंकारः ॥ २ ॥ इदानीं कामोपहता मलयानिलादीनधिक्षिपति—बाधामिति । हे

---

हरिषु' इति च ॥ १ ॥ अधुना ममैवापराधो नान्यस्येत्याह—रिपुरिवेति । यस्मिन्कृष्णे मनो गते चेतसि कृते सति सखीसंवासः सखीभिः सहावस्थानं रिपुरिव शत्रुरिव दुनोत्युपतापयति । सखीदृष्ट्या तत्कृतालंकाररचना-परिहासवासभवनपरिष्कारादिकारणेनाधिकतर उपतापो भवतीति भावः । अयं च हिमानिलो हिमगर्भोऽप्यतिशीतलोऽपि वायुः शिखीवाग्निरिव दुनोति । अयं सुधारश्मिश्चन्द्रो विषमिव दुनोति । तस्मिन्नेव कृष्णेऽदये दयारहिते हृदयं पुनर्भूयोऽपि बलाद्धठाद्वलते । निवार्यमाणमपि तत्रैव गच्छतीत्यर्थः । अतः कुवलयदृशां कमलनेत्राणां कामो निकाममत्यर्थं निरङ्कुशस्त्यक्तमर्यादोऽत एव मे वामः प्रतिकूलः । अन्योन्यानुरागो हि कामो मनोहरो भवति, अत्र तु स मयि नीरागः केवलं ममैव चेतस्तत्र धावतीति वामता कामस्येति भावः । अत्र सखीनां संवासस्य रिपुवत्, हिमानिलस्य वह्निवत्, सुधारश्मेर्विषवदपकारित्वं विरुद्धमिति विरोधालंकारः । 'शिखिनौ वह्निबर्हिणौ' इत्यमरः ॥ २ ॥ संप्रति विरहदुःखम-सहमाना मलयानिलादीन्प्रार्थयति—बाधामिति । हे मलयानिल मलयसंबन्धि-

---

टिप्प०—1 तल्लक्षणं चोक्तं काव्यप्रकाशे ( १०।१०१ ) 'निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् । प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः । विज्ञेयातिशयोक्तिः सा' इति । 2 तल्लक्षणं चोक्तं काव्यादर्शे ( २।३३३ ) 'विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् । विशेषदर्शनायैव स विरोधः स्मृतो यथा ॥' इत्यादिना ।

किं ते कृतान्तभगिनि ! क्षमया तरङ्गै-
रङ्गानि सिञ्च मम शाम्यतु देहदाहः ॥ ३ ॥
प्रातर्नीलनिचोलमच्युतमुरः [2]संवीतपीतांशुकं
राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले ।

---

मलयानिल ! बाधां विधेहि पीडया किं प्रतीक्षसे ? हे पञ्चबाण ! प्राणान् गृहाण। पञ्चभिर्बाणैः पञ्चापि प्राणांस्त्वं गृहाण । भवत इदमेव प्रयोजनम् । यस्मात्स्मरोऽपि तप्तं जनमुपलाप्य गृहाभिमुखीकरोति । एतदर्थमेव स्वभावपरित्यागेनाप्युपकृतिर्विधेया । परं तु अहं बाध्यमानापि गृहीतप्राणापि पुनर्गृहं नाश्रयिष्ये, श्रीकृष्णमेव शरणं व्रजिष्यामीति तावुपालभ्य पुनरुदीर्णस्मराथ यमुनामाह—हे कृतान्तभगिनि यमस्वसः ! मलयानिलपञ्चबाणौ शैत्यसंभोगकारणावपि पीडयतः, तर्हि नहि त्वं यमस्य भगिनी, ताभ्यां प्राणेषु गृहीतेषु भ्रातुः किमुत्तरं दास्यसि ? इति । तेन तव क्षमया क्षान्त्या किं ? भ्रातुर्हितं समाचर मत्प्राणार्पणेनेत्याह—तरङ्गैरूर्मिभिर्मम गात्राणि सिञ्च । तेषु सिक्तेषु माधवमाप्त्या देहदाहः शाम्यतु । तरङ्गसेकेनापि तदलाभे प्राणेषु गतेषु देहदाहः शान्तिमेष्यतीत्यभिप्रायः । वसन्ततिलकावृत्तम् । अप्रस्तुतप्रशंसालंकारः ॥ ३ ॥ इदानीं सर्गान्ते वैष्णवानामाशीः—प्रातरिति । अयं नन्दात्मजः जगदानन्दायास्तु । किंभूतः ? स्वादु स्मेरमुखः स्मेरं सहासं मुखं यस्य स तथा । किं कृत्वा ? राधानने नयनयोरञ्चलं प्रान्तमाधाय आरोप्य । किंभूत-

---

वायो ! बाधां पीडां विधेहि कुरु । अत्र मलयजचन्दनाश्रयत्वेन महाशयोऽस्यदाक्षिलस्य ते घातकत्वाख्यानं नोचितमिति सूचनाय 'मलयानिल'पदोपादानम् । हे पञ्चबाण ! मम प्राणान्गृहाण । पञ्चभिर्बाणैः पञ्चानामपि प्राणानां ग्रहणे कामस्योचितमिति सूचनाय 'पञ्च'पदोपादानम् । ननु कृष्णेन चेदुपेक्षिता तदा गृहं किमिति न गच्छसीत्यत आह—न गृहमिति । गृहं पुनः भूयो गृहं नाश्रयिष्ये । तेन विना गृहमपि मे संतापजनकमेव भविष्यतीति भावः । हे कृतान्तभगिनि ! ते क्षमया सहिष्णुतया किम् ? किं प्रयोजनमित्यर्थः । तरङ्गैरूर्मिभिर्मेऽङ्गानि सिञ्च प्लावय । देहदाहो विरहजन्यो देहदाहः शाम्यतु निवर्तताम् । कृतान्तो निर्दयस्तद्भगिन्यास्तेऽपि दया न युक्तेत्याख्यापनाय कृतान्तेत्युपात्तम् । 'भगिनी स्वसा' इत्यमरः । कामबाणा अपि—'संमोहनः क्षोभणश्च दहनः शोषणस्तथा । उच्चाटनश्च कामस्य बाणाः पञ्च प्रकीर्तिताः' इति ॥ ३ ॥ सर्गान्ते भक्तान्कविराशिषाऽऽशास्ते—प्रातरित्यादिना । अयं नन्दात्मजः जगदानन्दायास्तु । कथंभूतः ? स्वादुस्मेरमुखः ईषत्स्मितेन शुभं मुखं यस्य तथोक्तः । किं कृत्वा ? राधाया आनने वदने नयनयोरञ्चलं प्रान्तमाधायारोप्य । कीदृशम् ?

---

पाठा०—१ 'सान्द्रवनन्दपुरन्दराद्वि°' C., P. २ '°पीताम्बरं D., B.

व्रीडाचञ्चलमञ्चलं नयनयोराधाय राधानने
स्वैरं[1] स्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः ॥ ४ ॥

इति श्रीजयदेवकृतौ श्रीगीतगोविन्दे विप्रलब्धावर्णने
नागरनारायणो नाम सप्तमः सर्गः ॥ ७ ॥

---

मञ्चलम् ? व्रीडाचञ्चलं लज्जया तरलम् । एतावता राधाननं कटाक्षवीक्षितं कुर्वेत्यर्थः । तदुक्तम्—'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते' इति । क सति ? सखीमण्डले प्रातश्चकितं यथा स्यात्तथा स्वैरं स्वेच्छया हसति सति । किं कृत्वा ? अच्युते नीलनिचोलं नीलपरिच्छदं विलोक्य । च पुनः राधाया उरः संवीतपीतांशुकम् । एवं वस्त्रविनिमयः सखीनां हास्ये कारणम् । इह हास्यो रसः । शार्दूलविक्रीडितं वृत्तम् । स्वभावोक्तिरलंकारः[1] । अत्र सर्गे शठो नायकः, अभिसारिका नायिका । तल्लक्षणं—'मदनार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका' ॥ १० ॥

श्रीएकलिङ्गाश्रयसोदरायां स्वकीतौ(?)व्यवहारायां रसिकप्रियायाम् ।
श्रीकुम्भकर्णेन विनिर्मितायां सर्गोऽगमत्सप्तम ऊर्जितायाम् ॥

इति श्रीचयादिविमोक्षादिविधजनीनकर्मनिर्मलीकृतान्तःकरणराजाधिराजमहाराजश्रीकुम्भकर्णविरचितायां
गीतगोविन्दटीकायां रसिकप्रियायां सप्तमः सर्गः ॥

---

लज्जया व्रीडया तरलं चपलं कटाक्षवीक्षितं कुर्वेत्यर्थः । यथोक्तम्—'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥' इति । अथवा,—नयनयोरञ्चलमाधाय अञ्जनं राधानयने वाससाऽऽच्छादयेति वा । क सति ? सखीमण्डले सहचरीवृन्दे । चकितं विस्मितं यथा भवति तथा स्वैरं स्वेच्छया हसति हास्यं कुर्वति सति । किं दृष्ट्वा ? प्रातः प्रभातसमये अच्युतस्योरो वक्षो नीलनिचोलं कञ्चुकाहतं संवीतपीतांशुकं परिकलितपीताम्बरम् । अथवा,—राधायाः संवीतपीताम्बरं कृष्णस्य नीलनिचोलमिति वस्त्रं विपर्यासं दृष्ट्वेति वा ॥ ४ ॥

कान्तासमासि हरती नितरामनल्प-
स्नेहानुवर्तिरसिनर्म विभावयन्ती ।
गूढार्थपदार्थनिचयान्स्फुटतां नयन्ती
श्रीपद्मेव रुचिरा रसमञ्जरीयम् ॥ १ ॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां
गीतगोविन्दटीकायां रसमञ्जरीसमाख्यायां सप्तमः सर्गः ॥ ७ ॥

---

१ 'स्वैरं स्मेरमुखे' D., P. 'स्वैरं स्मेरमुखो' BM., S.

टिप्प०—1 'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्' इति तल्लक्षणं काव्यप्रकाशे ।

## अष्टमः सर्गः ८

### –विलक्ष्यलक्ष्मीपतिः–

अथ कथमपि यामिनीं विनीय स्मरशरजर्जरितापि सा प्रभाते ।
अनुनयवचनं वदन्तमग्रे प्रणतमपि प्रियमाह साभ्यसूयम् ॥ १ ॥

**भैरवीरागयतितालाभ्यां गीयते ॥ प्रबन्धः ॥ १७ ॥**

रजनिजनितगुरुजागररागकषायितमलसनिवेशम् ।
वहति नयनमनुरागमिव स्फुटमुदितरसाभिनिवेशम् ।
हरि हरि याहि माधव ! याहि केशव ! मा वद कैतववादम् ।
तामनुसर सरसीरुहलोचन ! या तव हरति विषादम् ॥ ध्रुवपदम् ॥

---

सदानन्दसन्दोहकारं मुकुन्दं नमस्कृत्य पद्माङ्कबिन्दुप्रमोदम् ।
नृपः कुम्भकर्णो विधत्ते विचित्रं वरं गीतगोविन्दपाठं पवित्रम् ॥ १ ॥

इदानीमेवं तदपराधेन विकल्पमानायामस्याः पुरत आर्तप्राणपरित्राणकारणं जगत्कारणकारणमाविरभूत् । अतः कविराह—अथेति । मानिनीनां हि प्रियागतो मानोऽतिमानवोतीति प्रसिद्धमाह । अथ माधवागमनानन्तरं प्रियं साभ्यसूयं सा राधा वक्ष्यमाणमाह । किंभूतं प्रियम् ? अग्रे प्रणतमपि । अर्घ्योंचरणयोः । पुनः किंभूतम् ? अनुनयवचनं सामवाक्यं वदन्तम् । क ? प्रभाते । किंभूता सा ? स्मरशरजर्जरितापि । किं कृत्वा ? कथमपि महता कष्टेन यामिनीं विनीय । पुष्पिताग्रा वृत्तम् । खण्डिता नायिका । हरि हरीति खेदे धूर्तो नायकः । विप्रलम्भो रसः । जातिरलंकारः ॥ १ ॥ तामेव सपत्नी-

---

अथेति । अथानन्तरं सा राधा प्रभाते प्रातः प्रियं कृष्णं साभ्यसूयमसूया-सहितं यथा स्यादेवमाह उक्तवती । किं कृत्वा ? यामिनीं रात्रिं कथमपि कष्टादपि विनीय नीत्वा । अत्र 'यामिनी'पदेन प्रियविरहेऽतिदीर्घत्वं ध्वनितम् । 'उदरवती कन्या' इतिवत् । कीदृशी ? स्मरशरजर्जरितापि कामबाणपीडितापि अन्यनायिकानखाङ्कदर्शनेन जनितमहादुःखा विस्मृतविरहदुःखा तथापीत्यर्थः । कीदृशं प्रियम् ? अनुनयाय स्वापराधजनितकोपशान्तये वचनं 'यज्जातं तज्जातं भूयो नेदृशमाचरामि' इत्यादिविनयवाक्यं वदन्तं प्रणतमपि नम्रमपि । 'रजनी यामिनी' इत्यमरः ॥ १ ॥ तदेव गीतेन कथयति—रजनीति । गीतस्यास्य भैरवी-

---

पाठा०–१ 'अनुनयविनयं' P., S. २ 'भैर(व P.)वीरागेण यतितालेन' C. ३ 'निमेषम्' RM., P. C. ४ 'वहसि'.

टिप्प०–1 भैरवीरागः; तल्लक्षणम्—'सरोवरस्थे स्फटिकस्य मण्डपे सरोरुहैः शङ्करमर्चयन्ती । तालप्रभेदप्रतिपन्नगीता गौरीतनुर्नारदभैरवीयम् ॥' इति पद० । 2 मा लक्ष्मी, तस्या धव इत्यनेन तत्पतित्वेन चापल्यं द्योतितम् । 'केशव' इत्यनेन क्लेशनाशकत्वेनापि क्लेशदातृत्वमनुचितमिति द्योतितम्–पद० ।

कज्जलमलिनविलोचनचुम्बनविरचितनीलिम रूपम् ।
दशनवसनमरुणं तव कृष्ण ! तनोति तनोरनुरूपम् ॥ हरि हरि० ॥२॥

---

विपर्येर्ष्यां प्रकटयति । तत्र पूर्वं पूर्वपदानुस्यूतत्वाद्ध्रुवपदं व्याक्रियते—हरि हरीति । हरि हरीत्यव्ययानामनन्तार्थत्वात्खेदवाचकमव्ययम् । अथवा गानपूर्त्यै, स्तोभमात्रम् । खण्डिता राधा अग्रे प्रगतं प्रियं सेर्ष्यमाह—हे माधव लक्ष्मीपते ! याहि गच्छ । अन्यासक्तो हि कथमन्यां प्रतारयसीति 'मा'शब्दद्योत्यम् । अथवा, मा स्वभावचञ्चला तस्याः पत्युश्चञ्चलत्वं युक्तमेव । तर्हि चञ्चलस्त्वं त्वदेकपरायणां मां कथं प्रतारयसीति याहि । एवमप्यधिक्षेपेऽसंतुष्टा पुनराह—हे केशव ! याहि । स्त्रियोचिति रतये किमुच्यते । प्रशस्ताः केशा यस्येति केशवपदव्युत्पत्तेः । त्वं केशसंस्कारवतीषु स्वैरिणीषु रत इति 'केशव'शब्दव्यङ्ग्यम् । अतो हे केशव ! बहुवल्लभ ! त्वदेकपरायणोऽहमित्यादिकैतववादं छलवाक्यं मा वद । विपक्षे मयि किमकारणरोषणे रोष इत्याशङ्कसे चेत्—मैवम् ; हे कुमुदलोचन ! या तव विषादं हरति तामेव बहुप्रियामनुसर । अनुरूपस्यानुरूपायामनुरूपं सुरतमिति । 'कुमुद'ग्रहणेन सोमवंशोद्भूतत्वाद्रात्रौ जागरो दिवालस्यो लक्ष्यते । इति ध्रुवः ॥ अथ पदानि । रजनीति । हे कृष्ण ! त्वं नयनमनुरागमिव वहसि । किंभूतमनुरागम् ? स्फुटमतिबाहुल्येनान्तर्व्याप्य बहिर्निर्गतम् । पुनः किंभूतम् ? उदितरसस्य शृङ्गारस्याभिनिवेश आग्रहो यत्र । अथानुरागविशेषणत्वेन उदितः स्वादस्याभिलाषस्याग्रहो यत्रेति । किंभूतं नयनम् ? रजनिजनितो योऽसौ गुरुजागररागः तेन कषायितं लोहितीकृतम् । पुनः किंभूतम् ? अलसो निमेषोऽवस्थानं यत्र । अत्र 'वहति' इति पाठान्तरपक्षे तवेति पूर्वपक्षस्यानुषङ्गेण नयनं कर्तृ स्फुटमनुरागं वहतीति योज्यम् ॥ १ ॥ अपि च,—कज्जलेति । हे कृष्ण ! तव दशनवसनमधरस्तनोरनुरूपं रूपं तनोति । किंभूतम् ? अरुणम् । स्वभावारुणमपि । पुनः किंभूतं

---

रागो यतितालः । तल्लक्षणमुक्तं प्राक् । गीतार्थस्तु—हरि हरीति खेदे । हे माधव हे केशव ! याहि इतोऽपसर । लक्ष्मीवल्लभत्वेऽपि तादृशीष्वेवानुरागो युज्यते । स्थिरानुरागाणां मादृशां ते किं प्रयोजनमिति 'माधव'पदेन ध्वनितम् । कैतववादं छलवाक्यं मा वद मा कथय । 'कैतवं तु छले द्यूते' इति विश्वः । ननु त्वदनुसरणार्थमेतस्यां भ्रमतो विलम्बो जात इत्यत आह—तामिति । हे सरसीरुहलोचन कमलनयन ! तां नायिकामनुसरानुगच्छ या तव विषादं दुःखं हरति । अहं तु स्वयमेव संतप्स्ये । ते विषादं कथमपनेष्यामीति भावः । अत्र पद्मं प्रभाते यथार्धमर्धमुकुलितं तद्वत्ते नयनं रात्रिजागरालस्यान्मुकुलीभवद्धालस्यवशा प्रसार्यमाणमित्युन्निद्रवशात्किंचित्प्रलपसीति 'सरसीरुहलोचन' इत्यनेन ध्वनितम् । यद्वा,—सरसीरुहं यथा रात्रौ मुकुलितं तिष्ठति, प्रभाते प्रसरति, तथा त्वदीयनयनं रात्रौ मद्विषये निमीलितमासीत्, इदानीं त्वया प्रसारितमिति तेन पदेन ध्वनितम् ।

वपुरनुहरति तव स्मरसङ्गरखरनखरक्षतरेखम् ।
मरकतशकलकलितकलधौतलिपेरिव रतिजयलेखम् ॥ हरि हरि० ॥३

---

दशनवसनम् ? कज्जलेन मलिने ये विलोचने तयोश्चुम्बनेन विरचितो नीलिमा यत्र तत् । अत्र मलिनग्रहणं तन्नेत्रयोर्बहुपुरुषोपभोग्यत्वं व्यञ्जयति ॥ २ ॥ तव वपू रतिजयलेखमनुहरतीवानुकरोतीव । इदं वपुर्न, मया सर्वं जितमिति कामिनः प्रति कामजायाप्रेष्यलेखोऽयम् । अनेन स्त्रीप्रेष्यत्वेन तच्छाधमत्वं सूचितमिति व्यङ्ग्योऽर्थः । किंभूतं वपुः ? स्मरस्य सङ्गर इव सङ्गरे कामविलासे खरनखराणां क्षतरेखा यत्र । अत्रापि 'खर'ग्रहणं विलासभङ्गे हेतुः । तस्याः संबन्धिनं लेखमिति वपुर्नखक्षतानां लेखेनोपमेयगर्भं विशेषणमाह । मरकतशकले कलितायाः कलधौतलिपेः संबन्धिनम् । अथवा,–लिपेरित्यत्र पञ्चमी । तथैवं लिपेरिवेति योजनीयम् । 'कलधौतलिपिमिव' इति युक्तः पाठः ॥ ३ ॥

---

ननु मे त्वत्तोऽन्या प्रेयसी नेत्यत आह—हे कृष्ण ! तव नेत्रं नयनं तदनुरागमिव वहति धारयति । कीदृशं नयनम् ? रजनिजनितो रात्रिजातो गुरुर्महाजागरजनितो यो रागो रक्तता तदेव रञ्जनद्रव्यं तेन कषायितमीषल्लोहितम् । तथैवालसनिमेषम् । अलसो मन्थरो निमेषः पक्ष्मविन्यासो यस्य तादृशम् । अत्र च रात्रिकेलिसाक्षिणा कृष्णेन यस्याः कस्याश्चिद्गोपिकायाः केलिव्यासङ्गेन वृथा जागरणं कारित इति रागेण कोपेन कषायितत्वं राधाया अपेऽन्यनायिकानुसरणनिमित्तानुमितमेवेति ध्वनिः । 'गुरुर्महति बाध्यवत्' इति विश्वः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु', 'गान्धारादावन्यो रागः' इति विश्वः । 'कषायो रसभेदे स्यादङ्गरागे विलेपने । निर्यासे च कषायोऽथ सुरभौ लोहितेऽन्यवत्' इति च । 'निमेषः सिकिरोद्घाटे विन्यासेऽनुप्रकाशिते' इत्यपि । 'हरि हरि' इत्यव्ययम् ॥ १ ॥ खेदेन तदन्वेषणार्थपर्यटनजनितरजनिजागरात्तन्नेत्रयोर्लौहित्यमित्यलं दुःखमपेक्ष्यत आह—कज्जलेति । हे कृष्ण ! अरुणमपि ते दशनवसनमधरस्तव तनोः शरीरस्यानुरूपं योग्यं रूपं कान्तिं तनोति विस्तारयति । तनुरपि ते श्यामाऽधरोऽप्यधुना ते श्याम इति भावः । कीदृशम् ? कज्जलेनाञ्जनीभूतेन मलिने ये विलोचने नेत्रे तयोश्चुम्बनेन विरचितो नीलिमा नीलपद्मपत्रं तादृशं, तस्याश्चुम्बनसमये लग्ननेत्राञ्जनेन श्यामीभूतस्त्वदधर एव स्फुटत्वेन धूर्ततां प्रकटयतीति भावः । नेत्रयोरपि चुम्बनमुक्तं कामशास्त्रे—'मुखे नेत्रे ललाटे च चुम्बनं परिकीर्तितम्' इति । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः ॥ २ ॥ वपुरिति । हे कृष्ण ! स्मरस्य कामस्य संगरे संग्रामे खराणां तीक्ष्णानां नखराणां नखानां रेखा यत्रैतादृशम् । तव वपुर्मरकतशकले नीलमणिखण्डे कलिता निर्मिता या कलधौतलिपिः सुवर्णे इवाक्षरविन्यासस्तस्या इव रति-

---

पाठा०–१ 'वपुरनुवहति' P., D.

चरणकमलगलदलक्तकसिक्तमिदं तव हृदयमुदारम्।
दर्शयतीव बहिर्मदनद्रुमनवकिसलयपरिवारम् ॥ हरि हरि० ॥ ४ ॥
दशनपदं भवदधरगतं मम जनयति चेतसि खेदम्।
कथयति कथमधुनापि मया सह तव वपुरेतदभेदम् ॥ हरि हरि० ५

अपि च,-चरणेति। अत्र प्रीतिविशेषं सूचयति—हे कृष्ण! तवेदं हृदयं बहिर्मदनद्रुमस्य मदनो द्रुम इव तस्य नवकिसलयपरिवारं नवपल्लवसमूहमिव दर्शयति-किंभूतं हृदयम्? उदारं महत्। पुनः किंभूतम्? चरणकमलादलक्तकसान्निध्यादुपभुक्तवनितापादपद्मतः गलदलक्तकेन सिक्तम्। अत्र मदनद्रुमत्वारोपेण बहिर्ग्रहणेन च तस्याः साधारण्यानुरागौ सूचितौ। हस्तचरणाभ्यां रतविशेषो यथा—'यदि संहतमूर्ध्वगमूरुयुगं युवतेः परिरभ्य नरो रमते। तदुरःस्फुटनं च भवेदुरसि प्रमदाचरणद्वयतः' ॥ ४ ॥ अपि च,-दशनपदमिति। हे कृष्ण, तव एतदिति अन्यरमण्युपभोगविहितं मया सहाधुनापि प्रत्यक्षतो दृश्यमानेऽपि भेद एतामन्यवस्थां प्राप्तिस्तया

जयलेखं सुरतविजयप्रशस्ति लेखनपत्रमनुहरति सदृशीकरोति। अत्र कृष्णवपुषो नीलत्वान्मरकतशकलसाम्यम्। सुवर्णस्य कविसंप्रदाये आरक्तत्वेनैव वर्णनीयत्वाच्चक्षतस्य सुवर्णलिपिसाम्यं बोध्यम्। 'संगरोऽक्षि कृतौ युधि' इति विश्वः। 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः। 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इति च। 'भित्तं शकलखण्डे वा पुंसि' इति च। 'कलधौतं रूप्यहेम्नोः कलधौतं कलध्वनौ' इति विश्वः। 'वर्णदूतः स्वस्तिमुखो लेखो वाचिकहारकः' इति हारावली ॥ ३ ॥ ननु मार्गे विस्खल्य कण्टकादिक्षतबलेनागच्छतो मे वपुषि कण्टकक्षतं दृश्यते, न तु नखाङ्कमित्यत आह—चरणेति। इदमुदारं तव हृदयं मदनद्रुमस्य कामवृक्षस्य हृदयान्तर्गतस्य नवकिसलयपरिवारं नूतनपल्लवसमूहं बहिर्दर्शयतीव। कीदृशं हृदयम्? चरणकमलादन्यकामिनीपदपद्माद्गलता अलक्तकेन सिक्तम्। अपरोऽपि वृक्षः सिक्तः सन्नुल्लसत्पल्लवानुद्दर्शयतीति ध्वनिः। इह नायिकाचरणालक्तकक्षेपबन्धकथनेन कोपाख्यो बन्धः कथितः। तदुक्तं वात्स्यायने—'गोपिपादौ इह न्यस्य कराभ्यां धारयेत्कुचौ। अयं तावन्नयोनिः कोपबन्धः प्रकीर्तितः॥' इति। 'परिवारः परिकरे समूहे पिहनेऽपि च' इति विश्वप्रकाशः ॥ ४ ॥ किंच,-दशनेति। भवदधरगतं दशनपदं तवाधरस्थितं कस्याश्चिद्दन्तक्षतं मम चेतसि

टिप्प०-1 न विद्यते भेदो यस्य, पूर्वं मया सह तव वपुषो भेदो नासीति स्थितम्; इदानीं तु तद्विपरीतमिति मया सह एतेति विभावनालंकारः-पद०। 2 ननु तवोपायनार्थं कमलत्रोटनं कुर्वति मयि पद्मकोशादापतता भृंगेनममाधरो दष्टः न तु दन्तक्षतमित्यत आह-बहिरिवेति-पद०।

बहिरिव[1] मलिनतरं तव कृष्ण! मनोऽपि भविष्यति नूनम् ।
कथमथ वञ्चयसे जनमनुगतमसमशरज्वरदूनम्?॥ हरि हरि० ६
भ्रमति भवानबलाकवलाय वनेषु किमत्र विचित्रम् ।
प्रथयति पूतनिकैव वधूवधनिर्दयबालचरित्रम् ॥ हरि हरि० ॥ ७॥

---

सहाभेदं कथं कथयति । कोऽसावभेद इत्याह—दशनपदं दन्तक्षतं भवदधरगतं खलु, मम चेतसि खेदं जनयतीति । यस्य व्रणस्तस्य वेदनेति प्रसिद्धेऽन्यव्रणोऽन्यवेदनामादधातीति विरुद्धपरिहाराय भेद एव घटते । स च सुतरां विरुद्ध इति ॥ ५ ॥ अपि च,–बहिरिवेति । नूनं वितर्के । हे कृष्ण! अहमिति वितर्कयामि । तव मनोऽपि मनसः स्वभावादौज्ज्वल्ये सत्यपि बहिरिव बहिर्गतकृष्णवर्ण इव मलिनतरं भविष्यति । अथ चैवं न तर्हि अनुगतमाश्रितं भवन्तमधिकृत्यासमशरदूनं महाश्रयं जनं कथं वञ्चयसे । तद्वञ्चनादेव चित्तमपि मलिनमनुमीयते । मलिना एवाश्रितवञ्चनां कुर्वन्तीति ॥ ६ ॥ अपि च–भ्रमतीति । हे वधूवधे निर्दय! भवान्वनेषु अबलाकवलाय युवतीग्रसनाय भ्रमति । सर्वाणि वाक्यानि सावधारणान्येवेति । यथा पार्थो

---

खेदं दुःखं जनयति । एतत्तव वपुरधुनापि मया सह कथमभेदं कथयति, अन्यशरीरक्षतस्यान्यत्र व्यथाजनकत्वासंभवाद्वपुषो भेदं शापयतीति भावः । अधुनाऽस्यन्तहृदयभेदे वपुरभेदो नोचित इति शङ्का व्यज्यते । प्रसिद्धभेदकारणानि यद् । भेदकारणस्य विभाव्यमानत्वाद्विभावनालंकारः । तदुक्तं दण्डिना (का. २।१९९)—'प्रसिद्धहेतुव्यावृत्त्या यत्किंचित्कारणान्तरम् । यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥' इति ॥ ५ ॥ ननु तवोपायनार्थं कमलं त्रोटयति मयि पुष्पकोशादापतता भ्रमरेण ममाधरोष्ठे दष्टो न तु दशनक्षतमिदमित्यत आह—वपुरिति । हे कृष्ण ! नूनं तर्के उत्प्रेक्षायाम् । तव मनोऽपि चित्तमपि वपुरिव शरीरमिव मलिनतरमतिशयेन मलिनं भविष्यति । यथा ते वपुः श्यामं तथा मनोऽपि भविष्यतीत्यर्थः । ननु मनोमालिन्यं त्वया कथं ज्ञातमित्यत आह—कथमिति । अथेति प्रश्ने । त्वामेव पृच्छामो यदि तवान्तर्मलिनं न तदाऽसमशरदूनम् असमशरो विषमशरः कामस्तज्जनितेन ज्वरेण दूनं दुःखितमत एवानुगतं त्वामनुसृतं मादृशं जनं कथं वञ्चयसे प्रतारयसि ? तथा च शरणागतजनवञ्चनमन्तर्मालिन्यमन्तरेण न भवतीति भावः । तथा च व्याजेन दशनक्षतादिगोपनेऽपि नूनमितिपदप्रदानादुत्प्रेक्षा नामायमलंकारः । तदुक्तं दण्डिना (का. २।२३४)—'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' इति ॥ ६ ॥ चित्तमालिन्यमेवाह—भ्रमतीति । भवान्वनेषु विपिनेष्वबलाकवलाय कामिनीग्रसनाय

---

पाठा०–1 'वपुरिव' RM.

श्रीजयदेवभणितरतिवञ्चितखण्डितयुवतिविलापम् ।
शृणुत सुधामधुरं विबुधा! विबुधालयतोऽपि दुरापम् ॥ हरिहरि० ८

तवेदं पश्यन्त्याः प्रसरदनुरागं बहिरिव
प्रियापादालक्तच्छुरितमरुणद्योति[1] हृदयम् ।

---

धनुर्धरः' इतिवत् । अत्र मद्वधे किं विचित्रम्? ममाबलाया वधः सुकर एव पूतनिका अतिपुष्टमदा कंसभगिन्येव तव बालचरित्रं प्रथयति । बालेन यदि तादृशी प्रबला कवलिता तर्ह्यस्या अबलायाः कवलने किमाश्चर्यम्? अत्र स्त्रीवधो निषिद्ध इति निन्दा । 'अथ कथमपि' इत्यादौ खण्डिता नायिका । तल्लक्षणम्—'ज्ञातेऽन्यासङ्गविकृते कान्ते कोपकषायिता । गन्धान्यथागते कान्ते भोगचिह्नैः कषायिता' ॥ ७ ॥ अपि च,-श्रीजयदेवेति । हे विबुधाः! श्रीजयदेवेन भणितमभिलापवञ्चितखण्डितयुवतिविलापं शृणुत । किंभूतम्? सुधामधुरम् । पुनः किंभूतम्? स्वर्गेऽपि दुरापम् । सप्तम्यर्थे तसिः ॥ खण्डितालक्षणं यथा—'निद्राकषायमुकुलीकृतताम्रनेत्रो नारीनख-, व्रणविशेषविचित्रिताङ्गः । यस्याः कुतोऽपि पतिरेति गृहं प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः ॥' तथा च संगीतराजे—'ताळो वर्णयतिर्भैरवरागो देवाद्विवर्णनम् । विप्रलम्भाख्यशृङ्गारो रसः करुणवेदनम् । कविनामाङ्कितपद्मान्ते पाटस्वरावलिः । द्विवाण्यथ पदानि स्युरिति लक्ष्मीपतेः पुरः । रत्नावलीप्रबन्धोऽयं निबद्धः कुम्भभूभुजा ॥' इति लक्ष्मीपतिरत्नावलीनामा सप्तदशः प्रबन्धः ॥ पदरचना जयदेवोदिता कमलावल्लभगानोचिता । कुम्भनृपेण परं बोधिता चातुरवरेण भणत रसरताः ॥८॥ इदानीं खण्डितापि प्रौढत्वमालम्ब्य तमधिक्षिपति—तवेदमिति । हे कितव! त्वदालोकोऽत्र

---

भ्रमति । अत्रार्थे किं चित्रम्? न किमपीत्यर्थः । तत्र हेतुमाह—प्रथयति ख्यापयति । यथापि बाल्ये येन स्तनदानप्रवृत्ता राक्षसी हता तस्य संप्रति कोमलाङ्गीनां मादृशां मारणे किं वक्तव्यमिति भावः । खण्डिता नायिका । तदुक्तं भरतेन—'निद्राकषायकलुषीकृतताम्रनेत्रो नारीनखव्रणविशेषविचित्रिताङ्गः । यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः' इति ॥ ७ ॥ श्रीजयदेवेति । हे विबुधाः पण्डिताः! इमं जयदेवेन कविना वर्णितं रतौ वञ्चितायाः प्रतारितायाः खण्डितायाः प्रातरागतान्यनायिकानखाङ्कचिह्नितप्रियाया विलापं परिदेवनं शृणुताकर्णयत । कीदृशम्? सुधातोऽपि मधुरम् । तत्र हेतुमाह—विबुधेति । विबुधालयतोऽपि देवालयेऽपि दुरापं दुष्प्रापमित्यर्थः । सुधा स्वर्गेऽपि सुलभा, कृष्णकथामृतपानं तु तत्रापि दुर्लभमिति सुधापेक्षयाधिकमाधुर्यमिति भावः । 'विबुधः पण्डिते देवे' इति विश्वः । सुरालयतोऽपीत्यत्र सप्तम्यर्थे तसिः । सार्वविभक्ति-

---

पाठा०-१ 'मरुणच्छायहृदयम्' BM., C., S., D.

ममाद्य प्रख्यातप्रणयभरभङ्गेन कितव !
त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ १ ॥
अन्तर्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसन-
स्तम्भाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् ।

मम शोकादपि किमपि अधिकतरां लज्जां जनयति । त्वद्दर्शनेन शोकं पराकृत्य लज्जैवाधिकाभूत् । तत्र पूर्वं शोके कारणमाह—प्रख्यातस्य जगद्विदितस्य स्नेहातिशयस्य भङ्गेन । ततो लज्जां प्रति हेतुगर्भं विशेषणमाह-किंभूताया मम ? त्वयेदं हृदयं पश्यन्त्याः । किंभूतं हृदयम् ? प्रियायाः यावककर्बुरितम् । अत एवारुणरोचि अरुणस्य रोच इव रोचो विद्यते यस्य तत्तथा । अरुणपरस्त्र्यारागवद्रोचनशीलं वा । उत्प्रेक्षते—बहिः प्रसरदनुरागमिव बहिः प्रसरच्चरणकन्याजेन तदनुरागो यस्मिन् । बहुमानपुरःसरमुपभोगयोग्यस्य कौस्तुभस्य प्रेष्यापादाहतिर्लज्जाधिक्ये हेतुः । तत्र प्रेष्योपभोगे लज्जापि नासीति व्यङ्ग्यम् । अत्र शिखरिणीवृत्तम् ॥ १ ॥ इदानीं सर्गान्ते मङ्गलाचरणाशिषमाह—अन्तर्मोहनेति । कंसारेः श्रीकृष्णस्य वंशीरवः पाशिकाध्वनिः वो युष्माकं श्रेयांसि विपोकयतु विपुलीकरोतु । किंभूतो वंशीरवः ? दृप्यद्दानववृन्दमानदिविषद्दुर्वारदुःखापदां ध्वंसः दृप्यद्दिर्दानवैर्दूयमाना ये दिविषदस्तेषां दुर्वारदुःखापद्ध्वंसहेतुत्वाद्ध्वंसः । पुनः किंभूतः ? कुरङ्गीदृशामन्तर्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसनस्तम्भाकर्षणदृष्टिहर्षणमहामन्त्रः । अन्तर्मोहनेत्यादिद्वन्द्वान्तो द्वन्द्वः । तेषां संहृत्यो योगः तत्र महामन्त्र इव । अन्तर्मोहनं मनोमोहनम् । अनेन मोहनं मौलिघूर्णनमिति वशीकारः । वशी-

करणमिति नियमात् ॥ ८ ॥ त्वयेदमिति । हे कितव धूर्त ! त्वदालोकस्तव दर्शनम् । प्रख्यातः प्रसिद्धो यः प्रणयभरोऽनुरागातिशयस्तस्य भङ्गेन नाशेन हेतुना शोकाद्दुःखादपि किमप्यनिर्वचनीयां लज्जां जनयति । कीदृश्या मे ? त्वयेदं प्रत्यक्षं हृदयं पश्यन्त्याः । कीदृशम् ? प्रियापादालक्तकैः प्रियायाश्चरणसंबन्धियावकैर्व्याप्तम् । अत एवारुणच्छायमरुणा छाया दीप्तिर्यस्य तादृशम् । किमिव ? बहिः प्रसरदनुरागमिव हृदयं परिपूर्णाधिक्याद्बहिः निःसरत् । प्रेम्णैव या राधा पूर्वं सौभाग्यगर्वेण न काञ्चन गणयति स्म सा इदानीं समक्षमन्यनायिकाचरणालक्तकं हृदयं पश्यन्ती जीवत्येवेति विपक्षयुवती-परिहासशङ्कया शोकादपि मेऽधिकलज्जा भवतीति भावः । 'छाया स्यादातपाभावे

1 'प्रातर्नीलनिचोल···।···नन्दात्मजः ॥ २ ॥' S., C. २ 'चलन्मन्दारविध्वंसन' D. '°घूर्णनमिलन्मन्दार°' S., BM. ३ 'स्तम्भाकर्षणदृष्टिहर्षण°' S.

दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां
भ्रंशः कंसरिपोर्व्यपोहयतु वः श्रेयांसि वंशीरवः ॥ २ ॥

इति श्रीजयदेवकृतौ श्रीगीतगोविन्दे खण्डितावर्णने
विलक्ष्यलक्ष्मीपतिर्नामाष्टमः सर्गः ॥ ८ ॥

---

कृता हि देवताः साधु साध्विति शिरोधूननेन प्रशंसन्ति । चलन्ति यानि मन्दारकुसुमानि तेषां विध्वंसनम् । एतावता मारणमुद्दिष्टम् । मारणे हि कुसुमस्रजां भ्रंशो जायते । स्तम्भाकर्षणं सिद्धम् । दृष्टिर्बाधा । उच्चाटनमिति यावत् । एतेषां योगः । एतावता वंशीरवस्य मृगीदृशां संबन्धि षट्कर्मसाधन-महामन्त्रत्वमुक्तम् । यं श्रुत्वा मृगीदृशस्तां तामवस्थां प्राप्नुवन्तीत्यर्थः ॥ २ ॥

उद्यच्छ्रकुकाचलप्रतिनिधिः कीर्तिप्रजापूरिता-
शाशोऽप्यद्युदिनद्युतिप्रतिहतिप्रकान्तभेरीरवः ।
श्रृङ्गेर्पन्तीर्वितादादिवलिरसौ श्रीकुम्भकर्णो व्यधा-
द्सर्गेऽष्टमितस्य चारुविवृतिं अन्तोऽष्टमूर्तेरिमाम् ॥

इति श्रीरसिकप्रियानाम्नि श्रीगीतगोविन्दविवरणे श्लेच्छवनीदावानल-महाराजश्रीकुम्भकर्णविरचितेऽष्टमः सर्गः ॥ ८ ॥

---

प्रतिबिम्बार्कयोर्विदोः । पाल्गोरकोषयोः कान्तिसम्पछोभापङ्क्तिषु संपुता ॥' इति विश्वप्रकाशः ॥ २ ॥ सर्गावसाने कविर्मङ्गलमाचरति—अश्लतरिति । कंसरिपोः श्रीकृष्णस्य वंशीरवो मुरलीनादो वः युष्माकं कल्याणानि व्यपोहयतु वितरतु । कल्याणदातृत्वसामर्थ्यकथनायात्र 'कंसरिपु'पदोपादानम् । किंलक्षणः ? कुरङ्गीदृशां हरिणनेत्राणामन्तर्मोहनं मनोमोहनं, मौलिघूर्णनं तत्त्वप्रशंसार्थं शिरश्चालनं, मिलन्मन्दारस्य विध्वंसनमधःपातनं स्तम्भाकर्षणं स्तब्धानां मानिनी-नामपि वशीकरणं, दृष्टिहर्षणं नेत्रोत्साहः, श्रवणनिर्बाधा नेत्रविकाशो भवति । इत्यादिकर्मसाधने महामन्त्रः । पुनः किंलक्षणः ? दृप्यद्भिर्दर्पयुक्तैर्दानवैर्दैत्यैर्दूय-मानानामुपतप्यमानानां दिविषदां देवानां दुर्वारोऽनिवार्यो दुःखापदो दुःखहेतु-भूता विपत्तयस्तासां भ्रंशो नाशकः । यच्छ्रवणेन देवा दैत्यपीडाभयान्मुक्ता भवन्तीति भावः । अनेनापि सामर्थ्यलक्षणो नायकगुण उक्तः । तथा च देवादीनां विलाससाधको यस्य वेणुनिनादः किं वक्तव्यं तस्य श्रीपुरुषोत्तमस्य विलासित्वमिति भावः ॥ २ ॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां गीतगोविन्दटीकायां रसमञ्जरीसमाख्यायामष्टमः सर्गः ॥ ८ ॥



---

पाठा०-१ 'रिपोर्व्यपोहयतु वोऽश्रेयांसि' A., D. २ 'किंलक्षण०' B.

## नवमः सर्गः ९

–मुग्धमुकुन्दः–

तामथ मन्मथखिन्नां रतिरसभिन्नां विषादसंपन्नाम् ।
अनुचिन्तितहरिचरितां कलहान्तरितामुवाच रहसि सखी ॥ १ ॥

गुर्जरीरागयतितालाभ्यां गीयते। प्रबन्धः १८ ॥

हरिरभिसरति वहति मधुपवने
किमपरमधिकसुखं सखि ! भवने ॥ १ ॥
माधवे मा कुरु मानिनि ! मानमये ॥ ध्रुवपदम् ॥

---

इदानीं प्रणयकोपाद्धरिमधिक्षिप्य कलहान्तरितत्वेनोपतप्यमानां राधां सख्याह—तामथेति । अथ सखी तामुवाच । किंभूताम् ? मन्मथखिन्नाम् । पुनः किंभूताम् ? संभोगरसेन भावशबलतां प्राप्ताम् । पुनः किंभूताम् ? विषादसंपन्नाम् । पुनः किंभूताम् ? अनुध्यातहरिचेष्टिताम् । पुनः किंभूताम् ? कलहान्तरिताम् । तल्लक्षणं यथा—'प्राणेश्वरं प्रणयकोपविशेषभीतं या चाटुकारमवधीर्य विशेषवाग्भिः । संतप्यते मदनवह्निशिखासमूहैर्बोष्पाकुलेह कलहान्तरिता हि सा स्यात्' ॥ इयं पथ्या आर्या । तामथेत्यादिषु अनुकूलो नायकः । प्रौढधीरा मानवती नायिका । सखी दूती च ॥ १ ॥ तदेव वक्ष्यमाणमाह—हरिरभीति । तत्र पूर्वं ध्रुवः । माधव इति । अये राधे मानवति ! अनु च समर्थनायिकायाधे । इति ध्रुवः । अथ पदानि—हरिरिति । हे सखि राधे ! भवने गृहे । 'अपरम्'इति सावधिको निर्देशः । अतः परमधिकं किं सुखम् ? न किंचिदपीत्यर्थः । अत इति किम् ? मन्मथोद्दीपनस्य पवने

---

पूर्वसर्गे खण्डिताया राधायाश्चरितमुक्तम् । संप्रति पश्चात्तापयुक्तां तां सख्युपायेनाह—अथेति । अथ अनन्तरं कलहान्तरितां परुषवचनानन्तरं कृतपश्चात्तापां राधां रहसि एकान्ते सखी उवाच उक्तवती । कीदृशीम् ? मन्मथेन कामेन खिन्नां दुःखिताम् । अत एव रतिरसेन शृङ्गाररसेन भिन्नां वेगताम् । अत एव विषादसंपन्नामुद्वेगसहिताम् । अत एवानुचिन्तितं स्मृतं हरेश्चरितं पुरा रहोविलसितं यया ताम् । 'भिन्नमन्यार्थयेचने संगते दारिते स्फुटे' इति विश्वः । कलहान्तरिता चैवम्—'प्राणेश्वरं प्रणयकोपभरेण भीतं या चाटुकारमवधीर्य विशेषवाग्भिः । संतप्यते मदनवह्निशिखासहस्रैर्बाष्पाकुला च कलहान्तरिता हि सा स्यात् ॥' इति ॥ १ ॥ तदेव गीतेन कथयति—हरिरिति । गीतस्यास्य गुर्जरीरागो यतितालश्च । गीतार्थस्तु—'अये' इति संभ्रमे । हे मानिनि मानवति ! माधवे लक्ष्मीपतौ मानं मा कुरु । लक्ष्मीपतिरपि त्वां प्रसादयतइहो भाग्यमित्याश्चर्यं त्वया मानस्त्याज्य इति सूचनाय 'माधव'पदो-

---

पाठा०–१ 'अथ तां' BM., P., O. २ 'रामकरी'' B. ३ 'रूपकताले' S. ४ 'भुवने' P.

तालफलादपि गुरुमतिसरसम् ।
किं विफलीकुरुषे कुचकलशम् ? ॥ माधवे० ॥ २ ॥
कति न कथितमिदमनुपदमचिरम् ।
मा परिहर हरिमतिशयरुचिरम् ॥ माधवे० ॥ ३ ॥
किमिति विषीदसि रोदिषि विकला ? ।
विहसति युवतिसभा तव सकला ॥ माधवे० ॥ ४ ॥
[1]सजलनलिनीदल[2]शीतलशयने ।
हरिमवलोकय सफलय नयने ॥ माधवे० ॥ ५ ॥

वहति वाति सति हरिरभिसरति स्वयमायाति ॥ १ ॥ अपि च,—तालफलादिति । हे राधे ! कुचकलशं किं विफलीकुरुषे ? हरिकरतलस्पर्शविलासाभावाद्विफलमित्यर्थः । तालफलादपि गुरुं कठिनं महान्तं च । पुनः कीदृशम् ? अतिशयेन सरसम् ॥ २ ॥ अपि च,—कति नेति । हे सखि ! अतिशयरुचिरं हरिं मा परिहर । इदं वचनमचिरं सांप्रतमनुपदं स्थाने स्थाने कतिवारं कथितम् ॥ ३ ॥ अपि च,—किमितीति । हे सखि ! इति अमुना प्रकारेण किं विषादं कुरुषेऽतिविकला सती किमिति रोदिषि ? सकला युवतिसभा तव इति चेष्टितं हसति ॥ ४ ॥ अपि च,—सजलेति । अत एव नयने सफलय

पादानम् । मधुपवने वसन्तवायौ वहति सति हरिः कुञ्जेऽभिसरति सखीसंकेतभूमिमागच्छति । हे सखि ! भुवने त्रैलोक्येऽपरं कृष्णाभिसरणादन्यत्किं सुखम् ? अपि तु न किंचिदित्यर्थः । 'मधु क्षीरे जले क्लीबे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे ॥' इति विश्वः ॥ १ ॥ किंच,—तालेति । कुचकलशं कलशवत्पीनं मांसलं स्तनं किमिति विफलीकुरुषे ? कृष्णकरस्पर्शादेव कुचकलशयोः साफल्यं, तदभावे वैफल्यमिति भावः । तालफलापेक्षयापि गुरुं कठिनमतिसरसं च । रसः शृङ्गाराख्यरसस्तत्सहितम् । तालफलपक्षे—रसो माधुर्यं तत्सहितम् । अतिमर्दनेन वै रसप्रदत्वं भवति । अपरः कलशोऽपि पूर्णः सन्गुरुर्भवति । रसो जलं तत्सहितश्च भवतीत्यपि ध्वनितम् ॥ २ ॥ ननु यदा हरिरायातस्तदा तमपि नोपेक्षिष्ये अत आह—कति नेति । इदमचिरं सांप्रतमेवानुपदं स्थानं स्थानं प्रति मया कियन्न कथितम् ? अपि तु बहु कथितम् । इदं किम् । हरिमतिशयरुचिरमतिशयेन मनोहरं मा परिहर मोपेक्षस्व ॥ ३ ॥ किमिति । त्वं किमिति किमर्थं विषीदसि विषण्णा भवसि ? ननु नास्मि विषण्णेत्यत आह—रोदिषीति । विकला विह्वला सती रोदिषि रोदनं करोषि । अत एव सकला समस्ता युवतिसभा हसतीति भावः । यद्वा,—इयं मानापनोदाय प्रणतमपि प्रियमुपेक्ष्य सम्प्रति रोदितीति मानपरिपाटीं न जानाति । सकला चतुःषष्टिकलासहिता युवतिसभा हसतीति भावः ॥ ४ ॥ तर्हि किमित्यत आह—सजलेति । हे सजलनलिनदलशीतलशयने ! जल-

पाठा०—1 'मृदुनलिनी' P. २ "शीलितशयने'(=शीलितं आश्रितं शयनं यथा तत्संबुद्धिः) S., D., C.

टिप्प०—1 तालफलभक्षणं मादकं भवति, इदं त्ववलोकनमात्रेणेति भावः—संजीविनी।

जनयसि मनसि किमिति गुरुखेदम् ? ।
शृणु मम वचनमनीहितभेदम् ॥ माधवे० ॥ ६ ॥

हरिरुपयातु वदतु बहुमधुरम् ।
किमिति करोषि हृदयमतिविधुरम् ? ॥ माधवे० ॥ ७ ॥

श्रीजयदेवभणितमतिललितम् ।
सुखयतु रसिकजनं हरिचरितम् ॥ माधवे० ॥ ८ ॥

---

॥ ५ ॥ अपि च,–जनयसीति । हे राधे ! इत्येवं पूर्वोक्तप्रकारेण मनसि चित्ते महान्तं खेदं किं जनयसि ? तर्हि किं विधेयमित्याशङ्क्याह—मम वचनं शृणु । किंभूतम् ? अनीहितभेदम् । न ईहितोऽभिलषितो भेदः पार्थक्यं येन तत्तथा ॥ ६ ॥ अपि च,–हरिरुपयात्विति । हे राधे ! हरिरुपयातु त्वत्समीपमायातु । बहु विस्तारं मधुरं चाटु वदतु । अनया रीत्या हृदयमतिविधुरं किं करोषि ? ॥ ७ ॥ अपि च,–श्रीजयदेवभणितमिति । हरिचरितं रसिकजनं सुखयतु । किंभूतम् ? श्रीजयदेवभणितम् । पुनः किंभूतम् ? अतिललितम् । श्रुतिजातिप्रकृत्यसाम्यान्मनोहरम् । तथा च संगीतराजे—'बहुरागस्तृतीयाख्यस्तालो मध्ये क्वचित् क्वचित् । पदानां कोमलालापगुम्फानां गानहेतुकम् ॥ अन्ते पाटाः स्वरालेनाक्लृप्ते पदगुम्फनम् । पदामन्दमुकुन्दाख्यमकरन्दाभिधानवत् । प्रबन्धः श्रीलये गीतः श्रीपतेः कुम्भभूभुजा ॥' इति श्रीअमन्दमुकुन्दो नामाष्टादशः प्रबन्धः ॥ यदि कौतुकिनो गाने संगीते चातुरी यदि । रसिकाः कुम्भकर्णस्य शृण्वन्तु सुधासमाः ॥ ८ ॥ सखी

---

सहितानि यानि नलिनीदलानि कमलिनीपत्राणि तेषां शीतले शयने शय्यायामास्वादये ! त्वं पुरःस्थितं हरिं कृष्णमवलोकय पश्य । अत एव नयने नेत्रे सफलय कृतार्थय । यद्वा,–सजलेति सप्तमी । तथा च त्वया रचिते सरसजलनलिनीदलशीतलशयने तत्रोपविष्टं हरिमवलोकयेत्यर्थः । तथा च सत्कारपूर्वकं शयने उपवेश्य हरिं पश्येति भावः ॥ ५ ॥ जनयसीति । तस्मान्मनसि चित्ते गुरुखेदं महद्दुःखं किमिति जनयसि ? मम वचनं 'माधवे मानं मा कुरु' इति मम वाक्यं शृणु । कीदृशम् ? अनीहितोऽनाकाङ्क्षितो युवयोर्भेद उपजायते एतादृशम् । तथा च मम वचनं युवयोः प्रीतिकारकं तदवश्यं त्वया श्रोतव्यमिति भावः । मया यद् नाकाङ्क्षितं भेदं यथा स्यादेवं मम वचनं शृणु । इयं सखी मत्तोऽभिन्ना, मदनिष्टं न भवतीति बुद्ध्या मद्वचनं शृण्विति भावः ॥ ६ ॥ हरिरिति । हरिः कृष्ण उपयातु त्वदन्तिकं गच्छतु । बहुमधुरमतिसरसं यथा स्यादेवं वदतु । हृदयं स्वकीयं हृदयमतिविधुरमतिदुःखितं किमिति करोषि ? ॥७॥ श्रीजयदेवेति । श्रीजयदेवेन भणितं वर्णितं ललितं मनोहरं हरिचरितं रसिकजनं कृष्णभक्तिरसास्वादगृहीतं शृङ्गारादिरसास्वादपरं जनं सुखयतु आनन्दयतु ॥ ८ ॥

---

टिप्प०–1 तल्लक्षणम्–'शृङ्गारमधुरा चेष्टा । यत्र तल्ललितं विदुः ।' इति संजीवनी ।

स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि
द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन्प्रिये ।
तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चा विषं
शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ २ ॥
सान्द्रानन्दपुरंदरादिदिविषद्वृन्दैरमन्दादरा-
दानम्रैर्मुकुटेन्द्रनीलमणिभिः संदर्शितेन्दिन्दिरम् ।
स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं
श्रीगोविन्दपदारविन्दमशुभस्कन्दाय वन्दामहे ॥ ३ ॥

इति श्रीजयदेवकृतौ श्रीगीतगोविन्दे कलहान्तरितावर्णने
मुग्धमुकुन्दो नाम नवमः सर्गः ॥ ९ ॥

---

तदुक्तेहितमनुवदन्ती तां राधां प्रति बोधयति—स्निग्ध इति । हे विपरीतकारिणि विपरीतकृतप्रतिकरणशीले ! यत्तव श्रीखण्डचर्चा चन्दनानुलेपो विषमिव भवति । यच्च शीतांशुश्चन्द्रः तपन इव भवति, यच्च हिमं नीहारो हुतवह इव भवति, यच्च क्रीडामुदः केलिप्रमोदास्तीव्रवेदना इव भवन्ति, एतद्युक्तम् । विपरीतं य आचरति तस्य सर्वं विपरीतमेव भवति । तदेव विपरीतमाचरणं दर्शयति—यत्त्वमिति तादृशप्रियकारिण्यपि हरौ स्निग्धे सस्नेहे परुषा रूक्षासि । सस्नेहे स्नेहराहित्यं वैपरीत्यम् । यच्च प्रणमति नतिशीले प्रिये स्तब्धासि । प्रणमत्यप्रणत्वं वैपरीत्यम् । यच्च रागवति प्रद्वेषिण्यसि । अत्रापि तादृगेव वैपरीत्यम् । यच्च संमुखे प्रिये वैमुख्यं यातासि । संमुखे विमुखभावो वैपरीत्यम् । अत्र शार्दूलविक्रीडितं वृत्तम् । विरोधालंकारः ॥ २ ॥ इदानीं सर्गान्ते सर्वविघ्नोपशमनार्थं गोविन्दं प्रणमति—सान्द्रेति । श्रीगोविन्दपदारविन्दं वन्दामहे नमस्कुर्महे । किमर्थम् ? अशुभस्कन्दाय अशुभनाशाय ।

---

स्निग्ध इति । यस्मात् हेतोः स्निग्धे यस्मिन्प्रिये मधुरवचनैः स्नेहं प्रकाशयति सति परुषासि निष्ठुरभाषिण्यसि । यच्च प्रणमति तस्मिन्स्तब्धासि । यच्च रागिण्यनुरागवति तस्मिंस्त्वं द्वेषस्थासि द्वेषमवलम्ब्य स्थितासि । यच्चोन्मुखे आलिङ्गनाय संमुखे तस्मिंस्त्वं विमुखतां यातासि पराङ्मुखतां गतासि । तद्धेतोर्हे विपरीतकारिणि ! एतत्सर्वं विपरीतमेव । एतत्किम् ? तव श्रीखण्डचर्चा चन्दनलेपो विषम् । यथा विषं भोक्तारं मूर्च्छयति तथा चन्दनलेपोऽन्येषां सुखदोऽपि त्वां मूर्च्छयतीति भावः । अथ च,—शीतांशुस्तपनः सूर्यः । अन्येषां

---

पाठा०—१ 'यस्मिन्' RM., P. २ 'युक्तं तद्विपरीत०' P., S. ३ 'अन्तर्मोहन···।···वंशीरवः ॥ ३ ॥' P., C. ४ '०न्दीवरम्' D. ५ '०मिलन्' B. ६ 'मन्दमुकुन्दो' D., RM., S.

किंविशिष्टम्? स्वच्छन्दं यथा स्यात्तथा मकरन्दसुन्दरा मकरन्दसदृशी गलन्ती या मन्दाकिनी गङ्गा तया सान्द्रं स्निग्धम्। अरविन्दे हि मकरन्दो भवति। तेन मन्दाकिनी उपमीयते इत्युपमालंकारः। पुनः किंभूतम्? सान्द्रानन्दा निबिडहर्षा ये पुरन्दरादिदिविषदस्तेषां वृन्दैः मुकुटेन्द्रनीलमणिभिः संदर्शिता इन्दिन्दिरा मधुपा यत्र तत्तथा। अत्र चरणयोः कमलोपमा, मन्दाकिन्या मकरन्दोपमा, सुरवृन्दमौलीन्द्रनीलमणीनां भृङ्गोपमा। एवं चरणसरोजे मकरन्दयुते नतासुरमौलिनीलमणिव्याजेन भृङ्गा इव। किंविशिष्टैर्दिविषद्वृन्दैः? अमन्दादरात्प्रचुरादरवशतः आनतैः साष्टाङ्गप्रणिपातप्रवणैः। शार्दूलविक्रीडितम् ॥ ३ ॥

एवं कृत्वा हरीशं द्विजपमथ नवं सर्गमासाद्य तिग्मः
सम्यग्योगं चतुर्णां मिथुनकरचिता पञ्च शिवा विशिष्टा।
षट्कं हित्वाथ सप्ताष्टकुलगिरिदृशो श्रीलगोविन्दसर्गे
सूक्त्या कृत्वा निसर्गोज्ज्वलमिव नवमे कुम्भकर्णो जयी स्यात् ॥

इति श्रीकुम्भकर्णविरचितायां गीतगोविन्दटीकायां रसिकप्रियायां कलहान्तरितावर्णने मुग्धमुकुन्दो नाम नवमः सर्गः ॥

---

शीतलस्वभावोऽपि चन्द्रस्तपति तापयति इति भावः। हिमं तुषारोऽपि हुतवहोऽग्निः। अथ च,–क्रीडामुदः सखीक्रीडाजन्या मुदः प्रमोदा यातनाः तीव्रवेदनाः। यत्किञ्चिद्विपरीतमाचरति तस्य सर्वं विपरीतमेव भवतीति भावः। 'दहनं कर्बुरे वह्नौ स्याच्चित्रकवह्नयोरपि।' इति विश्वः। 'यातना तीव्रवेदना' इत्यमरः ॥ २ ॥ सर्गावसाने हृदयसाक्षीं कविर्मङ्गलमाचष्टे—सान्द्रेति। वयं श्रीगोविन्दस्य पदारविन्दं चरणसरोजं वन्दामहे नमस्कुर्महे। किमर्थम्? अशुभस्कन्दाय अशुभानां भक्तिप्रतिबन्धकानां दुरितानां स्कन्दाय नाशाय। तादर्थ्ये चतुर्थी। अत्र 'वयम्' इति बहुवचनं शिष्याद्यभिप्रायेण। पापनाशनसामर्थ्यं द्योतयति—स्वच्छन्दमिलनेन। किंविशिष्टम्? स्वच्छन्दं यथा स्यात्तथा मकरन्दवत् सुन्दरं यथा स्यात्तथा गलन्त्याः स्रवन्त्या मन्दाकिन्या आकाशगङ्गाया मेदुरं स्निग्धम्। तथा हि—यस्याभिःसृता सुरसरित् विश्वं पावयति, किं वक्तव्यं तस्य सामर्थ्यमिति भावः। अरविन्दे हि मकरन्दो भवति, तेन मन्दाकिन्युपमीयत इत्युपमालङ्कारः। पुनः कीदृशम्? सान्द्रोऽतिनिबिड आनन्दो हर्षो येषां ते पुरन्दरादय इन्द्रादयो दिविषदो देवास्तेषां वृन्दैः समूहैरमन्दादरादादरातिशयात् आसमन्तात्प्रसैरैर्नतिभुग्नैर्मुकुटेन्द्रनीलमणिभिः संदर्शिता इन्दिन्दिरा भृङ्गा यत्र तादृशम्। अनेन तद्वन्द्यत्वमुक्तम्। अत्र चरणस्य कमलोपमा, मन्दाकिन्या मकरन्दोपमा, सुरवृन्दमौलिगतनीलमणीनां भृङ्गोपमा, एवमेव कमलरूपकता चरणस्योक्ता। तथा चात्र 'मन्दाकिनी'पदेन व्यापकतयाऽविरतप्रवाहरूपस्य भगवतो यशो वर्णितम् ॥३॥

वात्स्यायनादिमतसंमतमत्र किंचिदस्तीव नात्मनय शङ्करनयक्रमेयम्।
यद्यप्यलंकृतिरहस्यमवेक्षि तत्त्वात्रावमूल्यमिति सन्मतिभिर्विभाव्यम् ॥

इति श्रीशंकरमिश्रविरचितायां गीतगोविन्दटीकायां रसमञ्जर्यां
नवमः सर्गः ॥

## दशमः सर्गः १०

–चतुरचतुर्भुजः–

अत्रान्तरे मसृणरोषवशामपार-
निःश्वासनिःसहमुखीं सुमुखीमुपेत्य ।
सव्रीडमीक्षितसखीवदनां दिनान्ते
सानन्दगद्गदपदं हरिरित्युवाच ॥ १ ॥

देशवराडीरागाष्टतालीतालाभ्यां गीयते । प्रबन्धः १९

वदसि यदि किंचिदपि दन्तरुचिकौमुदी
हरति दरतिमिरमतिघोरम् ।
स्फुरदधरसीधवे तव वदनचन्द्रमा
रोचयतु लोचनचकोरम् ॥ १ ॥
प्रिये ! चारुशीले ! मुञ्च मयि मानमनिदानम् ।

---

इदानीं सायं कृतसखीकृत्यां स्मरशरजर्जरितकोपां स्वयमनुनयति—अत्रान्तर इति । अत्रान्तरेऽस्मिन्नवसरे दिनान्ते हरिः सव्रीडं यथा स्यात्तथा सुमुखीं राधामुपेत्य सानन्दगद्गदपदं सहर्षविस्खलिताक्षरं यथा स्यात्तथा इति वक्ष्यमाणमुवाच । पुनः कथं ? यथा स्यात्तथा । किंभूताम् ? मसृणरोषवशां स्निग्धरोषपराम् । कोमलसखीवचनैः किंचिच्छमितरोषाम् । पुनः किंभूताम् ? अपारनिःश्वासनिःसहमुखीं विरहसहनासमर्थाननाम् । वसन्ततिलका वृत्तम् ॥ १ ॥ तदेव वक्ष्यमाणमाह—वदसीति । तत्रानुरोधेन क्रमपरिपाटीं परित्यज्य पूर्वं ध्रुवपदं व्याक्रियते—प्रिये इति । हे प्रिये ! शोभनशीले ! मयि विषये यो मानः तं मुञ्च परित्यज । किंभूतम् ? अनिदानम् स्वपक्षी-

---

अत्रान्तर इति । अत्रान्तरेऽस्मिन्नवसरे हरिः राधां समुपेत्य समीपं गत्वा प्रदोषे रात्रिमुखे इति वक्ष्यमाणमुवाच । कीदृशम् ? असृणः कर्कशो यो रोषस्तस्माद्योऽसीमोऽधिको निःश्वासस्तेन निःसहं विरहदुःखसहनाक्षमं मुखं यस्यास्ताम् । पुनः कीदृशीम् ? सव्रीडं सलज्जं यथा स्यादेवमीक्षितं सख्या वदनं यया ताम् । कथं यथा स्यात् ? सानन्दगद्गदपदम् । आनन्देन गद्गदपदं गलदक्षरवाक्यसहितं यथा स्यात् ॥ १ ॥ तदेव गीतेन कथयति—वदसीति । गीतस्यास्य देश-

---

पाठ०—१ 'अत्रान्तरेऽमसृण' RM., S. २ '°वशादसीम°' RM., P. S., D., C. '°वशामसीम°'. ३ 'समुपेत्य राधाम्' RM. ४ 'प्रदोषे' S., C. ५ 'देशीय°' C. ६ रोचयति' P., S., D., C.

---

टिप्प०—1 रागलक्षणम्–'आरब्धगमनमुदा घूर्णायमानानयनयुग्माढ्या । सुखशायिनी निजदयिते देशवराडी भवेद्गौरी ॥' इति । लघुद्रुतौ लघुश्चेति अष्टताली प्रकीर्तिता ॥' इति तालक्षणम्–दीपिका ।

सपदि मदनानलो दहति मम मानसं
देहि मुखकमलमधुपानम् ॥ ध्रुवपदम् ॥
सत्यमेवासि यदि सुदति ! मयि कोपिनी
देहि खरनखरशरघातम् ।
घटय भुजबन्धनं जनय रदखण्डनं
येन वा भवति सुखजातम् । प्रिये !० ॥ २ ॥

---

संभोगलक्षणकारणरहितम् । सपदि शीघ्रमेव भवतीति मानमपेक्ष्य मदनानलो मम मानसं दहति । तच्चापोपशान्त्यै मुखकमलमधुपानं देहीति ध्रुवः । अथ पदानि । वदसीति । हे प्रिये ! किंचिदपि प्रियाप्रियनिरपेक्षं स्वदनमपि वदसि । तदा तव दन्तरुचिकौमुदी मम दरतिमिरं भयान्धकारं हरति । किंभूतं भयान्धकारम् ? अतीव घोरम्, अतीव भयानकहेतुत्वादुग्रायानकम् । अत्र मयि स्थायी भयमेवोद्रिक्तः सन् भयानकतामेष्यतीति । 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वाद्यत्वं स्थायीभावो रसः स्मृतः' इति । स च श्रृङ्गारविरोधी त्वया परिहरणीय एव । तव वदनचन्द्रमा मम लोचनचकोरं स्फुरन्नोऽधरे शीधुमपि रोचयतु तामिलाषं करोतु । अधरशीधुचन्द्रिकायां चन्द्रमसः सान्निध्यान्नेत्रचकोरस्य स्पृहा जायते ॥१॥ अपि च,– सत्यमिति । हे सुदति शोभनदन्ते ! सत्यमेव यदि मयि कोपिन्यसि तर्हि

---

वराङ्गीरागसाललयाङ्गलाः । गीतार्थस्तु—हे प्रिये राधे ! चारु मनोहरं शीले वस्याश्चारुशीले, त्वं मयि मद्विषयेऽनिदानमकारणकं मानं मुञ्च त्यज । सपदि तत्क्षणकाल एव मदनानलः कामाग्निर्मेन मानसं दहति तापयति । अतो मुखकमलममलं तदर्थेऽबन्धि यन्मधु तत्पानं देहि । चाटुशीलत्वमेवाह—वदसीति । त्वं यदि किंचिदपि उदासीनवचनमपि वदसि तदा दन्तरुचिकौमुदी तव दन्तानां या रुचिः सैव कौमुदी चन्द्रज्योत्स्ना सातिघोरमतिभीमं दरतिमिरं दरः साध्वसं स एव तिमिरमन्धकारः तद्धरति दूरीकरोति । अत्र साध्वसे सति पुरः स्थितमपि वस्तु न प्रकाशत इति साध्वसस्यान्धकारत्वेन निरूपणम् । दन्तरुचेश्च तन्नाशकत्वात्कौमुदीत्वेन निरूपणम् । अथ च,–स्फुरन्कोपवशात्किंचिच्चलन्योऽधरः । तल्लक्षणं चोक्तम् । 'चन्द्रिकायां कौमुदी' इति विश्वः । 'दरः साध्वसगर्तयोः' इति च । 'घोरं भीमे हरे घोरः' इत्यपि । 'शीधु निष्ठ्यूतेऽमृते (?) ।' 'शीधु'शब्दः पुंस्यपि । पुन्नपुंसकशेषेऽमरसिंहः—'कुर्दं गुल्फं शीधु गुल्मम्' इति । अत्राधरशीधवे इत्यत्र तादर्थ्यविवक्षायां चतुर्थी । न च लोचनचकोरमित्यत्र 'रुच्यर्थानां प्रीयमाणः' इति ( पा. १।४।३३ ) चतुर्थी । कुतो नेति चेत्,–अन्यकर्तृकोऽभिलाषो रुचिः; इह तु वदनचन्द्रमसोर्न प्रीतिजनकत्वं विवक्षितम् ॥ १ ॥ सत्यमेवेति । हे सुदति शोभनदशने ! त्वं सत्यमेव यथार्थमेव यदि कोपवत्यसि तदा खराणीक्ष्णा

त्वमसि मम भूषणं त्वमसि मम जीवनं
त्वमसि मम भवजलधिरत्नम् ।
भवतु भवतीह मयि सततमनुरोधिनी
तत्र मम हृदयमतियत्नम् । प्रिये !० ॥ ३ ॥
नीलनलिनाभमपि तन्वि ! तव लोचनं
धारयति कोकनदरूपम् ।

सापराधे मयि खरनखरशरघातं देहि । भुजाभ्यां बन्धनं घटय । रदैः खण्डनं जनय । अथवा,—किमुद्दिश्यते येन वा अपराधयोग्येन दण्डेन तव सुखजातं भवति स एव विधीयताम् । प्रभूणां हि सापराधेषु भृत्येषु ताडनबन्धनखण्डनादयो दण्डाः समुचिताः । अनेनव्याजेन नखक्षताऽऽलिङ्गनचुम्बनादीन्प्रार्थयते ॥ २ ॥ अपि च,—त्वमसीति । तव अन्या एव सन्ति, ता एव प्रार्थ्यन्तामित्याशङ्क्याह—मम त्वमेव भूषणमसि । त्वयाऽलंकृतोऽहमन्यासु शोभाऽऽत्यवान् । अथ तिष्ठतु बाह्यभूषणम् । मम जीवनमपि त्वमेवासि । अथ जीवनमपि तिष्ठतु । जीवनेऽपि भवजलधौ रत्नं त्वमेव । 'भवजलधि'ग्रहणमन्यस्य परिग्रहस्य जडत्वद्योतनार्थम् । भवतीह विषये मयि सततमनुरोधिनी कृपापरा भवतु । अत्रैवार्थे मम हृदयमतीव यत्नपरं विद्यते ॥ ३ ॥ अपि च,—नीलेति । हे तन्वि ! नीलनलिनाभमपि कृष्णरूपमपि तव लोचनं कोकनदरूपं रक्तिमानं धारयति । अतो यदि कुसुमशरबाणवेदना कुसुमशरबाणाधीना भूत्वा यदि मामपि कृष्णं रञ्जयसि तदा इदं रञ्जनमेतल्लोचनरञ्जनानुरूपं स्यात् । इदमाकूतम्—यथा मयि कोपेन त्वया कृष्णं लोचनं

मे नखास्त्र एव बाणालीघातैः प्रहारं देहि । तेनापि यदि न तुष्यसि, तदा भुजाभ्यां बाहुभ्यां बन्धनं घटय; तेनाप्यसंतोषे रदखण्डनं रदैर्दशनैः खण्डनमधरे क्षतं जनय; येन वा सुखजातं सुखसमूहो भवति तदेव कुरु । तथा च मय्यपराधाकुले दण्डं विधाय कोपं मुञ्चेति भावः । सुदति शोभना दन्ता अस्या इत्यस्य संबुद्धिः । दन्तस्य दत्रादेशः । 'अग्रान्त शुद्ध...' इति सिद्धः ॥ २ ॥ ननु या तव प्रिया तस्या मानं मोचय । मे मानत्यागे तव किं प्रयोजनमित्यत आह—त्वमसीति । त्वं मम जीवनमसि । त्वयि विषण्णायां मम विषादो भवति, प्रसन्नायां प्रसाद इति त्वमेव जीवनमिति भावः । त्वं मम भूषणमलंकरणमसि । त्वां विना न परमा कान्तिरिति त्वमेव मम लोकोत्तरं भूषणमिति भावः । भवजलधौ संसाररूपे रत्नाकरे त्वमेव मम रत्नमसि । यथा दरिद्रस्य रत्ने दृष्टे परमानन्दो भवति, एवं मम त्वय्यपि दृष्टायामिति भावः । भवत्विति । इह प्रणते मयि भवती सततं सदाऽनुरोधिनी भवतु । तत्रार्थे मम हृदयमतियत्नवत् ॥३॥ नीलेति । हे तन्वि कृशाङ्गि ! नीलनलिनस्य नीलोत्पल-

पाठा०—१ 'त्वमसि मम जीवनं त्वमसि मम भूषणं' S., D., C.

कुसुमशरबाणभावेन यदि रञ्जयसि
कृष्णमिदमेतदनुरूपम् ॥ प्रिये !० ॥ ४ ॥
स्फुरतु कुचकुम्भयोरुपरि मणिमञ्जरी
रञ्जयतु तव हृदयदेशम् ।
रसतु रसनापि तव घनजघनमण्डले
घोषयतु मन्मथनिदेशम् । प्रिये !० ॥ ५ ॥

---

रक्तं कुरु तथा मयि प्रसादपरा भूत्वा कुसुमशरभावेन कामबाणानां कटाक्षादीनां चेष्टया मयि रक्तं कुरु, कोपं त्यक्त्वा प्रसादपरा भवेत्यर्थः । अथवा,—कुसुमशरभावेन यदि नीलनलिनाभमपि लोचनं कोकनदरूपं धारयसि तर्हि एतदिदं तवानुरूपम् ॥ ४ ॥ अपि च,—स्फुरदित्यादि । हे तन्वि ! तव कुचकुम्भयोरुपरि मणिमञ्जरी मणिः मञ्जरीव स्फुरतु । स्फुरन्ती च किं करोतीत्याह—तव हृदयदेशं रञ्जयतु । अपि च,—रसनापि तव निबिडजघनमण्डले रसतु शब्दं करोतु । सा तथाविधा किं करोतीत्याह—मन्मथनिदेशं 'सर्वा एव मानिन्यो मानं मुक्त्वा कामवशगा भवन्तु' इति कामाज्ञां घोषयन्तु ॥ ५ ॥

---

लोचनाभा नीलनिर्मलैतादृशं तव लोचनं रोषारुणं यत्कोकनदरूपं रक्तोत्पलसौन्दर्यं धारयति । यदि च कुसुमशरः कामस्तस्य बाणभावेन बाणत्वेन तद्बाणाभिप्रायेण वा इमं कृष्णं च रञ्जयसि रक्तं करोषि । एतस्य चक्षुषोऽनुरूपं सदृशम् । बाणा हि सततं परशरीरभेदिनो रुधिरारुणेनारक्ता भवन्तीति भावः । यद्वा,—कुसुमशरबाणभावेन कुसुमशरस्य बाणरूपो यो भावोऽभिप्रायस्तेन । यद्वा,—कुसुमशरबाणभावेन तद्बाणस्वरूपेण चक्षुषा भित्त्वा कृष्णं मां यदि रञ्जयसि । इदं रञ्जनमेतस्याप्यनेतस्य बाणस्य चानुरूपं सदृशम् । श्यामे लौहित्यापादनसमर्थोयालेखे मम रञ्जनमनुरूपमेवेति । यश्च बाणेन शल्यते स रुधिरादिना रक्तो भवत्येवेति भावः । कुसुमशरबाणभावेनानेन नयनेन कृष्णं मन्दारमन्त्रं मां रञ्जयसि प्रणयास्पदं करोषीति । इदमेतस्यास्यानुरूपमेवेति प्रकृतार्थो भवेत् । 'कोकनदं रक्तकैरवे रक्तपङ्कजे' इति विश्वः ॥ ४ ॥ स्फुरदित्यादि । मणिमञ्जरी मणिपरम्परा कुचकुम्भयोः स्तनकलशयोरुपरि स्फुरतु चञ्चला भवतु । तव हृदयदेशं वक्षःप्रदेशं रञ्जयतु स्वरश्मिभिः शोभयतु । लज्जयननलिनं रक्तं धत्से, त्वं च कृष्णं मां रञ्जयसि । अतो मणिमञ्जरी अर्पिता वक्षो यदि रञ्जयति तदानुरूपं भवतीति भावः । अत्र केलीरूपशुभकर्मारम्भे मञ्जरीयुक्तपूर्णकलशस्थापनमुचितमेवेति सूचनाय कुचयोः कलशत्वेन रूपणं, मणिपरम्परायाश्च मञ्जरीत्वेन रूपणम् । तव घनजघनमण्डले मांसलजघनभागे रसनापि क्षुद्रघण्टिकापि रसतु शब्दायमाना भवतु, मन्मथनिदेशं कामाज्ञां

---

पाठा०—१ 'कृष्णमिद°' D.

स्थलकमलगञ्जनं मम हृदयरञ्जनं
जनितरतिरङ्ग[1]परभागम् ।
भण मसृणवाणि ! करवाणि चरणद्वयं
सरस[2]लसदलक्तकरागम् । प्रिये !० ॥ ६ ॥
स्मरगरलखण्डनं मम शिरसि मण्डनं
[3]धेहि पदपल्लवमुदारम् ।
ज्वलति मयि दारुणो मदनकदना[4]रुणो
हरतु [5]तदुपाहितविकारम् । प्रिये !० ॥ ७ ॥

---

अपि च,–स्थलकमलेति । हे मसृणवाणि स्निग्धवाणि ! भण आदिश । तव चरणद्वयं सरसलसदलक्तकरागं करवाणि । सरसः सस्नेहो लसन्योऽसावलक्तकस्य रागो यत्र । अथवा,–सह रसेन शृङ्गारेण वर्तत इति सरसः, स चासौ लसन् शृङ्गारोत्पत्तिद्वारेण स्फुटतानजनकश्चासौ अलक्तकान्तिमांश्चेति हृद्योऽलक्तकरागो यत्र । एतावता अलक्तकरञ्जनसमकालमेव शृङ्गारोत्पत्तिर्भवत्येव सूचितम् । किंभूतं चरणद्वयम् ? स्थलकमलगञ्जनं पद्मरागस्पर्धि । पुनः किंभूतम् ? मम हृदयरञ्जनं मम चित्तानुकारि । पुनः किंभूतम् ? जनित उत्पादितो रतिरङ्गस्य रमणप्रमोदस्य परभागो यत्र, कामोद्रेककारीत्यर्थः ॥ ६ ॥
अपि च,–स्मरेति । हे राधे ! मम शिरसि उदारं चरणलक्षणैर्महत्त्वत्पदपल्लवं पदं पल्लव इव लौहित्यकोमलत्वशैत्यादिना मण्डनमिव धेहि आरोपय । किंभूतं पदपल्लवम् ? स्मरगरलखण्डनं कामविषतापशमनम् । मयि विषये दारुणो मदनस्य परकदनं तदेवारुण इव सूर्य इव ज्वलति दीप्यते । स चरणपल्लवः मम

---

शोषयतु वारं वारं क्षपयतु । कामाज्ञया 'भोः केलिं कुरुत' इति कामाज्ञया सर्वे विलासिनो रमन्तामिति वा मन्मथनिदेशं शोषयतीति भावः ॥ ५ ॥ स्थलेति । हे मसृणवाणि स्निग्धवचने ! भण आज्ञां देहि । तव चरणद्वयं सरसगलदलक्तकरागं सरसः सान्द्रो लसदलक्तकरागो महारञ्जनरागो यस्य तादृशं करवाणि कुर्याम् । कीदृशम् ? स्थलकमलगञ्जनं स्थलोत्पन्नं यत्कमलं स्वकान्त्या तस्य तिरस्कारकम् । पुनः कीदृशम् ? मम हृदयानुरागजनकम् । तथा चेदं मम हृदयं रञ्जयति । ममाप्यलक्तकेनैतद्रञ्जनमुचितमेवेति भावः । अत एव जनितो रतिरङ्गे सुरतकौशले परभागः परस्परशोभा येन तादृशम् । मयालक्तकेन चेदं रज्यते । तदेतत्कौशलवशादी मम हृदयकमलं सत्परमशोभां दास्यतीति भावः । 'स्फुरतु मणिमञ्जरी' इत्यनेन भणनेन च विपरीतरतमत्राभिमतम् । 'परस्परं तु या कान्तिः परभागः स कथ्यते' इति धरणिः । 'रङ्गः कौशलरागयोः' इति च ॥ ६ ॥ स्मरेति । हे

---

पाठा०–१ '°परिभागम्' P. २ 'सरसगलदल°' P., S. ३ 'देहि' P., C. ४ 'कदनानलो' RM., P., S., C. ५ 'तदुपहित°' RM., P., S., D.

इति चटुलचाटुपटुचारु मुरवैरिणो
राधिकामधि वचनजातम् ।
जयति जयदेवकविभारतीभूषितं
मानिनीजनजनितशातम् ॥ प्रिये !० ॥ ८ ॥

---

शिरसि निहितः सन् । तेन मदनकदनारुणजनिततापेन उपाहितविकारमारोपितविकृतिं संतापं हरतु । अत्रान्तरेऽप्यादौ प्रौढा मानवती नायिका । अनुकूलो नायकः ॥ ७ ॥ अपि च,-इतीति । इत्यमुना प्रकारेण चटुलचाटुपटुचारु मुरवैरिणो राधिकामधिकृत्य वचनजातम् । जयदेवकविभारतीभूषितम् । पुनः किंभूतम् ? मानिनीजनजनितशातम् मानिनीजनस्य जनितमुत्पादितं शातं सुखं येन ॥ 'ललितापि पदरचना न धातुयोगादृते विभाति शुभम् । इति कुम्भकर्णनृपतिर्गायति तां गीतगोविन्दे ॥' तथा च सङ्गीतराजे-'तालो पर्णपती रागाः क्रमाद्द्वादश स्मृताः । मध्यमादिश्च ललितो वसन्तो गुर्जरी तथा ॥ धनाश्री भैरवो गौण्डकृतिर्देशाख्यिकापि च । मालवश्रीश्च केदारमालवीयादिगौण्डकौ ॥ ख्यातगौण्डश्च श्रीरागो मल्लारश्च वराटिका । मेघरागश्च भद्राखद्योरणीमिषता इमे ॥ यावद्रागं पदानि स्युः प्रान्ते पाटस्वराणि तु । कचित्कचिद्गलालापभूषितानि यथारुचि ॥ मिथः प्रियोक्तिसंभारविप्रलम्भरसानि च । यत्र स्यारस प्रबन्धोऽयं रागराजिविराजितः ॥' इति चतुरचतुर्भुजरागराजि-

---

प्रिये ! उदारं सुन्दरं पदपल्लवं चरणकिसलयं मम शिरसि धेहि स्थापय । कीदृशम् ? मण्डनं मम मस्तकस्यालंकरणम् । पुनः कीदृशम् ? स्मरस्य बहुलं विषं तस्य खण्डनं नाशनम् । विरहिणं मूर्च्छादिप्रदानेन मलयानिले स्मरगरलजकणाश्मरस्य सर्पत्वमाक्षिप्यते । 'चरणपल्लवं विधेहि' इत्यनेन नायिकाया गारुडिकत्वं चेत्याक्षेपरूपकमिदम् । अपरमपि सर्पाद्विषं गारुडिकचरणपातेनाभिमन्त्रितपल्लवारोपणेन च शाम्यतीति ध्वनिः । किं च मयि दारुणो दुःसहो मदनकदनारुणो मदनः कामस्तज्जनितं यत्कदनं तापः स एवारुणः सूर्यो ज्वलति । अतस्तेनोपहितं जनितं विकारं धान्त्यादिरूपं हरतु दूरीकरोतु । अन्यः सूर्यसंतापः शिरसि पल्लवादिस्थापनेन शाम्यतीति ध्वनिः । 'अरुणोऽस्फुटरागे स्यात्सूर्ये सूर्यस्य सारथौ ।' इति विश्वः । 'कदनं कलुषे तापे' इति च ॥ ७ ॥ इत्यनेन प्रकारेण मुरवैरिणः कृष्णस्य राधिकामधि लक्षीकृत्य वचनजातं वाक्यसमूहो जयति सर्वोत्कर्षेण वर्तताम् । कीदृशम् ? चटुलं मनोहरं चाटु प्रीतियुक्तं पटु चतुरं चारु सुकुमारम् । पुनः कीदृशम् ? पद्मावती जयदेवपत्नी तस्या रमणो वल्लभो यो जयदेवः तेन कविभारत्या भारतीसंज्ञया कवितावृत्त्या भणितं वर्णितम् । जयदेवकवे-

---

पाठा०-१ 'जयति पद्मावतीरमणजयदेवकविभारतीभणितमतिशातम् ॥' RM.; C.

परिहर कृतातङ्के ! शङ्कां त्वया सततं घन-
स्तनजघनयाक्रान्ते स्वान्ते परानवकाशिनि ।
विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं
प्रणयिनि ! परीरम्भारम्भे विधेहि विधेयताम् ॥ २ ॥

---

चन्द्रोद्द्योतनामा एकोनविंशः प्रबन्धः ॥ ८ ॥ १९ ॥ इदानीमात्मानं गतदोषं ज्ञापयन्संभोगार्थं प्रोत्साहयन्नाह—परिहरेति । हे कृतातङ्के कृतान्यवनितासङ्गशङ्के ! मयि शङ्कां त्यज । अथवा,-मयि कृतातङ्के त्वद्वियोगदर्शनसंजातसंतापे शङ्कां त्यज । त्वां मयि संजातमनोविकल्पां दृष्ट्वा मयि संतापो जायत इत्यर्थः । अत्र ममेति षष्ठ्यन्तमर्थवशात्सप्तम्या विपरिणम्यते । कथं शङ्का परिहरणीयेति वाक्यार्थद्वारेण हेतुमाह । 'सतत'ग्रहणेन जीवितावधि त्वत्तोऽन्या काचन मम हृदयमाश्रित्य न वर्तत इति बोधयति । हे प्रणयिनि ! मम स्वान्ते घनस्तनजघनया त्वया सततमाक्रान्ते अत एवान्यानवकाशवति वितनोरनङ्गादन्यो धन्यस्तादृशसौभाग्ययोग्यः कोऽप्यन्यः स्त्रीलक्षणो जनोऽन्तरं पश्चाच्च विशति । साङ्गस्य प्रवेशाभाव इति तां शङ्कां मा कृथा इत्यर्थः । शङ्कां मुक्त्वा किं कुर्वित्याह—परीरम्भारम्भ आलिङ्गनारम्भे विधेयतां दासतां विधेहि । अथवैवं योजना-प्रणयिनीति काकाक्षिगोलकन्यायेनोभयत्र संबध्यते । त्वयि योगो न युक्त इति प्रणयिनि मयि स्नेहपरे परीरम्भारम्भे विधेयतां किंकरतां विधेहि । त्वयानुमतोऽहमालिङ्गनार्थं प्रयतेय तथा कुरु । हरिणी वृत्तम् । अत्र काव्यलिङ्गमलंकारः । प्रणयिनीति पदौचित्यं वर्णानुप्रासश्च । प्रौढा नायिका । प्रगल्भो नायकः । विप्रलम्भे सङ्गसिद्धिः ॥ २ ॥

---

मौरत्वा भणितमिति तु व्याख्यानं मन्दम्; तथा पौनरुक्त्यापत्तेः । जयदेवकविभणितमित्यस्यैव सम्यक्त्वात् । पुनः कीदृशम् ? अतिशान्तमतिशयितं सुखं यस्मात्तादृशम् । भारतीवृत्तिलक्षणं शृङ्गारतिलके—( ३।४४ ) 'प्रधानपुरुषप्राया सद्वक्रोक्तिनिरन्तरा । भारतीयं भवेद्वृत्तिर्वीरहास्याद्भुताश्रया ॥' इति । रसार्णवसुधाकरेऽपि-'शृङ्गारादिषु सर्वेषु रसेष्विष्टा हि भारती ।' इति । 'चटुलः सुन्दरे चले' इति वरर्चिः । 'चटु चाटु प्रियं वाक्यम्' इति हरिश्चन्द्रः । 'पटुस्तीक्ष्णे नीरोगे चतुरेऽन्यवत्' इति विश्वः । 'शर्मशातसुखानि च' इत्यमरः ॥ ८ ॥ परिहरेति । हे कृतातङ्के विहितसंतापे ! अन्यनायिकासङ्गसंशयं परिहर त्यज, यतो मम स्वान्ते चित्तेऽभ्यन्तरे वितनोस्तनुशून्यात्कामादन्यो धन्यो जनो न विशति न प्रविशति । कुतो न प्रविशतीत्यत आह—परेति । परानवकाशिनि इतरावकाशशून्ये । तत्र हेतुमाह-त्वयेति । घने निबिडे स्तनजघने यस्यास्तादृश्या त्वया सततमाक्रान्ते व्याप्ते । तथा च सदा त्वया पूरिते मदीये स्वान्तेऽन्यस्य प्रवेशु-

---

पाठा०-१ 'स्तनभरपरी'' C., B.

मुग्धे ! विधेहि मयि निर्दयदन्तदंश-
दोर्वल्लिबन्धनिबिडस्तनपीडनानि ।
चण्डि ! त्वमेव मुदमुद्वह पञ्चबाण-
चाण्डालकाण्डदलनादसवः प्रयान्ति ॥ ३ ॥
शशिमुखि ! तव भाति भङ्गुरभ्रूर्युवजनमोहकरालकालसर्पी ।
तदुदितभयभञ्जनाय यूनां त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ ४ ॥

---

इदानीं सापराधित्वमभ्युपगम्याप्याह—मुग्धे इति । हे मुग्धे आत्महितानभिज्ञे ! अहमनपराधीति चेत्तर्हि मय्यपराधयोग्यं दण्डं निर्दयदन्तदंशदोर्वल्लिबन्धनिबिडस्तनपीडनानि विधेहि । अथवा,-कोपैकशरणेति चेत्तर्हि संबोधनमुखेनानुरूपं विशेषणमाह—हे चण्डि कोपने ! पञ्चबाणश्चाण्डालः तस्य काण्डैः शरैर्दलनान्ममासवः प्रयान्ति । किं पुनस्तस्य पौरुषेण ? त्वमेव मुदमुद्वह मया जितोऽयमिति जयपटहं वादय इत्यन्वयः । अथवा,- हे चण्डि ! त्वं मुदमुद्वह एव; नान्योऽवकाशः, चण्डित्वं त्यज । त्वया चण्डित्वे ध्रियमाणे पञ्चबाणचाण्डालकाण्डदलनान्ममासवः प्रयान्ति । वसन्ततिलकावृत्तम् । रतिर्भावो व्यङ्ग्यः । तेन रसवदलंकारता । अनुकूलो नायकः । मुग्धा नायिका । प्रसादो गुणः । वैदर्भी रीतिः ॥ ३ ॥ इदानीं वात्स्यायनन्यायमाश्रित्य क्रमेणानुकूलयति—शशिमुखीति । हे शशिमुखि ! तव भङ्गुरभ्रूर्युवजनमोहकरालकालसर्पी विद्यते । मुखोऽयमर्थः; शशिनो हिंसार्थेश्रवणात् । या हिंस्रमुखी भवति

---

मेवावकाशो नास्ति । अनङ्ग एव परान्प्रविशति; तस्याङ्गाभावादित्यर्थः । तस्मात्परीरम्भारम्भे आलिङ्गनारम्भे विधेयतां वचनग्राहितां विधेहि कुरु, परिरम्भमाचरेति मद्वचनं कुर्वित्यर्थः । 'रुक्तापशङ्काखातङ्कः' इत्यमरः ॥२॥ मुग्धे इत्यादि । मुग्धे सुन्दरि ! निर्दयं दयारहितं दन्तदंशं दन्तक्षतम् । अथ च दोर्वल्लिबन्धं भुजलताबन्धं निबिडं गाढं स्तनाभ्यां पीडनं च विधेहि कुरु । ततो हे चण्डि कोपने ! त्वमेव मुदमानन्दमद्वय प्राप्नुहि । मम पुनः पञ्चबाणः कामः स एव निरपराधमानवजनहिंसकत्वेन चाण्डालः, तस्य काण्डदलनान्नाराचप्रहरणादसवः प्राणाः प्रयान्तु निर्गच्छन्तु । चाण्डालप्रहरणेन मरणे न समीचीना गतिः । अतस्त्वया साक्षादेव यथोचितदण्डाचरणं विधेयमिति भावः । 'चण्डी कात्यायनीदेव्यां हिंस्रकोपनयोषितोः' इति विश्वः ॥ ३ ॥ ननु कोपो मम नास्त्येवेति आह—शशिमुखीत्यादि । हे शशिमुखि चन्द्रानने ! तव भङ्गुरभ्रूः भाति । कीदृशः ? युवजनानां

---

पाठा०–१ 'मुदमद्वय पञ्च०' RM., C., D. २ 'चण्डाल०' B. ३ 'प्रयान्तु' D., S. ४ '०कालसर्पः' RM., C. ५ '०विषभञ्जनाय' B. 'यदुदितभयभञ्जनाय' RP.

व्यथयति वृथा मौनं तन्वि ! प्रपञ्चय पञ्चमं
तरुणि ! मधुरालापैस्तापं विनोदय दृष्टिभिः ।
सुमुखि ! विमुखीभावं तावद्विमुञ्च [१]न मुञ्च मां
स्वयमतिशयस्निग्धो मुग्धे ! [२]प्रियोऽयमुपस्थितः ॥ ५ ॥

तस्या मुखे भ्रूः कृष्णसर्पी भवतीव । यूनां तरुणानां यतः सर्पादुदितभय-भञ्जनाय त्वदधरसीधुसुधैव त्वदधरसीधुः, स एव सुधा । तव किला-मृतसुधा तत्सविधी कृष्णसर्पी भवत्या न युज्यते इति योजना । अथवा,-हे शशिमुखि ! तव मुखे भ्रूलावरसर्पीत्यनुमीयते । यतो यदुदितभय-भञ्जनाय यूनां त्वदधर एव सीधुः; पानसाधर्म्यात् स एव सुधामधुरत्वाद्वि-षनाशनाय सिद्धमन्त्रः । अत्र सुधाया आस्वाद्यत्वेन ओषधित्वे वक्तव्ये मन्त्र-स्योपादाने तरुणयुवसाधारण्येन शृङ्गाराभासव्यावृत्त्यर्थम्; अतिसौन्दर्यात् । अन्ये सरन्तु नाम उपभोगयोग्यत्वं हरेरेवेति । पुष्पिताग्रा वृत्तम् । अत्र कल्पितोपमारूपकालंकारौ । तमेव क्रमशब्दार्थं विशिनष्टि आसर्गपरिसमाप्तेः ॥ ४ ॥ व्यथयतीति । हे तन्वि कृशाङ्गि ! तवैतद्वृथा मौनं मां व्यथयति । त्वया तनुत्वाद्दुकुमशक्यत्वेन मौनं न क्रियते, किंतु निरपराधे सापराधोऽय-मिति 'वृथा'शब्दद्योत्यम्; अत एव व्यथयति । हे तरुणि ! मधुरालापैः पञ्चमं पञ्चमस्वरं प्रपञ्चय विस्तारय । पञ्चमोपादानेन वसन्तसमयसंजातरुचिराला-पकोकिलजेतृत्वं सूचितम् । वसन्ते हि कामिन्यः स्वैरं प्रियमनुसरन्तीति व्यज्यते । हे तरुणि ! मौनं वचनशक्तौ सत्यामवचनमर्थान्तरापाति तत्त्यजेति । अपि च,-दृष्टिभिरित्यत्र 'दृशिर् प्रेक्षणे' इत्यत्र 'प्र'शब्दो दर्शनप्रकर्षे स्निग्धत्वादि

तरुणजनानां मोहनाय करालो भीषणः कालसर्पः । भुजंगो दष्ट्वा मोहयति, इयं दृष्ट्वा मोहयतीत्येतस्य करालत्वम् । अतस्तदुदितविषभञ्जनाय तत्सकाशादुदितमुद्गतं यद्विषं तस्य भञ्जनाय नाशाय यूनां तरुणजनानां त्वदधरसीधुसुधैव त्वदीयाधर एव सीधुर्मदिराविशेषः स एवामृतं तदेव सिद्धः साधितो मन्त्रः । अन्यो जपादिना विषं नाशयति अयं त्वास्वादित एवेति एतस्यान्यमन्त्रापेक्षया सिद्धत्वम् । तथा चायमपि तव भ्रूकालसर्पविषमूर्च्छितस्तस्याप्यौषधत्वेन तवाधरः सुधायाः समान इति भावः । 'करालो भीषणेऽन्यवत्' इति विश्वः ॥ ४ ॥ व्यथयती-त्यादि । हे तन्वि ! तव वृथा मौनमकारणावबन्धनं मां व्यथयति पीडयति । किंच, हे तरुणि ! मधुरालापैः पञ्चमं स्वरविशेषं प्रपञ्चय विस्तारय । किंच, दृष्टिभिरवलोकनैस्तापं संतापं विनोदय विशेषतोऽपसारय । हे सुमुखि ! विमुखीभावं त्यज मयि विमुखतां तावद्विमुञ्च । सुमुख्याख्ये वैमुख्यमनुचितमिति भावः । मानं मुञ्च त्यज । हे मुग्धे ! अयं प्रियोऽनाकाङ्क्षित एवोपस्थित

पाठा०-१ 'न वञ्चय' C., B., 'न वञ्च न' RP. 'विमुञ्चय वञ्च मा' P. २ 'प्रियोऽद्यमुपस्थितः' P., C.

बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छवि-
र्गण्डश्चण्डि ! चकास्ति नीलनलिनश्रीमोचनं लोचनम् ।
नासाभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति ! प्रिये !
प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥ ६ ॥

---

वदति । तेन स्निग्धलोचनैस्तावं विनोदयेति विशिष्टोऽर्थो लभ्यते । हे सुमुखि ! तावद्विमुखीभावं विमुञ्च । सुमुख्या विमुखीभावो न युक्तः । हे मुग्धे ! अयमहमतिशयस्निग्धः स्नेहवान्प्रीतिमांश्च उपस्थित इति मां न वञ्च इति न, अपि तु वञ्च जानीहि । 'अयम्' इति औदासीन्यव्यावृत्त्यर्थो निर्देशः । अत्र मुग्धत्वं न घटते । चातुर्यमुपेत्य मां त्वदेकतानं जानीहीत्यर्थः । अत्र हरिणीवृत्तम् । यथासंख्यमलंकारः । अनुकूलो नायकः । प्रसादो गुणः । कैशिकी वृत्तिः । वैदर्भी रीतिः । मागधी गीतिः ॥ ५ ॥ बन्धूकेति । 'हे चण्डि' इति सांप्रतं कोपहानावपि भूतपूर्वकोपाश्रयणेन संबुद्धिः । 'प्राय' इति वितर्के । अहमिति जाने । स पुष्पायुधस्त्वन्मुखसेवया विश्वं विजयते । 'सः' इत्यनेन स बाणोऽपीश्वरदग्धः स्मर्यते । स तथाविधः सांप्रतं पुष्पैरपि आश्रयविशेषेण साधकैः सुरासुरैर्दुर्जयमपि विश्वं विजयते । तानेव त्वन्मुखसेविपौष्पान्पञ्चबाणानुद्दिशति । हे चण्डि ! अयं तवाधरो बन्धूकद्युतिबान्धवः बन्धुजीवकान्तिसदृशः । अनेन रक्ताकर्षणबाण उक्तः । अपि च,–तव गण्डः स्निग्धो मधूकच्छविश्चकास्ति । विरहिणीनां हि गण्डे पीतिमा भवति । अनेन पीतो वशीकारबाण उक्तो भवति । अपि च,–तव लोचनं नीलनलिनकान्तिपराकरणशीलं चकास्ति । अनेन कृष्णवर्ण उन्मादनबाणोऽभाणि । अपि च,–तवेयं नासा तिलप्रसूनपदवीमभ्येति अतिक्रामति । अनेन द्रावणबाण उक्तः । अपि च,–हे प्रिये ! कुन्दाभदन्ति कुन्दवदुज्ज्वलदशने ! । अनेन शोषणबाण उक्तः । एवमेतैः

---

आगतः । कीदृशः ? अतिशयस्निग्धोऽतिशयेन स्नेहवान् । तथा च स्वयमागतः प्रियः ( इति ) हेतुर्नोचित इति भावः ॥ ५ ॥ संप्रति त्वयि मानवत्यां त्वन्मुखेनैव कामो मां पीडयति । अतस्त्वं प्रसीदेत्याशयेनाह—बन्धूकेत्यादि । अतिकोपने ! अयं तवाधरो, बन्धूकद्युतिबान्धवो बन्धूकस्य पुष्पविशेषस्य या द्युतिर्दीप्तिस्तस्या बान्धवः सुहृत् । अत्र तद्बान्धवत्वेन बन्धूकद्युतिसमानैर्निरवस्थितिर्व्यज्यते । अयं स्निग्धो गण्डः कपोलो मधूकच्छविर्मधूकपुष्पस्येव छविः कान्तिर्यस्य एतादृशश्चकास्ति शोभते । लोचनं नीलनलिनश्रीमोचनं स्वकान्त्या नीलनलिनस्य नीलोत्पलस्य श्रियं कान्तिं मोचयति त्याजयति । हे कुन्दाभदन्ति ! कुन्दपुष्पस्येवाभा दीप्तिर्येषां ते दन्तास्तादृशि । तव नासा तिलप्रसूनपदवीं तिलपुष्पपद्धतिमभ्येति प्राप्नोति । प्राय इति तर्कयामि । स प्रसिद्धः पुष्पायुधः

---

पाठा०–१ '°र्गण्डश्चण्डि' D. २ 'नासाऽभ्येति' RP. ३ '°सेवया' RM.

दृशौ तव मदालसे वदनमिन्दुसंदीपनं[1]
गतिर्जनमनोरमा [2]विजितरम्भमूरुद्वयम् ।
रतिस्तव कलावती रुचिर[3]चित्रलेखे भ्रुवा-
वहो विबुधयौवतं वहसि तन्वि ! पृथ्वीगता ॥ ७ ॥

पञ्चभिर्बाणैर्भवत्याः सेवको भूत्वा विश्वजेता भवतीति । शार्दूलविक्रीडितवृत्तम् । उपमाविशेषोऽलंकारः । अनुप्रासो वर्णालंकारः । असमस्तपदा वैदर्भी रीतिः । प्रसादो गुणः । खिन्नलयं गानम् । संभाविता गीतिः । कैशिकी वृत्तिः ॥ ६ ॥

दृशाविति । 'अहो' इति आश्चर्ये । त्वं पृथ्वीगतापि दिव्यस्त्रीसमूहं वहसि । क कामित्याह-तव दृशौ मदेनालसे वर्तेते । अनेन मदालसयां वहसीत्युक्तम् । अपि च, तव वदनं चन्द्रवद्दीप्तिमद्वर्तते । अनेन इन्दुमतीनाम्नी अप्सराः कथिता । अपि च,-तव गतिर्जनमनांसि रमयतीति । अनेन मनोरमा काचन सुरस्त्री भणिता । अपि च,-तवोरुद्वयं विजितकदलीकाण्डं वर्तते । अनेन रम्भोक्ता । अपि च,-तव रतिः संभोगः कलावती हावभावकिलकिञ्चितमोट्टायितविब्बोकादिमती वर्तते । अनेन कलावती काचिद्देवनायिकोक्ता । अपि च, तव भ्रुवौ रुचिरे चित्रे लेखे ययोस्ते तादृश्यौ । अनेन रुचिरा चित्रलेखा च

---

पुष्पमेवायुधं शस्त्रं यस्य सः कामस्तन्मुखसेनया त्वन्मुखमेव सेना कटकं तेन विश्वं विजयते । कामः पञ्चभिः शरैर्विश्वं जयति । त्वन्मुखे बन्धूकमधूकनीलोत्पलतिलकुन्दपुष्पाणि पञ्च सन्तीति त्वन्मुखेनैव कामो विश्वं जयतीति भावः ॥ 'बन्धूकं बन्धुजीवे स्यात्' ( इति मेदिनी । ) 'मधुपुष्पो मधूकश्च गुडपुष्पो मधुद्रुमः' इति हारावली ॥ ६ ॥ दृशाविति । हे तन्वि ! त्वं पृथ्वीगता पृथ्व्यां भुवि गता प्राप्ता सती विबुधयौवतं देवयुवतीसमूहमाश्चर्येण वहसि धारयसि । तदेवाह—दृशाविति । तव दृशौ नेत्रे मदालसे मदेन हर्षेणालसे मन्थरे । अथ च मदालसा स्वर्वेश्या । तथा च स्वर्गे एकैव मदालसा, त्वं तु एकत्रैव मदालसे दधासीत्याश्चर्यमिति भावः । तव वदनमिन्दुमत्याऽऽस्पदमिन्दुविषयिणी या मतिस्तस्या आस्पदं विषय इत्यर्थः । तव मुखेऽयमिन्दुरिति मतिर्भवति । अमरलोकानामिन्दुमती काचन देवाङ्गना तस्या आश्रयः । तव गतिर्जनानां मनोरमा मनोहारिणी । अथ च,-मनोरमानाम्नी या देवाङ्गना तदात्मिका । अथवा,-रमा लक्ष्मीस्तदात्मिकेत्यर्थः । तथा तवोरुद्वयमूरुयुग्मं विधुतरम्भं विधुते स्वशोभया तिरस्कृते रम्भे कदल्यौ येन तादृशम् । अथ च, रम्भा स्वर्वेश्या । स्वर्गे एकैव रम्भा त्वमूरुद्वयात्मकं रम्भाद्वयं दधासीति भावः । अथ च, तव रतिः सुरतकेलिः कलावती कौशलशालिनी । अथ च, तव रतिः कामपत्नी । अस्ति कलावतीनाम्नी देवाङ्गना । ते भ्रुवौ

---

पाठा०-१ "संदीपकं' P., "मिन्दुमत्यास्पदं' RM., D., S. २ 'विधुतरम्भ०' RM., D., S., P. ३ 'रचितचित्रलेखे' RM., D., S.

स प्रीतिं तनुतां हरिः कुवलयापीडेन सार्धं रणे
राधापीनपयोधरस्मरणकृत्कुम्भेन ¹संभेदवान् ।
यत्र स्विद्यति मीलति ³क्षणमपि क्षिप्रं तदालोकन-
⁴व्यामोहेन जितं जितं जितमभूत्कंसस्य कोलाहलः ॥ ८ ॥

इति श्रीजयदेवकृतौ श्रीगीतगोविन्दे मानिनीवर्णने
⁵चतुरचतुर्भुजो नाम दशमः सर्गः ॥ १० ॥

---

वर्णिता ॥ 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति पृथ्वीछन्दः । कल्पितोपमालंकारः ॥ ७ ॥ स प्रीतिमिति । स हरिर्जगतां प्रीतिं तनुतां हर्षं विस्तारयतु । कीदृशो हरिः ? कुवलयापीडेन कंसदन्तिना सार्धं रणे संभेदवान्संगमवान् । किंविशिष्टेन कुवलयापीडेन ? राधापीनपयोधरयोः स्मरणकरौ कुम्भौ यस्य तेन । क इत्यपेक्षायामाह—यत्र हराविति हेतोः राधापीनपयोधरस्मरणादेव सात्विकभावोद्रेकात्क्षणं स्विद्यति स्वेदयति । मीलतीति । भ्रान्त्या चक्षुषि निमीलति सति कंसस्य तदालोकनात्तस्य तथाविधस्य दर्शनाद्व्यामोहेन भ्रान्त्या क्षिप्रं वेगेन जितं जितमिति कोलाहलो भवति स्म । भ्रान्तिमदाक्षेपावलंकारौ । शृङ्गारवीरयोः संकरश्च । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

आनन्दकन्दलीकन्दं मुकुन्दं नन्दनन्दनम् ।
प्रणम्य दशमं सर्गं व्याकरोत्कुम्भभूपतिः ॥

इति श्रीचित्रकूटाधीश्वरराजाधिराजमहाराजश्रीकुम्भकर्णविरचितायां
रसिकप्रियायां चतुरचतुर्भुजो नाम दशमः सर्गः ॥

---

रचितचित्रलेखे रचिता मयि कोपवशाच्चित्रा विचित्रा लेखा भ्रुकुटी याभ्यां तादृशे । तथा च सर्गे एकैव चित्रलेखा, अभ्रूभ्यां तु चित्रलेखाद्वयं रचितमित्याश्चर्यमिति भावः । प्रेयोनामायमलङ्कारः । तदुक्तं दण्डिना ( का. २।२७५ )— 'प्रेयः प्रियतराख्यानं रसवद्रसपेशलम्' इति । पृथ्वीनामकं चेदं छन्दस्तल्लक्षणं वृत्तरत्नाकरे । 'रम्भा कदल्यप्सरसोः' इति विश्वः । युवतीनां समूहो यौवतम् । 'भिक्षादिभ्योऽण्' ( पा. ४।२।३८ ) 'गार्भिणं यौवतं गणे' इत्यमरः ॥ ७ ॥ अथ सर्गान्ते कविराशिषं प्रयुङ्क्ते—प्रीतिमिति । हरिः श्रीकृष्णो यो युष्माकं पठतां गायतां शृण्वतां च प्रीतिमानन्दं तनुतां विस्तारयतु, यतो भक्तानां क्लेशहारी

---

पाठा०—१ 'प्रीतिं वस्तनुताम्' RM., C., D. २ 'संसर्गवान्' S. ३ 'क्षणमय क्षिप्ते द्विपे तत्क्षणात्' RM., D., S., C. ४ 'कंसस्यालमभूज्जितं जितमिति व्यामोहकोलाहलः'. RM., D. 'तदालोकनात्कंसो बालजितं जितमभूद्बालोलकोलाहलः' P., C. ५ 'मुग्धमाधवो' RM., D. 'मुग्धमधुसूदनो' S.

हरिः। कीदृशः? रणे रतिसंग्रामे राधायाः पीनौ पयोधरौ तयोः स्मरणवत् संस्कारबोधो याभ्यां तादृशौ कुम्भौ यस्य तथोक्तेन कुवलयापीडेन हस्तिना सार्धं संभेदवान् संसर्गवान्। अत्र प्रचुरशृंगारित्वं तथा च श्रीराधायां सर्वाधिकभावं, श्रीकृष्णस्याद्भुतवीर्यत्वं शृङ्गारविरोधिभयानकहेतुमहासत्त्वं हस्तिसंग्रामे शृङ्गाररसस्याविर्भावेन वर्णितमिति ज्ञेयम्। तदेवाह—यत्र यस्मिन्रणे तत्कुम्भस्थलदर्शनोद्बोधसात्त्विकविकारेण खिद्यति खेदं कृतवति पुनः केनापि सुखोदयेन सर्वं मिलति सति। अथ अथानन्तरं तत्क्षणमेव द्विपे क्षिते हते सति कंसस्याक्षमतिशयेन जितं जितमावेगेन द्विरुक्तिः; इति व्यामोहकोलाहलः अभूत्। अयमर्थः—जितं प्रथमस्तावत्खेदमिलिताभ्यां कंससमायामानन्दो जातः। पश्चात्तत्क्षणमेव हते द्विपे आवेगाच्छत्रुणा जितं जितमिति। अमुना प्रकारेण व्यामोहो मूर्च्छाकोलाहलो हाहाशब्दश्चाभवदित्यर्थः। यद्वा,—उदितसात्त्विकविकारे तादृशस्य दर्शनात् व्यामोहाद्भ्रान्त्या 'जितं जितम्' इति कोलाहलोऽभवदित्यर्थः॥ ८॥

स्फुटीकृतरसोत्करां प्रथितशालिनाथोज्ज्वल-
स्वरद्रुमसमुद्भवां विबुधवर्गदत्तोत्सवाम्।
चूर्णां सरसमाधवोत्तमगुणैः प्रमोदप्रदां
लिहन्तु रसमञ्जरीं रसिकचञ्चरीका मुहुः॥ १॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां श्रीशालिनाथकारितायां गीतगोविन्दटीकायां रसमञ्जरीसमाख्यायां दशमः सर्गः॥



## एकादशः सर्गः ११

—सामोददामोदरः—

सुचिरमनुनयेन प्रीणयित्वा मृगाक्षीं
गतवति कृतवेशे केशवे कुञ्जशय्याम् ।
रचितरुचिरभूषां दृष्टिमोषे प्रदोषे
स्फुरति निरवसादां कापि राधां जगाद ॥ १ ॥

**वसन्तरागयतितालाभ्यां गीयते । प्रबन्धः ॥ २० ॥**

विरचितचाटुवचनरचनं चरणे रचितप्रणिपातम् ।
संप्रति मञ्जुलवञ्जुलसीमनि केलिशयनमनुयातम् ॥ १ ॥
मुग्धे ! मधुमथनमनुगतमनुसर राधिके ! ॥ ध्रुवपदम् ॥

---

इदानीं कृतानुनयां राधां कापि सखी हरिमभिगमनाय प्रोत्साहयति—सुचिरेति । कापि सखी राधां जगाद । क सति ? प्रदोषे रजनीमुखे स्फुरति सति । किंभूते प्रदोषे ? दृष्टिं मुष्णातीति कर्मण्यण् । अभिसारिकाभिसरणावसान इत्यर्थः । किंभूतां राधाम् ? निरवसादामङ्गीकृतानुनयेन गतखेदाम् । पुनः किंभूताम् ? रचितनीलनिचोलादभिसरणयोग्यवेषाम् । क सति ? कृतवेशे कृतनेपथ्ये, अथ वा कृतग्रहे कृष्णे कुञ्जशय्यां गतवति सति । किं कृत्वा ? बहुकालानुनयेन मृगाक्षीमनुकूलयित्वा । मालिनीवृत्तम् ॥ १ ॥ तदेव प्रोत्साहमनुवदति—विरचितेति । तत्र पूर्वं ध्रुवः । मुग्ध इति ।

---

सुचिरेति । कापि सखी राधां जगादोवाच । क सति ? प्रदोषे स्फुरति सति । कीदृशे ? दृष्टिमोषे दृशौ विमुष्णाति चोरयति विषयग्रहणासमर्थे करोति तादृशे । गाढान्धकारे इत्यर्थः । पुनः क सति ? केशवे मृगाक्षीं हरिणनयनां राधां सुचिरं बहुकालं यथानुनयेन प्रीणयित्वा कुञ्जशय्यां लतावेष्टितकुटीराभ्यन्तरस्थशयनीयं गतवति गते सति । कीदृशे केशवे ? कृतवेशे कृतालंकरणे । कीदृशीं राधाम् ? रचिता रुचिरा मनोहरा भूषालंकृतिर्यया ताम् । पुनः कीदृशीम् ? निरवसादां निर्गतोऽवसादः कृष्णानागमनजन्यं दुःखं यस्मात्ताम् ॥ १ ॥ तदेव गीतेन कथयति—विरचितेति । गीतस्यास्य वसन्तरागो यतितालः । गीतार्थस्तु—हे मुग्धे राधे ! मधुमथनं कृष्णमनुसर । कीदृशम् ? अनुगतं त्वामनुसृतम् । अनुगतत्वमेवाह—विरचितेति । विरचिता विहिता चाटुवचनस्य रचना संदर्भो येन तादृशम् । पुनः कीदृशम् ? तव चरणे रचितः प्रणिपातः प्रणामो येन तादृशम् । तर्हि संप्रति कुत्रास्तीत्यत आह—संप्रतीति । संप्रत्यधुना वञ्जुलो वेतसस्तस्य सीमनि पर्यन्ते यत्केलिशयनं क्रीडाशय्या तामनु लक्षीकृत्य यातं

---

पाठा०—१ 'रचितरुचितभूषां' R.P. २ 'दृग्विमोषे' R.M. ३ '°रागे रूपकताले' R.M., D., S., P.

घनजघनस्तनभारभरे ! दरमन्थरचरणविहारम् ।
मुखरितमणिमञ्जीरमुपैहि विधेहि मरालनिकारम् ॥ मुग्धे० ॥ २ ॥
शृणु रमणीयतरं तरुणीजनमोहनमधुपविरावम् ।
कुसुमशरासनशासनवन्दिनि पिकनिकरे भज भावम् ॥ मु० ॥३॥

---

हे मुग्धे प्रियाभिसरणकालानभिज्ञे राधिके ! बाल्यद्योतनाय कप्रत्ययः । अनुगतमनुकूलं मधुमथनमनुसर । मा विलम्बं विधेहीत्यर्थः । इति ध्रुवः । अथ पदानि । विरचितेति ध्रुवेणान्वयः । किंभूतं मधुमथनम् ? संप्रति इदानीमेव मनोरमवञ्जुलसीम्नि केलिशयनमनुप्राप्तम् । वञ्जुलादीनां विभावत्वेन परिगमनात्तद्द्योतनार्थत्वाञ्जिकुञ्जोपादानम् । पुनः किंभूतम् ? विरचितचाटुवचनरचनम् । पुनः किंभूतम् ? चरणे रचितप्रणिपातम् ॥ १ ॥ अपि च,–घनेति । हे घनजघनस्तनभारभरे ! जघने च स्तनौ च जघनस्तनम्, घनं च तज्जघनस्तनं च, तस्य देहे भरोऽतिशयो यस्यास्तस्याः संबुद्धिः । मुखरितमणिमञ्जीरं नूपुरं यथा स्यात्तथा उपैहि आगच्छ । तेन चागमनेन मरालानां हंसानां निकारं जयं विधेहि । कथं विधेहीति चेत्,–दरमन्थरेति । ईषन्मन्थरचरणविन्यासं यथा स्यात्तथा ॥ २ ॥ अपि च,–शृण्विति । हे मुग्धे ! रमणीयतरं तरुणीजनमोहनं मधुपानां विरुतं शृणु । अपि च,–कामशास्त्रस्तुतिपाठके पिकसमूहे भावमभिप्रायं भज । किमुक्तं भवति ? 'मधुप'शब्देन कृष्ण उपलक्ष्यते वर्णतः साम्येन त्वदोष्ठमधुपानेन च । अथ मधोर्दैत्यस्य

---

गतम्, त्वां तत्रस्थः प्रतीक्षत इत्यर्थः ॥ १ ॥ तां प्रोत्साहयन्ती सखी प्राह–घनेति । हे राधे ! उपैहि कृष्णमुपगच्छ । कथं यथा स्यात् ? मुखरितः सशब्दः कृतो मणिमञ्जीरो मणिखचितो मञ्जीरो नूपुरो यत्र गमने एवं यथा स्यात् । पुनः कथं यथा स्यात् ? दरेण साध्वसेन मन्थरश्चरणविहारः पदविन्यासो यत्रैवं यथा स्यात् । तत्र हेत्वन्तरगर्भविशेषणमाह—घनेति । घनयोर्निबिडयोर्जघनस्तनयोर्भारस्य भरोऽतिशयो यस्यास्तादृशी । मरालानां हंसानां स्वकीयमन्थरगमनेन मञ्जीरादिशब्देन च निकारं तिरस्कारं विधेहि कुरु । संप्रति मरालेषु शब्दायमानेषु सत्सु मञ्जीरादिध्वनिरपि मरालशब्दत्वेनैव लोके ग्राह्य इति संप्रति योग्योऽभिसारक्षण इति ध्वनिः । अथ संप्रति हंसस्य शब्दो यात्रायां शुभं सूचयतीति गमनं प्रति विलम्बो न कार्य इत्यपि ध्वनितम् । तदुक्तं वसन्तराजीये—'कृत्यासु सर्वास्वपि दर्शनेन हंसस्य शब्देन च सर्वसिद्धिः ।' इति । 'मरालो राजहंसे स्यान्मरालो हंसमात्रके' इति धरणिः । 'निकारः स्यात्परिभवे धान्यस्योत्क्षेपणेऽपि च' इति विश्वः ॥ २ ॥ शृण्विति । तरुणीजनानां मोहजनकं मधुरिपोः कृष्णस्य रावं शब्दं शृणु । कीदृशम् ? रमणीयतरमतिशयेन रमणीयम् । पिकनिकरे

---

**पाठा०**–१ '०विकारम्' B., S., P., O. २ 'मधुरिपुरावम्' RM., S., P., O.

अनिलतरलकिसलयनिकरेण करेण लतानिकुरम्बम् ।
प्रेरणमिव करभोरु ! करोति गतिं प्रति मुञ्च विलम्बम् ॥ मुग्धे !० ४
स्फुरितमनङ्गतरङ्गवशादिव सूचितहरिपरिरम्भम् ।
पृच्छ मनोहरहारविमलजलधारममुं कुचकुम्भम् ॥ मुग्धे !० ॥५॥

---

पातनाच्छोषणान्मधुपः कृष्णः । तरुणीजनमोहनश्चासौ मधुपश्च तस्य भवत्सङ्गमे शिशिक्षान्सीत्कृतादिशब्दान्शृणु । अनु च त्वमपि तदा स्वात्मगर्तं शेषं त्यक्त्वा कोकिलस्वरा तमानन्दयेत्यर्थः । कुसुमशरासनशासनबन्दिनीति तेषां विभावत्वमुक्तम् ॥ ३ ॥ अपि च,–अनिलेति । हे करभोरु ! करभवदूरू यस्याः सा । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।' लतानिकुरम्बं लतासमूहः । अनिलतरलकिसलयनिकरेणेव करेण । गतिं प्रति प्रेरणमिव करोति । अतो विलम्बं मुञ्च । यत्र अचेतना अपि चेतनवत्प्रतिबोधयन्ति तत्रेष्टसिद्धिरवश्यंभाविनी । अत्र करसाक्षिभ्यात् 'लता'शब्देन सख्यः त्वां त्वरयन्तीति बोध्यते ॥ ४ ॥ अपि च,–स्फुरितमिति । हे सखि ! अमुं कुचकुम्भं पृच्छ । प्रियकरस्पर्शलालसकुचकुम्भचेष्टां ज्ञातुमिच्छां कुरु । भाविप्रियावेदकः कुचकलशोऽपि त्वां प्रेरयतीत्यर्थः । किंभूतं कुचकुम्भम् ? स्फुरितम् । कुचस्फुरणं प्रियसंगममावेदयतीति सामुद्रिकज्ञाः । कस्मादिव ? कामोर्मिवशादिव ।

---

कोकिलसमूहे कुसुमशरासनबन्दिनि सति । कुसुमान्येव शरासनं धनुर्यस्य तादृशः कामस्तच्छासनस्य तदाज्ञाया बन्दिनि स्तावके सति । यद्वा,–कुसुमशरासनं बन्दितुं नमस्कर्तुं शीलमस्य तादृशे कामाज्ञाकारिणि सतीत्यर्थः । भावं कृष्णेऽनुरागं भजाश्रय । अत्र पिकनिकरझंकारेण कृष्णमधुरालापस्य परैरलक्ष्यतया तदीयनिःशङ्कभाषितान्यपि त्वं तत्रागता सती श्रोष्यसीति ध्वनितम् । अथ च पिकस्य मधुरस्वरो यात्रायां शकुन इत्यपि ध्वनितम् । 'बन्दिनः स्तुतिपाठकाः' इत्यमरः ॥ ३ ॥ अनिलेति । हे करभोरु ! करभः कनिष्ठान्तो मणिबन्धपर्यन्तः करस्य बहिर्भागस्तद्वच्छिशोभितौ ऊरू यस्यास्तादृशि । गतिं गमनं प्रति विलम्बं कालक्षेपं मुञ्च । अनिलतरलकिसलयनिकरेण करेण अनिलेन वायुना तरलश्चञ्चलो यः किसलयनिकरो नवपल्लवसमूहस्तद्रूपेण करेण लतानिकुरम्बं लतासमूहस्तव प्रेरणमिव करोति । किसलयकम्पच्छलेनासमञ्जसमसहमानो लतासमूहोऽपि त्वां प्रेरयतीति भावः । अथवाऽग्रे पल्लवितवृक्षादिदर्शनं यात्रायां फलसिद्धिसूचकम् । अतो गमनं प्रति विलम्बो न कार्य इति ध्वनितम् । तदुक्तं शाकुनशास्त्रे–'वामे मधुरवाक्पक्षी वृक्षः पल्लवितोऽग्रतः । अनुकूलो वहन्वायुः प्रयाणे शुभसूचकः' इति । 'समूहो निकुरम्बं कदम्बकम्' इत्यमरः । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इति च ॥ ४ ॥ स्फुरितेति । अमुं कुचकुम्भं स्तनकलशं पृच्छ सखी

अधिगतमखिलसखीभिरिदं तव वपुरपि रतिरणसज्जम् ।
चण्डि ! रसितरशनारवडिण्डिममभिसर सरसमलज्जम् ॥ मुग्धे० ६
स्मरशरसुभगनखेन सखीमवलम्ब्य करेण सलीलम् ।
चल वलयक्वणितैरवबोधय हरिमपि निगदितशीलम् ॥ मुग्धे० ॥७॥

किंभूतम् ? सूचितः कथितो हरेः परिरम्भो येन । अपि किंभूतम् ? मनोहरो हार एव विमलजलधारा यत्र । शकुनकलशोऽपि तरङ्गवशात्सूचितप्रियप्राप्तिर्भवति । विमलजलधारोऽपि, खण्डश्लेषालंकारः ॥ ५ ॥ अपि च,–अधिगतमिति । हे चण्डि ! सखीसकाशाल्लज्जारहितं यथा स्यात्तथा अभिसर । अर्थात्कृष्णवसतिम् । यतोऽखिलसखीभिरिदमधिगतं ज्ञातम् । इदमिति किम् ? तव वपुरतीव रतिरणाय विहितसामग्रीकं वर्तते इति सखीनामग्रे वपुषैव निवेदितम् । अतो लज्जां मा कुरु । किंभूतं वपुः ? रसितो रशनावलिरेव डिण्डिमः पणववाद्यविशेषो येन । अपि च किंभूतम् ? सरसं सरागम् । अत एव रणोद्यतायाश्चण्डीति विशेषणमुचितम् ॥ ६ ॥ अपि च,–स्मरशरेति । हे सखि ! करेण सखीमवलम्ब्य सलीलं चल । अपिश्चार्थे । च पुनः । निगदितशीलं निगदितं तव प्रतीक्षया सुभद्रं व्याख्यातं शीलं यस्य । अथवा,–पूर्वपददोषत्वेन सर्वाभिज्ञानपरं निगदितं च तच्छीलं च भवत्याश्चरित्रं तत् । हरिमपि बोधयेति 'अपि' शब्दार्थः । किंभूतेन ? स्मरशरसुभगनखेन स्मरशरवत्पुष्पवत्सुभगा

समीचीनं वा वदतीति प्रश्नं कुरु । कीदृशम् ? स्फुरितं सकम्पम् । कस्मादिव ? अनङ्गतरङ्गवशादिव, अनङ्गस्य कामस्य यस्तरङ्ग ऊर्मिस्तद्वशादिव । अत्रानङ्गेसनेन तस्या रसतरङ्गिणीत्वमाक्षिप्यते । अन्योऽपि कुम्भो नद्यास्तरङ्गैः प्रेर्यमाणः सकम्पो भवतीत्ययमपि ते कुचकुम्भस्त्वयि रसतरङ्गिण्यामनङ्गतरङ्गैः प्रेरणादिव सकम्प इति भावः । 'इव'शब्द उत्प्रेक्षाद्योतकः । पुनः कीदृशं कुचकुम्भम् ? मनोहरो यो हारः स एव निर्मला जलधारा यत्र तादृशम् । अत्र स्तनोपरि स्थितस्य हारस्य जलधारास्वरूपणात्स्तनयोः पूर्णकलशत्वेन रूपणमाक्षिप्यते । पूर्णादेव कलशात्तरङ्गैरान्दोलने सति बहिर्जलधारानिःसरणसंभवात् । पुनः कीदृशम् ? सूचितः हरेः कृष्णस्य परिरम्भ आलिङ्गनं येन तम् । नारीणां स्तनकम्पः प्रियं सूचयतीति शाकुनिकाः । तदुक्तम्–'नित्यं नार्याः स्तने कम्पः प्रियसंगमसूचकः' इति । पूर्णकलशत्वेन स्तनरूपणमपि यात्रायां पूर्णकलशदर्शनं प्रियसूचनाय ॥ ५ ॥ ननु सखीजनेषु पश्यत्सु, कथं मया गन्तव्यमित्यत आह—अधिगतमिति । इदं तव वपुः सखीभिरतिशयेन रतिप्रसङ्गाय सुरतप्रसङ्गाय सज्जं कृतालंकरणादिकृत्यविधानमधिगतं ज्ञातम् । तथा च सखीभिर्दृष्टमेवाधुना किं विलम्बेनेति

पाठा०–१ 'वपुररतिरतिरणसज्जम्' RM., '°रतिसङ्गरसज्जम्' P. २ 'रसितरसना°' C. ३ '°नखेन करेण सखीमवलम्ब्यसलीलम् ।' C. ४ 'निजगतिशीलम्' RM., D., S., C.

श्रीजयदेवभणितमधरीकृतहारमुदासितवामम् ।
हरिविनिहितमनसामधितिष्ठतु कण्ठतटीमविरामम् ॥ मुग्धे० ॥८॥
सा मां द्रक्ष्यति वक्ष्यति स्मरकथां प्रत्यङ्गमालिङ्गनैः
प्रीतिं यास्यति रंस्यते सखि ! समागत्येति चिन्ताकुलः ।

नखा यस्मिंस्तादृशेन ॥ ७ ॥ अपि च,—श्रीजयदेवेति । इदं श्रीजयदेवभणितं हरावारोपितमनसामविराममविच्छेदं कण्ठतटीमधितिष्ठति । अधरीकृतो हारो मुक्तादिग्रथितो येन । पक्षेऽधरीकृतो हारः शुद्धं वचनं येन । पुनः किंभूतम् ? उदासितवामम् । उदासिता वामा स्त्री येन । अथवा उदासितं हरिभक्तिप्रतीपं वचनं येन । वा उदासितं निराकृतमन्यदपि सुन्दरं येन इति । हारनारीसुन्दरादीनां परिहारेणेदमेवैकं कण्ठे धारणीयमित्यर्थः । तथा च सङ्गीतराजे—'आदिताल: प्रथमतः प्रतिमण्ठस्ततः परम् । चतुर्मात्राङ्कमण्ठश्च तुर्यः स्यादङ्कुतालकः ॥ तालो वर्णयतिः पश्चाच्चवमात्रिकमण्ठकः । निसारश्च तथा झम्पा द्रुतमण्ठश्च रूपकः ॥ प्रतितालस्त्रिपुटक एकतालीति संज्ञया । त्रयोदश क्रमात्तालाः प्रतितालं पदानि च ॥ यथा शोभालसित्रुश्रि तावन्त्येव ततः परम् । काहली तुम्बकिन्यौ च मुक्ता च श्लक्ष्णशङ्खकौ ॥ पटहश्च हुडुक्कं च मुरजः करटापि च । कुण्डा च डमरूढक्का पाटा एतत्समुद्भवाः ॥ निःसारी पटहो ढक्का मर्दलस्त्रिवली तथा । करटेति तथैतस्यां प्रधानाक्षरयोजना ॥ एकताल्या दक्कणी च त्रिवली दुन्दुभिस्तथा । घटश्चतुर्मण्डकः स्यादधिका पाठसन्ततिः ॥ प्रतितालं प्रयोगोऽपि रागो नन्दो वितन्यते ।

भावः । यद्वा,—सखीभिरिदं तव वपुर्बहुधा रतिरणे सम्यगधिगतं ज्ञातम् । तथा च तासां का लज्जेति भावः । अतो हे चण्डि कोपने ! रणितः शब्दायमानः कृतो रशनावलिः क्षुद्रघण्टिकावलिरेव डिण्डिमो वाद्यविशेषो यत्रैवं यथा स्यादेवमभिसर कृष्णसंकेतभूमिमुपेहि । अन्यत्रापि रणे डिण्डिमस्ताड्यत एवेति ध्वनिः । पुनः कथं यथा स्यात् ? सरसस(मं)लज्जम् । रसः शृङ्गाररसस्तत्सहितं लज्जास(रा)हितं च यथा स्यादेवम् ॥ ६ ॥ स्मरेति । करेण सखीमवलम्ब्य सलीलं लीलासहितं यथा स्यादेवं चल गच्छ । कीदृशेन करेण ? स्मरस्य कामस्य ये शरास्तद्वत्सुभगाः सुन्दरा नखा यस्मिंस्तादृशेन । अन्यस्मिन्नपि रणे शस्त्राणि भवन्ति; रतिरणे तु नखा एव स्मरस्य शस्त्राणीति भावः । अथ वलयक्वणितैः कङ्कणशब्दैर्हरिमपि निजगतिशीलं स्वीयगमनस्वरूपमवबोध्य ज्ञापय । अन्यत्र समीचीनो योधः प्रतिभटमवहितं कृत्वैव युध्यत इति ध्वनितम् ॥ ७ ॥ श्रीजयदेवेति । इदं श्रीजयदेवेन भणितं हरिविनिहितमनसां हरौ विनिहितं तत्परं मनो येषां तादृशानामविराममनवरतं कण्ठतटीमधितिष्ठतु कण्ठदेशे वसत्वित्यर्थः । कीदृशम् ? अधरीकृतः स्वगुणैर्हीनीकृतो हारो येन तादृशम् । पुनः कीदृशम् ? उदासिता

पाठा०—१ '°मुदासितरामम्' RM. २ 'प्रियकथां' P. ३ 'संचिन्तयन्' D.

स त्वां पश्यति वेपते¹ पुलकयत्यानन्दति स्विद्यति
प्रत्युद्गच्छति मूर्च्छति स्थिरतमःपुञ्जे निकुञ्जे प्रियः ॥ २ ॥
अक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिच्छगुच्छावलीं
मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्रकम् ।

---

शृङ्गारो विप्रलम्भाख्यो रस उत्तमनायकः ॥ दूतीसंवादकथनं नायिकायामिहेष्यते । एतस्याल्लक्षणं यत्र तालराजिरसः स्मृतः ॥ प्रबन्धः कुम्भभूपेन हरिप्रवणचेतसा ॥ इति श्रीहरितालराजिजलधरविलसितनामा विंशतितमः प्रबन्धः ॥ ८ ॥ इदानीं तच्चेष्टाकथनव्याजेन गन्तुं व्याकुलयति—सा मामिति । हे सखि ! प्रियः कृष्णो निकुञ्जे भवत्या अपेक्षयेत्थं कुर्वन्नास्ते । किंभूते निकुञ्जे ? स्थिरतमःपुञ्जे स्थिरान्धकारचये । इतीति किम् ? सा प्रिया समागत्य मां द्रक्ष्यतीति चिन्ताकुलो भवति, दूरं च पश्यति । एतावता हि सात्त्विकभावौ स्तम्भवैवर्ण्ये संजातौ भवत इति सूचितम् । चिन्तया स्तम्भं दूरदर्शनेन वैवर्ण्यमाप्नोति । दृष्ट्वा च स्मरकथां वक्ष्यतीति वेपते पुलकयति च । एवं द्वावपरौ सात्त्विकौ वेपथू रोमाञ्चश्चेति । कथाः कृत्वा प्रत्यङ्गमालिङ्गनैः प्रीतिं यास्यतीत्यानन्दति आनन्दाश्रु मुञ्चति स्विद्यति च । एवमश्रुस्वेदायुक्तौ । आलिङ्ग्य च नानारतोपचारैः रंस्यते । चिन्तया आह्वानाशक्त्ये प्रत्यु-

---

त्सगुणैस्तिरस्कृता रामा येन तादृशम् । यद्यपि हारस्य रामाणां च कण्ठदेशस्थिता शोभाप्रदत्वं संभवति, तथापि तयो रागिणामेव शोभाप्रदत्वं न मुमुक्षूणाम् । तत्रापि तारुण्य एव न तु सर्वदा । जयदेवभणितं तु कृष्णकथात्वेन च सर्ववयस्सु शोभाप्रदमिति हारापेक्षया नायिकापेक्षया चेदमधिकमिति भावः । कण्ठतटीमित्यत्र 'अधिशीङ्स्थासां कर्म' (पा. १।४।४६) इत्यधिकरणे द्वितीया ॥ ८ ॥ इदानीं हरेरुत्कण्ठाधिक्यमाह—सा मामिति । हे सखि ! राधा आगत्य मां द्रक्ष्यति ईक्षिष्यते । दृष्ट्वापि मां स्मरकथां वक्ष्यति कथयिष्यति । स्मरकथासुकृत्वापि सा प्रत्यङ्गावयवं समालिङ्गनैः प्रीतिं यास्यति । प्रीतियुक्तापि मया सह रंस्यते केलिं करिष्यति इति चिन्ताकुलः सन्कृष्णः स्थिरतमःपुञ्जे स्थिरान्धकारसमूहे निकुञ्जे त्वां पश्यति ध्यानदृष्ट्या । किमियं परुषं वदिष्यति चेति भिया साध्वसेन वेपते कम्पते । पुलकयति, अङ्गानीत्यर्थात् । ध्यानेनैव तवालिङ्गनं परिकल्प्य साध्वसेन रोमाञ्चयुक्तो भवतीति भावः । पश्चाद्ध्यानेनैव त्वत्सुरतकेलिं परिकल्प्यानन्दयुक्तो भवतीति । ततो ध्यानेनैव सुरतसुखं परिकल्प्य स्विद्यति प्रस्वेदयुक्तो भवति । पश्चात्केलिं कर्तुमुत्थाय गन्तुं प्रवृत्तायां त्वयि प्रत्युद्गच्छति प्रत्युत्थानं करोति । पश्चाद्ध्यानविच्छेदे त्वामदृष्ट्वा मूर्च्छां प्राप्नोति ॥ २ ॥ गन्त्वलंकरणरचनां विधाय गन्तव्यमित्यत आह—अक्ष्णोरिति । अभिसारसाहसकृतामभिसाररूपं साहसं कुर्वन्तीमभिसारसाहस-

---

पाठा०—1 'कम्पते' B., C.

धूर्तानामभिसारसंभ्रमजुषां विष्वङ्निकुञ्जे सखि !
ध्वान्तं नीलनिचोलचारु सुदृशां प्रत्यङ्गमालिङ्गति ॥ ३ ॥
काश्मीरगौरवपुषामभिसारिकाणा-
माबद्धरेखमभितो रुचिमञ्जरीभिः ।

---

द्रुच्छति । स्वदलाभे मूर्च्छति च । एवं स्वरभङ्गप्रलयौ दर्शितौ । एवं स कृष्णस्त्वदभिकाङ्क्षयाऽष्टावपि सात्त्विकान्भावाननुभवन्नास्ते । प्रत्यङ्गालिङ्गनेन स्थितालिङ्गनं वृक्षाधिरूढमुक्तं भवति । तल्लक्षणं यथा—'रमणचरणमेकेनाङ्घ्रिणाक्रम्य शिश्नं श्रसितमपरपादेनाश्रयन्ती तदूरुम् । निजमथ भुजमेनं प्राञ्चयन्ती तदंसं तरुमिव कमितारं चुम्बनार्थाधिरोढुम् ॥ यदभिलषति नारी तच्च वृक्षाधिरूढम् ॥' शार्दूलविक्रीडितं वृत्तम् । दीपकमलंकारः ॥२॥ इदानीमभिसारिकासमयमाह—अक्ष्णोरिति । हे सखि ! विष्वक् चतुर्दिक्षु नीलप्रच्छदपटसदृग्ध्वान्तं सुदृशः प्रत्यङ्गमालिङ्गति । नीलप्रच्छदपटवदाच्छाद्य अदृश्यां करोतीत्यर्थः । किं कुर्वन् ? धूर्तानां मायाविनामभिसारे संभ्रमं वेगं भजन्तीनामुत्कोचमिवाक्ष्णोरञ्जनं निक्षिपन् । एतदेतत्कुर्वंस्तदाह—अपि च,-कुचयोः कस्तूरिकापत्रावलिरचनाविशेषमिव निक्षिपत् । अत्र 'धूर्त'ग्रहणेन निक्षेप औचित्यमावहति । यतो मायाविनो माययैव साध्याः । अत्र च क्रमेण तमसो वृद्धिर्ज्ञेया । पूर्वं प्रादुर्भावेऽक्ष्णोरञ्जनम्, किंचिद्वृद्धे कर्णाभरणाच्छादनम्, तत एव प्रवृद्धे शिरोमुकुटवृत्ति । ईषदापरिसमाप्तेः कुचयोर्हारादिलोपः । क्रमेण प्रवृद्धं सत्सर्वशरीरं व्याप्य वर्तत इति क्रमवृद्धिर्दर्शिता । अत्र 'धूर्त'-ग्रहणेन ता अपश्यन्त्यो भवतीं न कश्चिदग्रे कश्चिन्यन्तीति निःशङ्कं व्रज । शार्दूलविक्रीडितं वृत्तम् । यथासंख्यमलंकारः ॥ ३ ॥ इदानीं तमस्यपि त्वामेव प्रतीक्षत इत्याह—काश्मीरेति । हे सखि ! एतच्चमित्थं तस्य

---

कृतः, तासामत एव धूर्तानां शठानां सुदृशां नायिकानां ध्वान्तं तमो निकुञ्जे विष्वक्सर्वतः प्रत्यङ्गमङ्गमङ्गं प्रति आश्लिष्यति । तदेव विशेषणैराह—अक्ष्णोरिति । किं कुर्वत्तमः ? अक्ष्णोर्नयनयोरञ्जनं कज्जलं निक्षिपदर्पयत् । श्रवणयोस्तापिच्छगुच्छावलीं तापिच्छस्य तमालस्य गुच्छस्तबकपरम्परां निक्षिपत् । मूर्ध्नि मस्तके श्यामसरोजदाम कमलमालां निक्षिपत् । कुचयोः स्तनयोः कस्तूरिकापत्रकं मृगमदरचनां निक्षिपत् । कीदृशं ध्वान्तम् ? नीलनिचोलचारु नीलनिचोलवत् कञ्चुकवच्चारु मनोहरम् । तथा च तवाभिसारयोग्याभरणानि तम एवार्पयिष्यतीति किमलंकरणे विलम्बेनेति भावः । अत्र स्त्रीणामलंकरणादिरचनाधिकारो नपुंसकादीनामेवेति नपुंसकनिर्देशेन ध्वनितम् । 'कालस्कन्धस्तमालः स्तापिच्छः' इत्यमरः । 'स्याद्गुच्छः स्तबके लम्बे हारभेदकलापयोः' इति विश्वः ॥ ३ ॥ किंच संप्रति मणिसुवर्णाभरणं नोपादेयमित्यत आह—काश्मीरेति ।

---

पाठा०—१ '°सारसाहसकृतां' RM. 'सारसावरहृदां' D., S.

एतत्तमालदलनीलतमं तमिस्रं
तत्प्रेमहेमनिकषोपलतां तनोति ॥ ४ ॥

हारावलीतरलकाञ्चनकाञ्चिदाम-
[1]केयूरकङ्कणमणिद्युतिदीपितस्य ।
द्वारे निकुञ्जनिलयस्य हरिं निरीक्ष्य
व्रीडावतीमथ [2]सखीमियमित्युवाच ॥ ५ ॥

श्रीकृष्णस्य त्वयि यत्प्रेम तदेव हेम तन्निकषोपलतां तनोति । तमसापि बह्वीनामभिसारिकाणां प्राप्त्यवसरेऽपि त्वय्येव तस्य प्रेमेति निकषोपलहेमपरीक्षाद्यसाम्यम् । किंभूतं तमिस्रम् ? अभितो रुचिमञ्जरीभिः कुङ्कुमगौरवपुषां स्वैरिणीनामाबद्धा रेखा आभोगो विस्तारो येन । किंभूतं तमिस्रम् ? तमालदलनीलतमम् । एतावता तमसोऽतीव प्रवृद्धावभिसरेति प्रेरणम् । वसन्ततिलका वृत्तम् । अत्रोपमालंकारः ॥ ४ ॥ इदानीं भावान्तरेण तं पुष्णाति—हारावलीति । इयं दूती राधां प्रति वक्ष्यमाणमुवाच । किं कृत्वा ? निकुञ्जनिलयस्य द्वारे हरिं निरीक्ष्य । किंभूतां राधाम् ? व्रीडावतीम् । कामवतीनामपि युवतीनां प्रथमसंगमे लज्जा किमपि कामातिशयं विदधाति । किंभूतस्य निलयस्य ? हारावल्यास्तरलो मध्यमणिः काञ्चनस्य काञ्ची मेखला दाम च मञ्जीरौ कङ्कणे च तेषु मणयः तेषां द्युत्या दीपितस्य । वसन्ततिलकावृत्तम् । अतिश-

कश्मीरजकुङ्कुमवद्गौरं वपुः शरीरं यासां तादृशामभिसारपराणां नायिकानामभित उभयतो मणिमञ्जरीभिर्मेखिपरम्पराभिराबद्धा रेखा येन तादृशमेतत्तमालदलनीलतमं तत्तमालदलवत्तमालपल्लववदतिशयेन नीलं तमिस्रमन्धकारं तत्प्रेमहेमनिकषोपलतां तनोति विस्तारयति । संकेतभूमिं व्रजन्तीनामभिसारिकाणां तादृक्कङ्कणमञ्जीरादिखचितमणिदीधितिभिरुभयपार्श्वे उद्योते सति रेखाकारतया लक्ष्यमाणातिगौरतराङ्गकान्तिरन्धकाररूपकषपट्टिकायां तत्प्रेम सुवर्णरेखेव भातीति भावः । अथ चैतादृश्यपि गाढान्धकारे कान्तारे सर्वं सुकरमेकान्ताभिसारप्रस्थानेन प्रेम्णः शुद्धिं परीक्षस्व इति ध्वनिः । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः ॥ ४ ॥ हारावलीति । अथानन्तरमियं दूती सखी राधामिति वक्ष्यमाणमुवाच । कीदृशीं सखीम् ? निकुञ्जनिलयस्य निकुञ्ज एव निलयो निभृतगृहं तस्य द्वारे हरिं निरीक्ष्य दृष्ट्वा । व्रीडावतीं लज्जावतीमेतस्मै कति निष्ठुराणि वचांसि मयोक्तानि, संप्रति कथं तत्समक्षं यामीति लज्जया युताम् । कीदृशस्य निकुञ्जनिलयस्य । हारावल्यो हारपङ्क्तयस्तरलो हारमध्यगमणिः काञ्चनकाञ्चिदाम सुवर्णखचितमेखला दाम मञ्जीरौ नूपुरः कङ्कणं करभूषणमेतेषु

पाठा०—१ 'मञ्जीरकङ्कण°' RM., D., S. २ 'सखी निजगाद राधाम्' B., 'सखीमियमित्युवाच' S.

**वराडीरागरूपकतालाभ्यां गीयते ॥ प्रबन्धः ॥ २१ ॥**

मञ्जुतरकुञ्जतलकेलिसदने
विलस रतिरभसहसितवदने ! ॥ १ ॥
प्रविश राधे ! माधवसमीपमिह ॥ ध्रुवपदम् ॥
नवभवदशोकदलशयनसारे
[3]विलस कुचकलशतरलहारे ! । प्रविश० ॥ २ ॥

योक्तिरलंकारः ॥ ५ ॥ तदेव सखीवाक्यं विवृणोति—मञ्जुतरेति । अत्राष्टपद्यामुद्ग्राहापेक्षया ध्रुवस्य बाहुल्यम् । तत्रापि च प्रतिपादमन्तिमं खण्डं पदान्तरापेक्षया नवं नवमेवेति बोद्धव्यम् । तत्रापि राधाविशेषणानि सर्वाण्यनुभावत्वेन बोद्धव्यानि, स्थानविशेषणानि च विभावत्वेनेति । प्रविशेत्यादि । हे राधे! माधवसमीपं प्रविश । इह निकुञ्जे विलस गमनागमनादिचेष्टाः कुरु । किंभूते राधे ? रतिरभसेन रतिहर्षेण हसितं वदनं यस्याः । एतावद्ध्रुवस्थानीयम् । तदनुस्यूतं त्वमेवपदमिहेत्यस्य विशेषणम् । किंभूते ? मञ्जुतरं मनोहरं यत्कुञ्जतलं कुञ्जस्याधरप्रदेशस्तदेव केलिसदनं यत्र ॥ १ ॥ अपि च, नवभवेति । हे कुचकलशतरलहारे ! कुचकलशे तरलश्चलो हारो यस्यास्तस्याः संबुद्धिः । इहेत्यस्य विशेषणम् । किंभूते इह ? नवं भवदशोक-

खचिता ये मणयस्तेषां शुक्ला कान्त्या दीपितस्य प्रकाशितस्य । 'तरलश्चञ्चले विङ्गे हारमध्यमणावपि' इति विश्वप्रकाशः ॥ ५ ॥ तदेव गीतेनाह—मञ्जुतरेति । गीतस्यास्य वराडीरागो [1]मण्ठतालश्च । गीतार्थस्तु—हे राधे! माधवसमीपं कृष्णान्तिकदेशं प्रविश । इह मञ्जुतरकुञ्जतलकेलिसदने मञ्जुतरं यत्कुञ्जतलं निकुञ्जाभ्यन्तरदेशस्तदेव यत्केलिसदनं लीलागृहं तत्र विलस विलासं कुरु । कीदृशि ? रतिरभसेन सुरतोत्साहेन हर्षितं हास्ययुक्तं वदनं मुखं यस्यास्तादृशि । प्रविश राधे! माधवसमीपमिह विलसेत्युक्तम् ॥ ध्रुवपदमनुवर्तमानत्वात् । यद्वा,—इह माधवे विलस । कीदृशे माधवे ? मञ्जुतरकुञ्जतलं केलिसदनं यस्य तादृशे । पुनः कीदृशे ? रतिरभसेन हर्षितं वदनं यस्य तादृशे । कीदृशे केलिसदने ? ॥ १ ॥ नवेति । नवं नूतनमथ च लसच्छोभमानं यदशोकदलमशोकपल्लवं यस्य तच्छयनं शय्या तदेव सारो महाधनं यत्र तादृशे । त्वं कीदृशी ? कुचकलशयोः स्तनकलशयोस्तरलश्चञ्चलो हारो यस्यास्तादृशी । अपरस्मिन्नपि गृहे महाधनं तिष्ठतीति ध्वनितम् । यद्वा,—नवलसदित्यपि 'राधे'

पाठा०—१ "°रागे प्रतिमण्ठताले' D., S. RM. 'वराडीरागैकतालाभ्यां' D. २ 'नवलसदशोक°' D., RM. ३ 'प्रविश राधे माधवसमीपमिह । विलस कुचकलशतरलहारे' C., RM., D., S.

कुसुमचयरचितशुचिवासगेहे ।
विलस कुसुमसुकुमारदेहे । प्रविश० ॥ ३ ॥
मृदुचलमलयपवनसुरभिशीते ।
विलस मदनशरनिकरभीते । प्रविश० ॥ ४ ॥
विततबहुवल्लिनवपल्लवघने
विलस चिरमलसपीनजघने ! । प्रविश० ॥ ५ ॥

---

दलानां शयनं तेन सारमुत्कृष्टं तस्मिन् ॥ २ ॥ अपि च,–कुसुमेति । हे कुसुमसुकुमारदेहे ! इह विलस । किंभूते इह ? कुसुमानां चयस्तेन रुचिरं शुचि च वासार्थं गेहं यस्मिंस्तत्कुञ्जतले । अत्र सर्वत्र एकैकं राधाविशेषणं एकैकं निकुञ्जविशेषणम् ॥३॥ अपि च,–मृदुचलेति । हे राधे ! इह विलस । किंभूते राधे ? मदनशरनिकराद्भीतिर्भयं यस्याः तस्याः संबुद्धिः । इह मृदु यथा स्यात्तथा चलो यो मलयपवनस्तेन सुरभि च तच्छीतं च मृदुपवनेन

---

इत्यस्यैव विशेषणम् । तदा नवलसदशोकदलशयनमेव सारो यस्यास्तादृशि । यद्वा,– इह माधवे विलस । कीदृशे माधवे ? नवलसदशोकदलमेव सारो यस्य तादृशे ॥ २ ॥ **कुसुमेति** । हे राधे ! इह कुसुमचयेन पुष्पसमूहेन रचितं विरचितं शुचि अनुपहतं नायिकान्तरेणानुपभुक्तं यद्वासगेहं लीलागृहं तत्र विलस । यद्वा,–कुसुमचयेन रचितमर्थात्कृष्णेन निर्मितं शुचि वासगेहं यस्यास्तादृशी इति 'राधे' इत्यस्यैव विशेषणम् । पुनः कीदृशी त्वम् ? कुसुमवत्सुकुमारः कोमलो देहो यस्यास्तादृशी । यद्वा,–इह, माधवे विलस । कीदृशे माधवे ? कुसुमचयेन रचितं शुचि वासगेहं येन तादृशे । कीदृशे माधवे ? कुसुमवत्सुकुमारो देहो यस्य तादृशे । 'शुचि अनुपहते' इति विश्वप्रकाशः ॥ ३ ॥ **चलेति** । हे राधे ! माधवसमीपं चल व्रज । इह केलिसदने प्रविश्य विलस । कीदृशे केलिसदने ? मलयपवनसुरभिशीते मलयसंबन्धी यः पवनस्तेन सुरभि सुगन्धं शीतलं च तस्मिन् । यद्वा,–इह माधवे विलस । कीदृशे माधवे ? मलयपवनसुरभिशीते मलयसंबन्धी यः पवनो वायुस्तेन सुरभिशीतले वा । यद्वा,–च 'चल' इत्यपि पवनस्यैव विशेषणम् । तथा च चलश्चपलो यो मलयपवनस्तेन सुरभिशीतले इत्यर्थः । 'चल' इत्यनेन ईषच्चाञ्चल्यमुक्तम्; तेन मान्द्यमुक्तम् । त्वं कीदृशी ? रतिवलितललितगीते, रतौ वलितं ललितं मनोहरं गीतम् । लालित्यं हावविशेषः यस्यास्तादृशि । यद्वा,–कृष्णे विलस । कीदृशे कृष्णे ? रतिललितं मनोहरं वलितं संभ्रमकं गीतं यस्य तादृशे । क्वचित्सरसेति पाठः । ललितलक्षणं तु—'नानाविधमनाहार्यं स्वभावेन मनोहरम् । शृङ्गारचेष्टितं स्त्रीणां ललितं संप्रचक्षते'

---

पाठा०–१ "°रुचिरशुचि°" RP. २ 'चल मलय°' RM., O., D. ३ 'रतिवलितललितगीते' RM. ४ 'मधुरतर···।···शिखरे ॥ ५ ॥' RP.

मधुमुदितमधुपकुलकलितरावे ।
विलस कुसुमशरसरसभावे । प्रविश० ॥ ६ ॥
मधुरतरपिककनिकरनिनदमुखरे ।
विलस दशनरुचिररुचिरशिखरे । प्रविश० ॥ ७ ॥

---

सुरभिशीतम् ॥ ४ ॥ अपि च,–मधुरतरेति । हे राधे! इह विलस । किंभूते राधे? शुचीनि रुचिराणि दशनशिखराणि यस्यास्तस्याः संबुद्धिः । किंभूते इह? मधुरतरो यः पिकनिकरस्य निनदस्तेन मुखरे ॥ ५ ॥ अपि च,–विततेति । हे राधे! इह चिरं विलस । किंभूते राधे? अलसं पीनं जघनं यस्यास्तस्याः संबुद्धिः । किंभूते इह? विततानि बहूनि वल्लीनां नवपल्लवानि तैर्घने । अपि च,–मधुमुदितेति । हे राधे! इह विलस । किंभूते राधे? कुसुमशरे कामे रसो रागः साभिलाषो भावोऽभिप्रायो यस्यास्तस्याः संबुद्धिः । किंभूते इह? मधुना मुदितं यन्मधुपकुलं तेन कलितो रावो गुञ्जारवो यत्र

---

॥ ४ ॥ विततेति । हे राधे! माधवसमीपं प्रविश । इह केलिसदने चिरं विलस च । कीदृशे केलिसदने? विततैर्विस्तीर्णैर्बहुभिर्वल्लीनां लतानां नवपल्लवैर्घने सान्द्रे । त्वं कीदृशी? अलसपीनजघने । अलसे मन्थरे पीने मांसले जघने यस्यास्तादृशि ॥ ५ ॥ मधुमुदितेति । कीदृशे केलिसदने? मधुना पुष्परसेन मुदितान्यानन्दितानि यानि मधुपकुलानि भ्रमरसमूहास्तैः कलितो विहितो रावः शब्दो यत्र तादृशे । त्वं कीदृशी? मदनरसरभसभावे मदनस्य कामस्य यो रसः शृङ्गाराख्यस्तत्र यो रभस उत्साहस्तेनोपलक्षितो भावो यस्यास्तादृशि । यद्वा,–इह राधे! माधवे विलस । कीदृशे माधवे? मदनरसेन यो रभसस्तेनोपलक्षितो भावो यस्य तादृशे इत्यर्थः । यद्यपि मधुपेनैव मधुपानकर्तृत्वं प्राप्तं तथापि इदानीं मधुपानप्राप्तये मधुमुदितेत्युपात्तम् ॥ ६ ॥ मधुरतरेति । कीदृशे केलिसदने? मधुरतरो यः पिकनिकराणां कोकिलसमूहानां निनदः शब्दस्तेन मुखरे वाचाले । यद्वा,–एतदपि 'राधे' इत्यस्यैव विशेषणम् । तदा मधुरतरपिकनिकराणामिव यो निनदः सुरते कण्ठकूजितं तेन मुखरमित्यर्थः । पुनः कीदृशि? दशनरुचिर्दन्तकान्तिरेव रुचिरं शिखरं माणिक्यविशेषो यस्यास्तादृशि । यद्वा,–दशनरुचिवद्रुचिरं शिखरं माणिक्यविशेषो यस्यास्तादृशि । यद्वा,–इह माधवे विलस । कीदृशे माधवे? दशनरुचिरुचिरशिखरे । 'दशनरुचि–'इत्यत्र द्वितीयव्याख्याने प्रसिद्धशिखरस्योपमेयत्वयाऽस्य विपर्यासोपमा बोध्या । तदुक्तं दण्डिना—( का. २।१७) 'त्वदाननमिवोन्निद्रमरविन्दमभूदिति । सा प्रसिद्धविपर्यासाद्विपर्यासोपमेष्यते ॥' इति । 'पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः ।' इति शाश्वतः ॥ ७ ॥

---

पाठा०–१ 'विलस····।····जघने ॥ १६ ॥' RP. २ 'विलस मदनरसरभसभावे' RM., S. 'विलस मदनरभसरसभावे' O. ३ 'मधुरतरपिक०' C., P.

विहितपद्मावतीसुखसमाजे ।
कुरु मुरारे ! मङ्गलशतानि ।
भणति जयदेवकविराजराजे । प्रविश० ॥ ८ ॥

त्वां चित्तेन चिरं वहन्नय[1]मतिश्रान्तो भृशं तापितः
कन्दर्पेण च[2] पातुमिच्छति सुधासंबाधबिम्बाधरम् ।
अस्याङ्कं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्मीलव-
क्रीते दास इवोपसेवितपदाम्भोजे कुतः संभ्रमः ? ॥ ९ ॥

॥ ७ ॥ अपि च,—विहितेति । इदानीमष्टपदीं परमेश्वरे समर्पयन्नाह—हे मुरारे ! जयदेवकविराजे मङ्गलशतानि कुरु । किंभूते ? विहितं कृतं पद्मावत्या लक्ष्म्याः सुखं सुखरूपं समाजं स्थानं प्रासादो येन । किन्दुबिल्वे जयदेवकारितो महालक्ष्म्याः प्रासादोऽस्तीति प्रसिद्धिः । लक्ष्मीभक्त्या हरिस्तुष्यतीति ॥ ८ ॥ इदानीं त्रपानिरसनायाह—त्वामिति । हे राधे ! अयं श्रीकृष्णस्तव सुधासंबाधं सुधायाः संकटं बिम्बाधरं पातुमिच्छति । किंभूतोऽयम् ? त्वामेवंविधां दुर्वहां चित्तेन वहन्नतिश्रान्तः श्रमं प्राप्तः अत एव भृशं तापितः । यतः यः श्रान्तस्तप्तश्च भवति स तदुपशान्त्यै सुधादिपानं कर्तुमिच्छति । तत्तस्मादस्य मुरारेरङ्कं क्षणमलंकुरु । कथं मयास्य तादृशस्य महानुभावस्यैतत्कर्तुं युज्यत इति वदसि चेदित्याशङ्क्याह—इह तावत्संभ्रम आदरः कुतः ? किंभूते इह ? भ्रूक्षेप एव यो लक्ष्मीलवस्तेन क्रीते । एतावता मूल्येन गृहीते आदरो न कर्तव्य इति । अत एव दास इव ।

विहितेति । हे मुरारे ! जयदेवकविराजराजे जयदेव एव कवीनां राजराजः सार्वभौमस्तत्र मङ्गलशतानि कल्याणशतानि कुरु । कीदृशे ? भणति तव गुणान्वदति । पुनः कीदृशे ? विहितः पद्मावत्याः सुखसमाजः सुखसमूहो येन तादृशे । एतेन स्वस्त्रीतत्परत्वकथनेन परस्त्रीवैमुख्यं ध्वनितम् । 'राजराजः कुबेरेऽपि सार्वभौमे सुधाकरे ।' इति विश्वः ॥ ८ ॥ कृष्णोत्कण्ठाधिक्यमाह—त्वामिति । अयं कृष्णस्त्वां चित्तेन मनसा वहन्नतिश्रान्तोऽतिशयेन श्रमयुक्तो जातः । कन्दर्पेण कामेन च भृशमतिशयेन तापितः संतापितः । अतिसूक्ष्मे चित्ते पीनस्तनजघनवत्याः स्तनधारणेन श्रमो युक्त एव । अन्योऽपि यो गुरुतरभारोद्वहनं करोति, तस्याप्यतिश्रमो भवतीति भावः । अतस्तव सुधयाऽमृतेन संबाधं संकटं बिम्बाधरं बिम्बफलमधरमोष्ठं पातुमिच्छति । तस्माद्धेतोरस्य कृष्णस्याङ्कं क्रोडं क्षणं त्वमलंकुरु भूषय । नन्वयं बहुनायिकानुरक्तः, अतस्तदङ्कारोहणे बिभेमीत्यत आह—इहेति । इह कृष्णे कुतः कस्माद्धेतोः संभ्रमो भयम् ? कीदृशे कृष्णे ? सेवितं त्वदीयपदाम्भोजं त्वदीयचरणकमलं येन तादृशे । अत एव दासजनेऽपि । तत्र हेतुगर्भविशेषणमाह—भ्रूक्षेपेति । भ्रूक्षेपस्य भ्रुवः चालनस्य

पाठा०–१ 'मिति श्रान्तो' C., D. २ 'तु' C.

सा ससाध्वससानन्दं गोविन्दे लोललोचना ।
सिञ्जानमञ्जुमञ्जीरं प्रविवेशनिवेशनम् ॥ २ ॥

**वराडीरागयतितालाभ्यां गीयते । प्रबन्धः ॥ २२ ॥**

राधावदनविलोकनविकसितविविधविकारविभङ्गम् ।
जलनिधिमिव विधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् ॥ १ ॥
हरिमेकरसं चिरमभिलषितविलासम् ।
सा ददर्श गुरुहर्षवशंवदवदनमनङ्गनिवासम् ॥ ध्रुवपदम् ॥

---

उपसेवितं तव पदाम्भोजं येन तस्मिन् । शार्दूलविक्रीडितम् । रूपकोत्प्रेक्षे अलंकृती ॥ ६ ॥ इदानीं प्रपञ्चासक्तुचितं कर्माह—सेति । सा राधा अभिवेशनं रत्यायोपकल्पितकेलिगृहं प्रविवेश । कथं यथा स्यात्तथा ? सिञ्जानौ सशब्दौ मञ्जुमञ्जीरौ यत्र तथा स्यात् । किंभूता सा ? ससाध्वसं च सानन्दं च ससाध्वससानन्दं यथा स्यात्तथा । गोविन्दे लोले सतृष्णे लोचने च यस्याः सा । साध्वसेन चले । आनन्देन साभिलाषे । अत्र ससाध्वसानन्दमिति एकेनैव 'सह'शब्देन कृते प्रत्येकमुपादानं चलसतृष्णयोः पृथग्योगार्थम् । अनुष्टुप्पथ्यावृत्तम् ॥ २ ॥ आर्योक्तमेव विवृणोति—राधावदनेति । तत्र पूर्वं ध्रुवपदम् । हरिमेकरसमिति । सा

---

न्या लक्ष्मी संपत्तस्या लयो श्लेषलेन कीर्ते । 'संकटं ना तु संबाधः' इत्यमरः । 'लयश्लेषाकनानवः' इत्यमरः ॥ १ ॥ **सा ससाध्वसेति** । सा राधा निकेतनं लीलागृहं प्रविवेश प्रविष्टा । किं कुर्वती ? मञ्जुर्मनोहरो यो मञ्जीरो नूपुरस्तं सिञ्जाना शब्दं कुर्वती । कथं यथा स्यात् ? ससाध्वसं साध्वससहितं सानन्दमानन्दसहितं च यथा स्यादित्यर्थः । कीदृशी सा ? गोविन्दे लोले चपले लोचने यस्याः सा ॥ २ ॥ **राधेति** । गीतस्यास्य वराडीरागो रूपकतालः । गीतार्थस्तु—सा राधा हरिं कृष्णं ददर्श दृष्टवती । कीदृशम् ? एकरसं एको मुख्यः शृङ्गाराख्यो रसो यस्य तम् । यद्वा,– एकस्तुल्यो रसो यस्य तम् । राधाया यादृशः शृङ्गाररसः कृष्णस्यापि तादृश एवेति भावः । पुनः कीदृशम् ? चिरं बहुकालं व्याप्याभिलषितो वाञ्छितो विलासः केलिर्येन तम् । पुनः कीदृशम् ? गुरुर्महान्यो हर्ष आनन्दस्तस्य वशंवदमायत्तं वदनं यस्य तम् । पुनः कीदृशं हरिम् ? अनङ्गविकाशम् । "क्वचित् अनङ्गविकास" इति पाठः । तदानङ्गस्य कामस्य विकासः स्फुटता यत्र तम् । **राधेति** । पुनः कीदृशं हरिम् ? राधाया वदनं मुखं तस्य विलोकनेन

---

पाठा०–१ 'ससाध्वसमानन्दं' S. २ 'सिञ्जाना' RM., D., C. ३ 'प्रविवेश निके( वेश° P. )तनम्' B. ४ 'रूपकताले' P. ५ '°दलित-तुङ्गतरङ्गम्' RM. ६ '°मनङ्गविकारम्' RM., '°मनङ्गविकाशम्' D., C.

**हारममलतरतारमुरसि दधतं परिरभ्य विदूरम् ।**
**स्फुटतरफेनकदम्बकरम्बितमिव यमुनाजलपूरम् ॥ हरि० ॥ २ ॥**

---

राधा हरिं वदति स्म ओकुरवेन हरिस्वरूपेण संवादं प्राप्नोति स्म । किंभूतं हरिम्? एकरसमेक एव राधाविषये रसो रागो यस्य । पुनः किंभूतम्? चिरमभिलषितो राधासंबन्धी विलासो येन । पुनः किंभूतम्? गुरुर्यो राधाया आगमननिमित्तो हर्षस्तस्य वशंवदं वशं वदनं यस्य । पुनः किंभूतम्? अनङ्गनिवासं कामाश्रयम् । इति ध्रुवः ॥ अथ पदानि । किंभूतं हरिम्? राधावदनविलोकनेन विकसिता उल्लसिता विविधा विकाराणां सात्त्विकभावानां विभङ्गा यत्र । एतेन राधामुखदर्शनादक्रममेव स्तम्भादयः प्रादुर्भूता इत्यर्थः । कमिव? जलनिधिमिव । किंभूतं जलनिधिम्? विधुमण्डलदर्शनेन तरलिता ललिता मनोहरास्तरङ्गा यत्र । अत्र 'मण्डल'ग्रहणं समुद्रवृद्धिहेतुत्वं ज्ञापयति ॥ १ ॥ अपि च,–हारमिति । किंभूतं हरिम्? उरसि हारं दधतम् । किंभूतं हारम्? अमलतरतां कच्छतीति अमलतरतारम् । अथवा अमलतरा निर्दोषास्तारा निर्मलमौक्तिकानि यत्र । किं कृत्वा? विदूरं दीर्घं विलम्ब्य विलम्बं कृत्वा । कमिव? यमुनाजले पूरमिव । किंभूतं पूरम्? स्फुटतरा ये फेनास्तेन मिश्रितम् । अनेन स्वेदाख्यसात्त्विकभावोत्पत्तिर्दर्शिता । अनु च हारदर्शनं च तस्य श्यामव्यूढोरसि गौरी त्वं स्फुरन्ती दीप्तिमेष्यसीति प्रोत्साहनम् । पौरुषायितरतविशेषश्च । फेनकदम्बेन सुरतश्रमजनिता उदबिन्दवश्च दर्शिताः । यमुनाजलपूरोपमानेन समद्युतिश्च ॥ १ ॥ अपि च,–

---

वीक्षणेन विकसिताः प्रकटिता विविधा नानाविधा विकारा जृम्भणापाङ्गक्षेपणकरविमर्शादिरूपास्त एव विभङ्गा विचित्रोर्मयो येन तम् । कमिव? जलनिधिमिव । कीदृशं जलनिधिम्? विधुमण्डलस्य चन्द्रमण्डलस्य दर्शनेन तरलिताश्चञ्चलीकृतास्तुङ्गा अत्युच्चास्तरङ्गा ऊर्मयो यस्य तादृशम् । अत्रागाधशृङ्गाररसाश्रयत्वेन कृष्णस्य जलनिधिसाम्यम् । राधामुखस्य चाह्लादकारित्वादिना चन्द्रसाम्यम् । जृम्भणादिरूपाङ्गविकारस्योत्तरोत्पन्नतया तरङ्गस्य साम्यम् । 'भङ्गस्तरङ्गे भेदे तु भङ्गो जयविपर्यये' इति विश्वः ॥ १ ॥ विविधविकारानेवाह—हारमिति । कीदृशं कृष्णम्? विदूरमतिशयेन परिरभ्यालिङ्ग्य उरसि वक्षसि हारं दधतं बिभ्राणम् । कीदृशम्? अमलतरोऽतिशयेन विमलतरस्तारः शुद्धमौक्तिकं यत्र तादृशम् । कमिव? स्फुटतरः प्रकटतरो यः फेनकदम्बः फेनसमूहस्तेन करम्बितं मिश्रितं यमुनाजलपूरमिव कालिन्दीप्रवाहमिव । अत्र कृष्णशरीरस्य श्यामस्निग्धतया यमुनाप्रवाहसाम्यम् । हारस्य चातिशुभ्रतया फेनसमूहसाम्यं बोध्यम् । अत्र हारालिङ्गनेन स्वाभिलाषप्रकटनान्मोट्टायिताख्यो भावो वर्णितः । तदुक्तं **रसार्णवसुधाकरे**—'स्वाभिलाषप्रकटनं मोट्टायिताख्यम्' इति । 'मिश्रितं तु

---

१ 'परिलंब्य' D., C., 'परिलम्बितदूरं' P.

श्यामलमृदुलकलेवरमण्डलमधिगतगौरदुकूलम् ।
नीलनलिनमिव पीतपरागपटलभरवलयितमूलम् ॥ हरि० ॥ ३ ॥
तरलदृगञ्चलचलनमनोहरवदनजनितरतिरागम् ।
स्फुटकमलोदरखेलितखञ्जनयुगमिव शरदि तडागम् ॥ हरि० ॥ ४

श्यामलेति । किंभूतं हरिम् ? श्यामलं मृदुलं कलेवरमण्डलं यस्य । पुनः किंभूतम् ? अधिगते गौरे दुकूले येन । किमिव ? नीलनलिनमिव । पीतं यत्परागपटलं तस्य भरस्तेन वलयितं मूलं यस्य । अनेन गौराङ्ग्यास्तव कृष्णेन लतावेष्टितालिङ्गनविशेषे काप्यभिख्या भविष्यतीति प्रोत्साहनम् । तल्लक्षणं यथा—'प्रियमनुकृतवल्लीविभ्रमा वेष्टयन्ती द्रुममिव सरलाङ्गी मन्दसीत्कारदीर्घम् । वदनमुदितखेलाकन्दमाचुम्बनार्थं नमयति विनताङ्गी यल्लतावेष्टितं तत्' इति ॥ ३ ॥ अपि च,-तरलेति । किंभूतं हरिम् ? तरलदृगञ्चलचलनेन मनोहरं यद्वदनं तेन जनितो रतिरागो येन । अनेन कान्ता दृष्टिरुक्ता । यथा—'आपिबन्तीव दृश्यं या सा विकाशातिनिर्मला । सभ्रूक्षेपकटाक्षा च कान्ता मन्मथवर्धिनी' । कमिव ? तडागमिव । किंभूतं तडागम् ? शरदि स्फुटे विकसिते कमलोदरे खेलितं खञ्जनयुगं यत्र । शरत्काले खञ्जनवर्णनमुचितमेव । पद्मेऽपि खञ्जनं मिलत्येव । तदुक्तम्—'अब्जेषु गोषु गजवाजिमहोरगेषु राज्यप्रदः कुशलदः शुचिशाड्वलेषु' । अत्र 'कमलोदर'ग्रहणेन पद्मासनं नाम रतिविशेषः सूचितः । यथा—'जङ्घायुगलस्य विपर्ययतः पद्मा-

करम्बितम्' इति भरणिः । 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके' इति विश्वः । 'पूरो जलप्रवाहः स्यात्' इति च ॥ २ ॥ पुनः कीदृशम् ? श्यामलेति । श्यामलं नीलं मृदुलं कोमलं कलेवरमण्डलं शरीरमण्डलं यस्य तादृशम् । पुनः कीदृशम् ? अधिगतमधिकं परिधेयत्वेन ज्ञातं गौरं पीतं दुकूलं पट्टवस्त्रं येन तम् । किमिव ? नीलनलिनमिव श्यामकमलमिव । कीदृशं नीलनलिनम् ? पीतो यः परागः पुष्परेणुस्तस्य पटलं समूहस्तस्य यो भरोऽतिशयस्तेन वलितं वेष्टितं मूलं यस्य तादृशम् । अतः कृष्णस्य स्निग्धश्यामतया नीलोत्पलसाम्यम् । पीतपट्टाम्बरस्य च मूललग्नपीतरागसाम्यम् । 'अथ कलेवरम् । गात्रं वपुः संहननम्' इत्यमरः ॥ ३ ॥ पुनः कीदृशम् ? तरलेति । तरलो दृगञ्चलः कटाक्षस्तस्य चलनेन मनोहरं सुन्दरं यद्वदनं तेन जनित उत्पादितो रतिरागो राधायाः सुरतेच्छा येन तादृशम् । कमिव ? शरदि शरत्काले स्फुटकमलोदरे विकसितपद्मगर्भे खेलितं क्रीडितं खञ्जनयुगं खञ्जरीटयुगलं यत्र तादृशं तडागमिव । अत्र कृष्णस्य राधादर्शनासंक्षुभितत्वेन शरत्कालीनतडागसाम्यम् । स्मेरमुखं मन्दहास्यं च विकसितकमलसाम्यम् । तारकाः श्यामिकोपेतत्वेन परितः शुभ्रत्वेनातिचञ्चलत्वेन तयोर्नयोः खञ्जनसाम्यम् । शरत्काले जलाशयस्य कमलगर्भे खेलत्खञ्जनौ दृष्टः

पाठा०-१ "°वलन°" BP.

वदनकमलपरिशीलनमिलितमिहिरसमकुण्डलशोभम् ।
स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभम् ॥ हरि० ॥ ५ ॥
शशिकिरणच्छुरितोदरजलधरसुन्दरसकुसुमकेशम् ।
तिमिरोदितविधुमण्डलनिर्मलमलयजतिलकनिवेशम् ॥ हरि० ॥ ६ ॥

---

स्तनमुकमिदं युवतेः' ॥ ४ ॥ अपि च,-वदनेति । किंलक्षणं हरिम् ? वदनकर्तृकपरिशीलनेन मिलितो यो मिहिरस्तेन समे ये कुण्डले ताभ्यां शोभत इति । अनेन शारीरकसूर्यसमाकर्षणसद्भावरतान्तः सूचितः । तदेव चिह्नयति-स्मितकान्त्या रुचिरः समुज्ज्वलितो योऽधरपल्लवस्तेन कृतो रतेर्लोभः संभोगतृष्णा येन । रतान्ते किल ताम्बूलादिरागहासादिना अधर उज्ज्वलो भवतीति कृतरतिलोभमिति रतिविरतावपि पुना रताय सस्पृहत्वम् । एतदेव शृङ्गारसर्वस्वं यद्रतिविरतावपि न जुगुप्सेति ॥ ५ ॥ अपि च,-शशिकिरणेति । किंभूतं हरिम् ? शशिकिरणैः कर्बुरितोदरजलधरवत्सुन्दराः सकुसुमाः केशा यस्य । पुनः किंभूतम् ? तिमिरेऽन्धकारे उदितं यद्विधुमण्डलं तद्वन्निर्मलो यो मलयजतिलकस्तस्य निवेशो यत्र आभ्यां विशेषणाभ्यां शशिकिरणमिलिताभ्रशोभया अनु च सतिमिरनवोदितचन्द्रशोभया च सुरतान्ते

---

सन्द्रष्टुर्वाञ्छितं प्रयच्छति । एवं चलदपाङ्गवत्कृष्णदर्शनं राधाया वाञ्छितं केलिसुखं दास्यतीति शरत्कालीनकमलमध्यस्य खञ्जनोपमानेन ध्वनितम् । तदुक्तं वराहे—'हेमन्तसीमविचिताम्बरकमलोत्पलपूजितोपलब्धेषु । दधिपात्रधान्यकूटे दृष्टोऽभीष्टानि नेष्टते विहगः' इति । 'खञ्जरीटस्तु खञ्जनः' इत्यमरः । 'तडागस्तु जलाधारः' इति विश्वः ॥ ४ ॥ पुनः कीदृशम् ? । वदनेति । कृष्णवदनकमलस्य मुखपद्मस्य परिशीलनाय मिलितौ यौ मिहिरौ सूर्यौ ताभ्यां समे ये कुण्डले ताभ्यां शोभा कान्तिर्यस्य तम् । अत्र कुण्डलयोर्नानामणिखचितत्वेन सूर्योपमा बोध्या । अभूतोपमा चेयम् । 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः' इत्यमरः । पुनः कीदृशम् ? स्मितस्य ईषद्धासस्य या रुचिः कान्तिस्तया रुचिरो मनोहरः समुल्लसितो राधाधरपानोत्कण्ठया ईषत्कम्पितो योऽधरपल्लवस्तेन कृतो राधाया रतिलोभः सुरतेच्छा येन तम् ॥ ५ ॥ पुनः कीदृशम् ? शशिकिरणेति । शशिकिरणैश्चन्द्रकिरणैश्छुरितं संबद्धमुदरमभ्यन्तरं यस्य तादृशो यो जलधरो मेघस्तद्वत्सुन्दराः सुकुमाराः कुसुमं पुष्पं तत्सहिताः केशा यस्य तम् । अत्र केशानां श्यामतया जलधरसाम्यम् । तत्र स्थितकुसुमानां मेघान्तरितचन्द्रकिरणसाम्यं बोध्यम् । पुनः कीदृशम् ? तिमिरेऽन्धकारे उदितं प्रकटीभूतं यच्चन्द्रबिम्बं तद्वन्निर्मलस्य मलयजतिलकस्य निवेशो विन्यासो यत्र

---

पाठा०-१ "°मीलित°" P., D. २ "°समुज्ज्वलिताधर°" RP., S., P. ३ "°सुकुसुमकेशम्" RM., C., "°कुसुमसुकेशम्" D.

विपुलपुलकभरदन्तुरितं रतिकेलिकलाभिरधीरम् ।
मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् ॥ हरि० ॥ ७ ॥
श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारम् ।
प्रणमत हृदि विनिधाय हरिं सुचिरं सुकृतोदयसारम् ॥हरि० ॥ ८

---

स्रस्तधम्मिल्लत्वं खेदाम्बुपूरैः किंचिन्मृष्टविशेषकत्वं मम भविष्यतीति भावलः प्रोत्साहः सूचितः ॥ ६ ॥ अपि च,-विपुलेति । किंभूतं हरिम् ? विपुलपुलकभरैर्दन्तुरितं रोमाञ्चितम् । अपि च,-उक्तलक्षणाभी रतिकेलिकलाभिरुपलक्षितम् । अत एव तदर्थमधीरम् । अपि च किंभूतम् ? मणिगणकिरणसमूहसमुज्ज्वलानि यानि भूषणानि तैः सुभगं शरीरं यस्य । एतेन भविष्यत्सुरतान्ते भूषणपरिग्रहो द्योत्यते । 'सुचिर' इत्यादौ अभिसारिका प्रगल्भा नायिका । 'हारावली' इत्यादि आसर्गान्तं मध्या नायिका । तल्लक्षणं—'तुल्यलज्जास्मरा मध्या मोहान्तसुरतक्षमा' ॥ ७ ॥ अपि च,-श्रीजयदेवेति । हे जनाः ! हरिं सुचिरं हृदि विनिधाय प्रणमत । किंभूतं हरिम् ? सुकृतोदये सारम् । पुनः किंभूतम् ? श्रीजयदेवभणितो यो विभवः सामर्थ्यं तेन द्विगुणीकृतां भूषणभां शोभां ऋच्छतीति । अथवा,-द्विगुणीकृतां भूषणभां रातीति । एतत्कृत्वा उत्कर्षो भवतीति । अथवा,-श्रीजयदेवभणितेन विभवन्विभुर्भवन्द्विगुणीकृतो भूषणानां भारः समूहो येन । जयदेवभणितं श्रुत्वा भूषणानामनादरोऽभूदित्यर्थः ॥ 'क्रमेण मद्दकेदारश्रीरागस्थानगौडकाः । धोरणी मालवीयश्च वराटी मेघरागकः ॥ मालवश्रीर्देवशालो गौण्डकृच्चाथ भैरवी । धन्नासिका वसन्तश्च गुर्जरी च मल्हारकः ॥ ललितः सप्तदशमो रागास्तावन्ति च क्रमात् । पदानि तेषु तालाः स्युरितस्तन्नाम कीर्त्यते ॥ आद्यत्रिसप्तदशमद्वादशे द्रुतमण्ठकाः । द्वितीये नवमे चैकादशे चैव त्रयोदशे ॥ पदे पञ्चदशे सप्तदशे रूपक ईरितः । चतुर्थे प्रतितालाख्या द्रुतालः पञ्चमे स्मृतः ॥ त्रिपुटः षष्ठाष्टमयोः

---

शदृशम् । अत्र कृष्णस्य गाढान्धकारसाम्यं ललाटस्थमण्डलाकृतितिलकस्य चन्द्रमण्डलसाम्यम् । पूर्णचन्द्रबिम्बस्थितिकाले तिमिरसाम्यस्यासंभवादभूतोपमा ज्ञेया ॥ ६ ॥ पुनः कीदृशम् ? विपुलेति । विपुलो यः पुलकभरो रोमाञ्चातिशयस्तेन दन्तुरितं व्याप्तम् । पुनः कीदृशम् ? रतिकेलिकलाभिश्चुम्बनादिविशेषचातुरीभिरधीरं चञ्चलम् । पुनः कीदृशम् ? मणिगणानां मणिसमूहानां किरणसमूहेन समुज्ज्वलानि यानि भूषणानि मुकुटाङ्गदमञ्जीरादीनि तैः सुभगं शरीरं यस्य तम् । 'निम्नोन्नततया व्याप्तं दन्तुरं कथ्यते बुधैः ।' इति धरणिः ॥ ७ ॥ श्रीजयदेवेति । हे जनाः ! हरिं प्रणमत । किं कृत्वा ? सुचिरं बहुकालं व्याप्य हृदि चित्ते विनिधाय । कीदृशम् ? सुकृतोदयस्य पुण्योदयस्य सारं सारभूतम् । यद्वा,-सुकृतोदय एव सारो धनं यस्यास्तम् । पुनः कीदृशम् ? श्रीजयदेवस्य भणितविभवे

अतिक्रम्यापाङ्गं श्रवणपथपर्यन्तगमन-
प्रयासेनेवाक्ष्णोस्तरलतरतारं गमितयोः ।
इदानीं राधायाः प्रियतमसमायातसमये
पपात [1]स्वेदाम्बुप्रसर इव हर्षाश्रुनिकरः ॥ ९ ॥

---

स्याद्द्रुतप्रतिमण्ठकः । चतुर्दशे षोडशे च भङ्गः स्यात्प्रतितालकम् ॥ मध्यमादौ पुनर्मुक्तिः शृङ्गारः साभिलाषयोः । स्त्रीपुंसयोरुत्तमस्य नायकस्योपवर्णनम् ॥ कैशिकीं रीतिमाश्रित्य पदानां स्वस्वनामता । छन्दः स्वेच्छाविरचितं रूपके यत्र दृश्यते । स रागश्रेणिनामार्यं प्रीतिकुरुकमलापतेः ॥' इति सानन्दगोविन्दरागश्रेणिकुसुमाभरणनामा द्वाविंशतितमः प्रबन्धः ॥ ८ ॥ इदानीं राधाया अपि सात्त्विकभावोत्पत्तिं दर्शयति—अतिक्रम्येति । इदानीं राधाया अक्ष्णोर्हर्षाश्रुनिकरः पपात । क ? प्रियतमसमायातसमये प्रियतमस्य समायातं समागमस्तस्य समये काले । क इव ? अपाङ्गं नेत्रप्रान्तमतिक्रम्य श्रवणपथपर्यन्तगमनप्रयासेन स्वेदाम्बुपूर इव । किंभूतयोर्नेत्रयोः ? प्रियदर्शनाकाङ्क्षया अतिशयेन चञ्चलत्वं प्रापितयोः । अत्र सात्त्विकभावान्तरित उपमा-

---

वाग्विभवे द्विगुणीकृतभूषणभारोऽलंकारसमूहो येन तम् । जयदेवसरस्वती स्वयमेवोत्प्रेक्षालंकारवती । भगवद्गुणैस्तु वर्णनीयैः सुतरामलंकृतेति भावः ॥ ८ ॥

इदानीं राधाया रसविक्रियामाह—अतिक्रम्येति । हे सखि ! यदि राधा हरिं ददर्श तदानीं प्रियतमसमालोकसमये राधाया अक्ष्णोर्वर्तमान आनन्दसमूहः अश्रुरूपेण पतितः, हर्षाश्रुनिकरः पपातेत्यर्थः । ननु समीचीनभाजने स्थापितः कथं पपातेत्यत्राह—किंभूतयोरक्ष्णोः ? तरलतरतारं दर्शनासक्तेनातिशयेन चञ्चलाक्षिकनीनिकं यथा स्यादेवं पतितयोः; सौन्दर्यनैभृत्येनातितृष्णानिरीक्षणात् । यस्मिन्नङ्गे पतति तां पुनरुत्थानासामर्थ्येन तत्रैव स्थिता इति ज्ञापनाय पतितयोरित्युक्तम् । तथा च भाजने पतिते तदाधारवस्तुपतनं नियतमेवेति भावः । पतनहेतुमुत्प्रेक्षते—अतिक्रम्येति । अपाङ्गं नेत्रप्रान्तदेशमतिक्रम्योल्लङ्घ्य श्रवणपथपर्यन्तगमनप्रयासेनैव स्वेदाम्बुप्रसर इव कर्णकर्षावधिचलनजनितप्रयासेन स्वेदाम्बुपूर इव । अन्योऽपि दूरगमनेन श्रान्तः खिद्यति पतति च । तथा चानेन विशालनयनत्वं तस्याः सूचितम् । अथवाऽन्तर्गतो हर्षोऽधिकतयान्तःस्थानमप्राप्य बहिरश्रुव्याजेन पतित इति भावः । उत्प्रेक्षालंकारः ॥ ९ ॥

---

**पाठा०**—१ "रमलतर" D., P. २ 'पतितयोः' RM., P., D., C. ३ 'तदानीं' D. ४ "समालोकसमये' RM., C., S., P., S. ५ 'स्वेदाम्भःप्रसर" D.

भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहितं-
    स्मितं याते गेहाद्बहिरवहितालीपरिजने ।
प्रियास्यं पश्यन्त्याः स्मरपरवशाकूतसुभगं
    सलज्जा लज्जापि व्यगमदिव दूरं मृगदृशः ॥ २ ॥

सानन्दं नन्दसूनुर्दिशतु मितपरं संमदं मन्दमन्दं
    राधामाधाय बाह्वोर्विवरमनु दृढं पीडयन्प्रीतियोगात् ।
तुङ्गौ तस्या उरोजावतनु वैरतनोर्निर्गतौ मा स्म भूतां
    पृष्ठं निर्भिद्य तस्माद्बहिरिति वलितग्रीवमालोकयन्वः ॥ ३ ॥

---

ल्ंकारः । शिखरिणी वृत्तम् ॥ १ ॥ इदानीं मिलितायां तस्यां सखीकृत्य-माह—भजन्त्या इति । मृगदृशो राधाया लज्जापि अतिदूरं व्यगमत् । किंभूता लज्जा ? सलज्जा लज्जासहिता । किंभूतायाः ? प्रियास्यं पश्यन्त्याः । किंभूतं प्रियास्यम् ? स्मरपरवशं यदाकूतमभिप्रायस्तेन सुभगं सुन्दरम् । पुनः किंभूतायाः ? तल्पान्तं तल्पसमीपं भजन्त्या आश्रयन्त्याः । क्व सति ? अवहितालीपरिजने अवहितः सावधानो यः सखीलक्षणः परिजनस्तस्मिन्गेहाद्बहिर्गते सति । कथं यथा स्यात्तथा ? कृता या कपटकण्डूतिस्तया पिहितमाच्छादितं स्मितं यथा स्यात्तथा । शिखरिणी वृत्तम् । अव्यङ्ग्यो भावो रसवदलंकारता ॥ २ ॥ सानन्दमिति । नन्दसूनुः श्रीगोपालो वो युष्मभ्यं मितपरममेयं संमदं दिशतु । कथं यथा स्यात् ? सानन्दं यथा स्यात्तथा । किं कुर्वन् ? बाह्वोर्विवरमनु राधां मन्दं मन्दमाधाय । 'मन्दं मन्दम्' इति 'मैनां करस्पर्शोऽपि व्याकुलीकुर्यात्' इति तस्याः शिरीषपुष्पाधिकसौकुमार्यं व्यज्यते । प्रीतियोगाद्दृढं पीडयन्नालिङ्गयन् । 'दृढं पीडयन्' इत्यनेनानुरागातिशयो व्यज्यते । तेन च तद्गतं विषयत्वं व्यज्यते । पुनः किं कुर्वन् ? इति वलितग्रीवं

---

भजन्त्या इति । तस्मिन्काले तल्पान्तं शय्यैकदेशं भजन्त्या आश्रयन्त्या मृगदृशो हरिणनयनाया राधाया लज्जापि सलज्जेव सखीडेव भूत्वा दूरमतिशयेन व्यगमद्विगता । क्व सति ? अवहितालीपरिजने अवहितः कृतावधानो य आलीपरिजनः सखीपरिजनस्तस्मिन् । कृतकपटकण्डूति यथा स्यात्तथा । कृता कपटेन व्याजेन कण्डूतिः कर्णादिकण्डूयनं यत्र एवं यथा स्यात्तथा बहिर्याते सति

---

पाठा०–१ "°विहित°" RM. २ "°स्मिते' S., C., P. ३ 'स्मरसरस-माकूत' P., RM., D. 'स्मरशरवशा°' C. ४ "°दतिदूरं°" D., 'तनुवल्लतनोः'.

---

टिप्प०–1 'सानन्दं–' 'जयश्री–', 'सौन्दर्यैक–' इति श्लोकत्रयं रसमञ्जरी-सञ्जीविनी-दीपिकादिटीकाद्वयसंमतमिति विभाव्यते । चक्रटीका नोपलभ्यते ।

जयश्रीविन्यस्तैर्महित इव मन्दारकुसुमैः
स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित इव ।
भुजापीडक्रीडाहतकुवलयापीडकरिणः
प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ४ ॥

यथा स्यात्तथा आलोकयन् । ते च कुतीति किम् ? तस्या वरतनोरतनु शीघ्रं यथा स्यात्तथा तुङ्गौ उरोजौ पृष्ठं निर्भिद्य तस्मात्बहिर्निर्गतौ मा स्म भूताम् । अनेनोरोजयोः काठिन्यं तीक्ष्णत्वं च व्यङ्ग्यम् । अथवा,–अतनुवरतनोरिति एकपदत्वेन अतनोः कामस्य वरा उत्कृष्टा तनुरिति चेति । अनयैव कामो विश्वजयाय मूर्तिमानित्यर्थः; अत्राद्भुतो रसः। राधामाधवेत्यादिः शृङ्गारः । न चानयोरन्योन्यविरोधः । अन्यपरत्वात् । अद्भुतो वाच्योऽप्यङ्गम् । यदाह— 'विवक्षितरसे लब्धप्रतिष्ठे तु विधायिनाम् । वाच्यानामङ्गभावं वा प्रासाना-मुक्तिरच्छला ॥' इति । विशेषतस्तु प्रस्तुतपरिपोषकार्यसौ प्रकृतिरमणीयायां तस्यामधिकतरं सौकुमार्यमाविष्करोतीत्युपरम्यते । अलंकारसर्वस्वमतेनाति-शयोक्तिरलंकारः । संमददाने स्वानन्दमौचितीमावहति पुरुषः प्रमदायुक्तः । शृङ्गारः ( रसः ) । वैदर्भी रीतिः । प्रसादो गुणः ॥ ३ ॥ जयश्रीति । मुरजितो भुजदण्डो जयति । मुरं दैत्यविशेषं जितवान्मुरजित्, तस्य मुरजितः कृष्णस्य दण्डाकारो बाहुः सर्वोत्कर्षेण वर्तेत इत्यर्थः । सर्वोत्कृष्टत्वेन जगद्व-न्द्यत्वमभिव्यञ्जितम् । कीदृशो भुजदण्डः ? प्रकीर्णासृग्बिन्दुः विकीर्णा असृजो रुधिरस्य बिन्दवो यत्र स तथा । अत्र हेतुमाह—कीदृशस्य मुरजितः ? भुजापीडेति । भुजापीडस्य भुजदण्डस्य क्रीडया विलासेन हतो व्यापादितः कुवलयापीडाख्यः करी गजो येन स तस्य तथेति । यद्वा,–भुजापीडक्रीडया हतश्चासौ कुवलयापीडनामा करी च तस्येति कर्मधारयः । संबन्धे षष्ठी । तत्संबन्धिप्रकीर्णरुधिरस्य बिन्दवो यस्मिन्भुज-दण्डे स तथेति 'क्रीडा'शब्देनानायासो व्यज्यते । 'रुधिरेऽसृग्लोहितास्र-रक्तक्षतजशोणितम्' इत्यमरः । भुजहतहस्तिरुधिरबिन्दुभुजसंबन्ध उत्प्रेक्षा-बीजमित्युत्प्रेक्षते । कीदृश इव भुजदण्डः ? द्विपरणमुदा द्वाभ्यां नासा-मुखाभ्यां पिबतीति द्विपो हस्ती कुवलयापीडः तत्सङ्गरसमदेन स्वयमात्मना सिन्दूरेण मुद्रित इवाङ्कित इव । कुवलयापीडकरिसङ्ग्रामे 'साधुरयं मे बाहुः' इति हर्षवशात्क्षोभेन सिन्दूराङ्कितो बाहुरिति भावः । रणमुदेति हेत्वर्थे तृतीया । मुद्रित इति तारकादित्वादितच् । पुनरुत्प्रेक्षते—कीदृश इव

---

कुचाद्बहिर्गते सति । पुनः कथं यथा स्यात् ? विहितस्मितं विहितेषद्धासं यथा स्यात् । कीदृश्यास्तस्याः ? प्रियास्यं कृष्णस्य मुखं पश्यन्त्याः । कीदृशं मुखम् ? स्मरसरसं स्मरेण कामेन सरसं शृङ्गाररससहितम् । पुनः कीदृशम् ? आकूत-

सौन्दर्यैकनिधेरनङ्गललनालावण्यलीलाजुषो
राधाया हृदि पल्वले मनसिजक्रीडैकरङ्गस्थले ।
रम्योरोजसरोजखेलनरसित्वादात्मनः ख्यापय-
न्ध्यातुर्मानसराजहंसनिभतां देयान्मुकुन्दो मुदम् ॥ ५ ॥

इति श्रीजयदेवकृतौ श्रीगीतगोविन्दे राधिकामिलने
सानन्ददामोदरो नामैकादशः सर्गः ॥ ११ ॥

---

भुजदण्डः ? जयश्रीविन्यस्तैर्मन्दारकुसुमैर्महित इव । जयलक्ष्म्या प्रक्षिप्तमन्दारकुसुमैः पूजित इव । जयसंपदि विन्यस्तैरर्थाद्देवैरिति वा समरजयिन उपरि पुष्पवृष्टिरुचिता । यद्वा,–जयश्रिया लक्ष्म्या क्षिप्तैर्मन्दारकुसुमैर्महित उत्सवं प्रापितः । पतिजये सति पत्नी उत्सवं करोतीत्युचितम् । कुसुमरचितमार्पकं 'मन्दार'पदमौचितीमावहति । 'मह पूजायाम्' इत्यस्य क्तप्रत्यये महित इति रूपम् । महं प्रापित इत्यर्थे तारकादित्वादितच्प्रत्यय इति वा । शिखरिणी छन्दः । तल्लक्षणं संगीतराजे–'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' । उत्प्रेक्षालंकारः । तल्लक्षणं काव्यप्रकाशे (१०।९२)—'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति । अनुप्रासः शब्दालंकारः । तल्लक्षणम् (का. प्र. ९।७९)—'वर्णसाम्यमनुप्रासः' इति । पाञ्चाली रीतिः । आरभटी वृत्तिः । वीरो रसः ॥ ४ ॥ सौन्दर्येति । मुकुन्दो मुदं देयात् । अर्थाद्भक्तेभ्यः । मोचयति क्लेशात्प्राणिन इति मुकुन्दः । किं कुर्वन् ? ध्यातुर्नरस्य मानस इव मानसे राजहंससदृशतां कथयन् । कस्मात् ? राधाया हृदि पल्वले पल्वल इव पल्वले रम्योरोजसरोजखेलनरसित्वात् । रम्यौ मनोहरौ उरोजावेव सरोजे तत्र खेलनं तत्र रसित्वमेकाग्रभावस्तस्मात् । पल्वले किल सरोजसंभवः ? तत्र हंसेनैव भाव्यमिति रूपकमलंकारः । किंविशिष्टे हृदि ? मनसिजः कामस्तस्य क्रीडार्थमद्वितीयरङ्गभूमौ । किंविशिष्टाया राधायाः ? निधीयत इति सौन्दर्यस्याद्वितीयो निधिः सौन्दर्यैकनिधिस्तद्रूपायाः । पुनः किंभूतायाः ? अनङ्गस्य ललना रतिः तस्या लावण्यं तल्लीलया जुषतीति तस्या रतिरूपाया इत्यर्थः । शार्दूलविक्रीडितं छन्दः । प्रतिपदं रूपकमलंकारः । तल्लक्षणम्—'किंचित्साधर्म्यसंपत्तेस्तुल्यावयवलक्षणम् । स्वैर्विकल्पैर्विरचितं रूपं रूपकमिष्यते' इति । आशीश्चालंकारोऽपि ॥ ५ ॥

---

सुभगम् । आकूतेन तन्मयाख्येन सुभगं मनोहरम् ॥ २ ॥

---

पाठा०-१ 'अभिसारिकावर्णने सानन्दगोविन्दः' B.M., S.

मायद्दुर्दन्तिदन्तावलबलदलनोद्दण्डदोर्दण्डपिण्डो-
द्दामक्षेमानधामाभिनवनवभवद् भ्राजमानोरुकीर्तिः ।
व्याचष्ट स्पष्टसृष्टाष्टपदविवरणैः सर्गमेकादशं तं
पृथ्वीनाथः प्रथिम्ना चितपृथुमहिमा कुम्भकर्णो महेन्द्रः ॥

इति श्रीयवनीपद्मिनीभानोः श्रीमहामहेन्द्रश्रीकुम्भकर्णस्य कृतौ रसिकप्रियायां सानन्ददामोदरो नामैकादशः सर्गः ॥

---

तर्कान्दोलनकर्कशापि सुमतिर्या हावभावान्विता
शृङ्गारादिरसोच्चयादिकुशला सा शंकरे केवला ।
किं शम्भोरपरत्र विश्वविजयो रसस्वरद्वेषिता
देहार्धीकृतकामिनीप्रणयिता च क्वापि देशान्तरे ॥

इति श्रीमहामहोपाध्यायश्रीशंकरमिश्रविरचितायां शालिनाथकारितायां गीतगोविन्दटीकायां रसमञ्जरीसमाख्यायामेकादशः सर्गः ॥

## द्वादशः सर्गः १२

– सुप्रीतपीताम्बरः –

गतवति सखीवृन्देऽमन्दत्रपाभरनिर्भर-
[1]स्मरपरवशाकूतस्फीतस्मितस्नपिताधराम् ।
सरसमनसं दृष्ट्वा राधां मुहुर्नवपल्लव-
प्रसवशयने [2]निक्षिप्ताक्षीमुवाच हरिः प्रियाम् ॥ १ ॥

**विभासरागै[3]कतालीतालाभ्यां गीयते । प्रबन्धः ॥२३॥**

**किसलयशयनतले कुरु कामिनि ! [4]चरणनलिनविनिवेशम् ॥**

---

मनसि शिवमजेयं चिन्तयित्वाऽप्रमेयं
नृपतिमुकुटरत्नं कुम्भकर्णाभिधेयम् ।
वितनुत इह सम्यग्देशमार्गानुमेयं
श्रुतिपुटपरिपेयं गीतगोविन्दगेयम् ॥

इदानीं चिरकालकाङ्क्षितराधादर्शनोल्लासिमानसो हरिस्तामाह–गतवतीति । हरिः प्रियां राधामुवाच । किंभूतां प्रियाम् ? मुहुर्वारंवारं नवपल्लवानां प्रसवोऽथवा नवपल्लवाश्च प्रसवाः कुसुमानि च तेषां शयनं तस्मिन्दत्तदृष्टिम् । किं कृत्वा ? सरसं सरागं मनो यस्याः एवंभूतां दृष्ट्वा । पुनः किंभूताम् ? अमन्दो यस्त्रपाभरस्तेन निर्भरो यः स्मरः तत्परवशं यदाकूतमाशयस्तदनुविद्धं यस्मिन् तेन स्नपितोऽधरो यस्याः सा । क सति ? सखीसमूहे गतवति सति । 'स्मरवश' इति वक्तव्ये 'पर'ग्रहणमतिशयेन तदधीनत्वद्योतनाय । हरिणीवृत्तम् । अस्मिन्सर्गे स्वाधीनभर्तृका नायिका वर्णनीया । तल्लक्षणम् ( शृं. ति० १।७४ ) 'यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति । विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका' ॥ १ ॥ तदेव वक्ष्यमाणमाह–किसलयेति । तत्र पूर्वं ध्रुवः । क्षण-

---

गतवतीति । हरिः प्रियां राधामुवाच । क सति ? सखीवृन्दे सखीसमूहे गतवति सति । कीदृशीम् ? अमन्दत्रपाभरनिर्भरस्मरपरवशाकूतस्फीतस्मितस्नपिताधराम् । अमन्दः क्रूरोऽथ त्रपाभरेण लज्जासमूहेन निर्भरोऽतिशयो यः स्मरः कामस्तत्परवशस्तदायत्तो य आकूतोऽभिप्रायस्तेन स्फीतं प्रवृद्धं यत्स्मितं तेन स्नपितौ व्याप्तौ अधरौ यस्यास्ताम् । पुनः कीदृशीम् ? सरसमनसं रसोऽनुरागस्तत्सहितं मनो यस्यास्ताम् । किं कृत्वा ? नवपल्लवप्रसवशयने नवकिसलयपुष्पमये शयने शयनीये निक्षिप्ताक्षीं निहितनयनां विलोक्य दृष्ट्वा । अत्र शय्याविलोकनेन संभोगेच्छा ध्वन्यते ॥ १ ॥ **किसलयेति** । गीतस्यास्य

---

पाठा०–१ 'स्मरशरवशा°' S., G., 'स्मरशरपराकूत°' G. २ 'विक्षिप्ताक्षी°' P. ३ 'आदिताले' RM. ४ '°चरणकमल°' P.

तव पदपल्लववैरिपराभवमिदमनुभवतु सुवेशम् ॥ १ ॥
क्षणमधुना नारायणमनुगतमनुसर राधिके ! ॥ ध्रुवपदम् ॥
करकमलेन करोमि चरणमहमागमितासि विदूरम् ।
क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतिशूरम् ॥ क्षण० ॥२॥

---

मिति। हे राधिके! अधुना मामनुसर। किंभूतं माम्? क्षणमनुगतं त्वद्दर्शनोत्सवं प्राप्तम्। अथवा,–मामनुसर। किंभूतं माम्? क्षणमधुना त्वत्संभोगोत्सवमदेनानुगतं व्याप्तम्। अत्र केचन क्षणमधुना नारायणमनुगतमनुसरेति पठन्ति। तत्र 'माम्' इति प्रकरणागतमनूद्य नारायणविशेषणत्वेनोपादेयम्। नारासु अप्सु अयनं यस्य इति कामतापोपशान्त्यै शीतलं मामनुसर। मया सह जलक्रीडां कुर्विति वाक्यार्थः। इति ध्रुवः ॥ अथ पदानि किसलयेत्यादि। हे कामिनि कामाभिकाङ्क्षिणि! किसलयशयनतले चरणनलिननिवेशं कुरु विन्यासं कुरु। किसलयानि हि नलिनविशेषाश्च म्लानिभाञ्जि भवन्तीत्यत्रावयोरनुरूपं रतं भविष्यतीति व्यज्यते। किसलयानि हि पद्मपल्लवपर्यायानीत्युक्तिलेशेन विवृणोति—इदं किसलयशयनं तव पदपल्लववैरिपराभवमनुभवतु। पदपल्लवावेव वैरिणौ ताभ्यां सकाशात्पराभवम्। अथवा,–इदं किसलयशयनं तव पदपल्लववैरि स्पर्धाकृत्। अतः पराभवमनुभवतु। किंभूतं शयनम्? सुवेशं सुनेपथ्यम्। अत्र तल्पे पदपल्लवन्यासेन करणविशेषः सूचितः ॥ १ ॥ अपि च,–करकमलेनेति।

---

विभासरागः आदितालः। गीतार्थस्तु—हे राधे! क्षणमधुनानुगतं नारायणमनुसर। हे कामिनि! किसलयशयनतले चरणकमलविनिवेशं पादपद्मार्पणं कुरु। इदं सुवेशमपि सम्यक्पत्ररचनादिना सुष्ठु अलंकृतमपि किसलयशयनं तव पदपल्लववैरिपराभवं तव पदपल्लव एव यो वैरी शत्रुस्तस्मात्पराभवं पराजयमनुभवतु। यद्वा,–इदं किसलयशयनं पराभवमनुभवतु। कीदृशम्? तव पदपल्लववैरि-विरोधीत्यर्थः ॥ १ ॥ करकमलेनेति। अहं करकमलेन निजकराम्बुजेन तव चरणं करोमि संवाहयितुमर्थात्। यद्वा,–तवचरणमहमित्येकं पदम्। तथा च करकमलेन तव चरणयोर्महं पूजां संवाहनादिरूपां करोमि। कथमित्याह—त्वं विदूरमतिदूरमागमिता आनीतासि। अर्थान्मया। तथा च दूरागमनजन्यं ते श्रममपनयामीति भावः। शयनोपरि शय्याया उपरि नूपुरमुपकुरु। नूपुरस्य परिधानेन महार्घतापादनमेवोपकारः। कीदृशं नूपुरम्? अनुगतिशूरम्। अनुगतौ तवानुसरणे शूरम्। अपरोऽपि योऽनुगतिशूरो भवति स उपक्रियत इत्युचितमेवेति भावः। कमिव? मामिव। यथा तवानुसरणशूरं मामालिङ्गनादिनोपकरोषि तथा

---

१ "सर राधिके' RM., C., P. २ 'नूपुरमनुगतशूरम्' P.

वदनसुधानिधिगलितममृतमिव रचय वचनमनुकूलम् ।
विरहमिवापनयामि पयोधररोधकमुरसि दुकूलम् ॥ क्षण० ॥ ३ ॥
प्रियपरिरम्भणरभसवलितमिव पुलकितमतिदुरवापम् ।[1]
मदुरसि कुचकलशं विनिवेशय शोषय मनसिजतापम् ॥ क्षण० ४

---

हे राधे! विदूरं बहुदूरं पन्थानमागमितासि । अतः करकमलेन चरणमहं पूजां करोमि । शयनोपरि मां क्षणं नूपुरमिव उपकुरु । यथा नूपुरमुपकरोषि धारयसि तथा मामप्युपकुरु ममाप्युपकारं कुरु । चरणधारणद्वारेण चारमनुलक्ष्य शूरं यथा तव चरणं गच्छति तथैव विक्रान्तिं करोति । मामपि अनुसरणे शूरं त्वदनुसरणमेव पराक्रमो यस्य । अथवा,-शयनोपरि वर्तमाना त्वं मामुपकुर्विति योजनीयम् ॥ २ ॥ अपि च,-वदनेति । हे राधे! अनुकूलं रतिजनकं वचनं रचय । किमिव? वदनं सुधानिधिरिव तस्माद्गलितममृतमिव । तव विरहेण तापिताऽहं कथं वदिष्यामीत्याशङ्क्याह—तत्र परस्परमुपमानोपमेयभावः । दुकूलमिव विरहमपनयामि विरहमिव दुकूलमपनयामि । किंभूतं दुकूलम्? उरसि वर्तमानम् । पुनः किंभूतं दुकूलम्? पयोधररोधकम् । विरहे हि पयोधरौ न वर्धेते । दुकूलमपि पयोधरावावृत्य तिष्ठति । अथवा,-पयोधरो मेघ एव रोधको यस्य विरहस्येति । मेघालोके प्रियः समेत्य विरहं रुणद्धीत्युक्तिलेशः ॥ ३ ॥ अपि च,-प्रियेति । हे राधे! मदुरसि कुचकलशं विनिवेशय । अत एव मनसिजतापं शोषय । कलशे संनिहिते तापो यातीव । किंभूतं कुचकलशम्? पुलकितं रोमाञ्चितम् । पुनः किंभूतम्? अतीव दुःखेनावाप्यते त्वदनुग्रहं विना । पुनः किंभूतम्? प्रियपरिरम्भणाय रभसेन औत्सुक्येन वलितं संभक्तमिव ॥ ४ ॥ अपि च,—

---

नूपुरमप्युपकुर्वित्यर्थः ॥ २ ॥ **वदनेति** । हे प्रिये! अनुकूलमुचितं वचनं रचय । कीदृशम्? वदनमेव सुधानिधिश्चन्द्रस्तस्माद्गलितं च्युतम् । अतस्त्वत्प्रणयवाक्यम् । अथ चाप्युरसि हृदये वर्तमानं दुकूलं पट्टवस्त्रमपनयामि । कीदृशम्? पयोधरयो रोधकं तिरोधायकम् । कमिव? विरहमिव । यथा मद्विरहो मयापनीतस्तथा दुकूलमपनयामीत्यर्थः । विरहपक्षे,-पयोधररोधकं स्तनाश्लेषप्रतिरोधकम् ॥ ३ ॥ **प्रियेति** । हे राधे! मदुरसि कुचकलशं विनिवेशय अर्पय । कीदृशम्? अतिदुरापमतिदुर्लभम् । पुनः कीदृशम्? पुलकितं रोमाञ्चितम् । अत्र हेतुमुत्प्रेक्षयति—प्रियपरिरम्भणरभसवलितमिव प्रियस्य परिरम्भणे आलिङ्गने यो रभस उत्साहस्तेन वलितमिव युक्तमिव । अपरोऽपि यो हर्षयुक्तो भवति तस्य रोमाञ्चो भवत्येवेति ध्वनितम् । तेनालिङ्गनेन मनसिजतापं कामजन्यं

---

पाठा०-1 'मतिदुरापम्' RM., '॰मत्यदुरापम्' D., 'पुलकितमतीवदुरापम्' P.

अधरसुधारसमुपनय भामिनि ! जीवय मृतमिव दासम् ।
त्वयि विनिहितमनसं विरहानलदग्धवपुषमविलासम् ॥ क्षण० ५
शशिमुखि ! मुखरय मणिरशनागुणमनुगुणकण्ठनिनादम् ।
श्रुतियुगले पिकरुतविकले मम शमय चिरादवसादम् ॥ क्षण० ६
मामतिविफलरुषा विकलीकृतमवलोकितुमधुनेदम् ।
लज्जितमिव नयनं तव विरमति सृजसि वृथा रतिखेदम् ॥ क्षण० ७

अधरेति । हे भामिनि प्रिये ! चरणपरिचरणपरेऽपि कोपं मुञ्च । मानापनोदाय संबोध्यते । हे कोपने ! अधरसुधारसमुपनय अर्पय । अधरवक्त्रसंयोगं कुरुष्वेत्यर्थः । मां दासं त्वदधरामृतपिपासुतया मृतमिव जीवयेत्यर्थः । अमृतपानं हि मृतं जीवयति । दासो हि अनुपेक्षणीयो भवति । किंभूतं माम् ? त्वयि विनिहितमनसं आरोपितमानसम् । अत एव विरहानलेन दग्धं वपुर्यस्य । अत एव च न विद्यन्ते विलासा यस्य ॥ ५ ॥ अपि च,–शशिमुखीति । हे शशिमुखि ! मणिरशनागुणं मुखरय वाचालं कुरु । किंभूतं मणिरशनागुणम् ? अनुगुणकण्ठनिनादम् । अनुगुणोऽनुरूपः अर्थादेव त्वदीयकण्ठस्य निनादो यस्य । अत एव मम श्रुतियुगले चिराच्चदसङ्गमाद्वर्तमानमवसादं खेदं शमय । किंभूते श्रुतियुगले ? तव विरहे पिकरुतेन विकले विकलीकृते । विरहिणो हि पिकरुतं दुःश्रवं भवतीति ॥ ६ ॥ अपि च,–मामिति । हे

संतापं शोषय नाशय ॥ ४ ॥ अधरेति । हे भामिनि ! अधरसुधारसमधरसंबन्ध्यमृतरसमुपनय वितर । दासं मादृशमनुगतं जीवय । कीदृशं मृतमिव ? अन्योऽपि मृतोऽमृतपानेन जीवतीति ध्वनिः । मृतत्वे हेतुमाह—त्वयीति । त्वयि विनिहितमनसं त्वय्यर्पितचित्तम् । पुनः कीदृशम् ? विरहानलेन तद्विरहरूपेणाग्निना दग्धं वपुर्यस्य तम् । अत एवाविलासं विलासरहितम् । अन्योऽपि यो मृतो भवति स निश्चेष्टो दग्धदेहश्च भवतीति ध्वनिः ॥ ॥ ५ ॥ शशिमुखीति । हे शशिमुखि चन्द्रवदने ! मणिरशनागुणं मणियुक्तकाञ्चीदाम मुखरय सशब्दं कुरु । अनेन हंसलीलाख्यं विपरीतरतं भजस्वेति ध्वनितम् । तल्लक्षणं चोक्तं प्राक् । कीदृशं रशनागुणम् ? अनुगुणं कण्ठनिनादः कण्ठशब्दो यस्य तादृशम् । रशनागुणानुकारिकण्ठशब्दं च कुर्वित्यर्थः । अनेन शब्देन मम श्रुतियुगले श्रोत्रयुग्मे चिरादवसादं चिरकालीनमुपतापं शमय नाशय । कीदृशे ? पिकरुतेन कोकिलशब्देन विकले दुःखिते ॥ ६ ॥ मामिति ।

पाठा०–१ 'शमय मम' C. २ 'मीलितलज्जितमिव नयनं तव विरम विसृज रतिखेदम्' RM., D., S., C. ३ 'मामभि' RP. ४ 'विकलीकृत°' RM., D. ५ 'विसृज' P.

श्रीजयदेवभणितमिदमनुपदनिगदितमधुरिपुमोदम् ।
जनयतु रसिकजनेषु मनोरमरतिरसभावविनोदम् ॥ क्षण० ॥ ८ ॥

प्रत्यूहः पुलकाङ्कुरेण निबिडाश्लेषे निमेषेण च
क्रीडाकूतविलोकितेऽधरसुधापाने कथाकेलिभिः ।
आनन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभू-
दुद्भूतः स तयोर्बभूव सुरतारम्भः प्रियंभावुकः ॥ १ ॥

राधे ! इदं तव नयनमधुना अवलोकितुम् । अर्थान्मां लज्जितमिव विरमति । किंभूतं नयनम्? मामभिलक्ष्य विफलरुषा निरर्थकरोषेण विकलीकृतम् । अविकलं विकलं कृतमिति विकलीकृतम् । अत एव वृथा रतिखेदं सृजति । अथवा 'विसृज'इति पाठान्तरम् । अत वृथा निरर्थकम् । विसृज मुञ्च ॥ ७ ॥ श्रीजयदेवेति । रसिकजनेषु मनोरमो यो रतिरसो रतिरागस्तस्य भावस्तत्ता स्थैर्यं तस्य विनोदं कौतुकं जनयतु । किंभूतमिदं श्रीजयदेवभणितम्? अनुपमो निगदितो मधुरिपोर्मोदो यत्र येन वा तत् । 'पदानां दशकं यत्र ताले वर्णयतौ भवेत् । ध्रुवः प्रतिपदं गेयः कविनामाङ्कितात्पदात् ॥ गीतालापान्यथाशब्दं प्रतिताले ततः परम् । पाटास्तेनाः स्वराश्चैव शृङ्गारो रस उत्तमः ॥ देवशाखाभिधो रागः प्रबन्धे संप्रदृश्यते । श्रीविद्याधरलीलाख्यः श्रीपतिप्रीतिकारकः ॥' इति मधुरिपुमोदविद्याधरलीला नाम त्रयोविंशः प्रबन्धः ॥ ८ ॥

इदानीं सुरतारम्भं विवर्णयिषुराह—प्रत्यूह इति । तयो राधामाधवयोः स चिरं काङ्क्षितः सुरतारम्भ उद्भूतः प्रवृद्धः सन् प्रियंभावुको बभूव । स कः? यस्मिन्सुरतारम्भे निबिडाश्लेषे दृढतरालिङ्गने पुलकाङ्कुरेण रोमाञ्चमात्रेणापि

हे राधे ! मामवलोकयितुं तव नयनं मीलति मुद्रां प्राप्नोति । किमिव? लज्जितमिव । मां कीदृशम्? अतिविफलरुषा अतिनिष्फलेन रोषेण विकलीकृतं विकलतां नीतम् । अधुनेदानीं नयनमीलने विरम विरक्ता भव । निष्फलरोषादित्यर्थात् ॥ ७ ॥ श्रीजयदेवेति । इदं श्रीजयदेवभणितं जयदेवेन कथितं रसिकजनेषु मनोरमरतिरसभावविनोदं रतिः संभोगः रसः शृङ्गाररसो भावाः संचारिसात्त्विकादयस्तेषां मनोरमं विनोदं कौतुकं जनयतु । कीदृशं भणितम्? अनुपदं निगदितो मधुरिपोः कृष्णस्य मोद आनन्दो यत्र तादृशम् ॥८॥ प्रत्यूह इति । तयो राधामाधवयोः स लोकोत्तरो ललितारम्भो ललितो मनोहर आरम्भो यस्यैतादृशः शृङ्गारक्रीडाविशेष उद्भूत उद्भवः प्रियंभावुको बभूव प्रियो बभूव । स क इत्यत आह—प्रत्यूह इत्यादि । यस्मिंल्ललितारम्भे निबिडाश्लेषे कर्तव्ये पुलकाङ्कुरेण रोमाञ्चोद्गमेन

पाठा०—१ 'कथानर्मभिः' RM., P. २ 'आनन्दाभिगमेन' P., S. ३ 'ललितारंभः' RM.

दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै-
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः ।

प्रत्यूहोऽभूत् । 'अङ्कुर'ग्रहणं तन्मात्रमपि आलिङ्गनान्तराय इति ज्ञापनार्थम् । आश्लेषारम्भेऽपि सात्त्विको रोमाञ्चोऽभूदिति युज्यते । अपि च,–यस्मिन्क्रीडाकुलविलोकितेऽपि निमेषेण प्रत्यूहोऽभूत् । विलोकितं निमेषितमात्रस्याप्यसहमभूत् । अनु च,–अङ्गादङ्गान्तरसौन्दर्यदिदृक्षालोलं नेत्रं नैकत्राप्यवयवे धृतिं बध्नेति व्यज्यते । अधरसुधापाने कामकथाक्रीडनमन्तरायो जातः, अधरपाने प्रियालापो न सोढः, अतिशयेनाधरं पातुमिच्छोरतिप्रियालापः कोऽपि तस्मादप्यधिकरुचिर इति व्यज्यते । अपि च,–कामकलासु युद्ध इव युद्धे करणाकरणान्तरारम्भे आनन्दाधिगमेनापि अन्तरायो यथा कामजननाकाङ्क्षापि शिथिला भवेदिति वाच्यार्थः । कामोत्पत्तौ संजायमानायामलमनल्पत्वाय तत्प्रतिबन्धककरणान्तरमारब्धमिति व्यङ्ग्योऽर्थः । अत एव प्रवृद्धत्वमुचितम् । शार्दूलविक्रीडितं वृत्तम् । यथासंख्यमलंकारः । संभोगाख्यः शृङ्गारो रसः । 'जयमङ्गलतालेन पद्यं शृङ्गारनिर्भरम् । गीताः पादाः स्वरालेना उच्यन्ते यत्र रूपके ॥ देवशालाभिधे रागे सुरतारम्भनामतः । चन्द्रहासप्रबन्धोऽयं प्रबन्धः प्रीतिकृद्धरेः ॥' इति सुरतारम्भचन्द्रहासनामा चतुर्विंशः प्रबन्धः ॥ १ ॥ तदेव विवृणोति—दोर्भ्यामिति । यदस्मात्कारणादेतावत्यपि व्यतिकरे कान्तः कृष्णः कामपि वाचामगोचरे वर्तमानां तृप्तिमाप, तत्तस्मादहो कामस्य वामा लोकपथातीता गतिश्चेष्टितम् । अत्र कमितुमिष्ट इति 'कान्त'शब्द औचितीमावहति । यतो दुःखप्रदवने प्रीतिमापेति । किंभूतः कान्तः? दोर्भ्यां संयमितो बन्धनं प्रापितः । अनु च,–पयोधरभरेणापीडितः आ सामस्त्येन पीडामापितः । अनु च,–पाणिजैर्नखैराविद्धः । अनु च,–दशनैश्च क्षतमधरपुटं यस्य । तथा श्रोणीतटेनाहतस्ताडितः । अपि च,–कचे हस्तेन गृहीत्वानमितः । अपि च,–अधरमधुस्यन्देनाधरमधुपानेन निमित्तेन संमोहनं प्रापितः । 'अहो' इत्याश्चर्ये । कामस्य वामा गतिः; वामत्वं रसान्तराविर्भावात् । वीररसमाश्रित्य कृतापराधः स

प्रत्यूहो विघ्नोऽभूत् । अथ वा,–क्रीडाकुलविलोकिते क्रीडासु यदाकूतपूर्वकमभिप्रायपूर्वकं विलोकितं तत्र निमेषेण नेत्रस्पन्दनेन प्रत्यूहोऽभूत् । अथ च,–अधरसुधापानेऽधरामृतपाने कर्तव्ये कथानर्मभिः रहःकथाकौतुकैः प्रत्यूहोऽभूत् । अथ च,–मन्मथकलायुद्धे सुरते मन्मथस्य कामस्य कलायां कर्तव्यायां मन्मथयुद्धे सुरते आनन्दाधिगमेन आनन्दप्राप्त्या प्रत्यूहोऽभूत् ॥ १ ॥ दोर्भ्यामिति । दोर्भ्यां बाहुभ्यामर्यादाधया संयमितो बद्धः । अथ च तयैव पयोधरभरेण पीडितः । अथ च,–तया पाणिजैर्नखैराविद्धस्ताडितः । अथ

पाठा०–१ 'क्षतोऽधरपुटः' P.

हस्तेनाननितः कचेऽधरमधुस्यन्देन संमोहितः
कान्तः कामपि तृप्तिमाप तदहो कामस्य वामा गतिः ॥ २ ॥
वामाङ्के रतिकेलिसंकुलरणारम्भे तया साहस-
प्रायं कान्तजयाय किंचिदुपरि प्रारम्भि यत्संभ्रमात् ।

---

क्रमेण संयमनापीडनायेधक्षताहस्यवनमनसंमोहनानि प्रापितः कामपि तृप्तिमाप । अपि तु,–स्थिरोत्साहः सन् कामयुद्धान्न विरराभेति न काम- पीत्यर्थः । अतो वामा गतिः । अत्र विरोधः, यस्तु कमितुमिष्टः तस्मिन्कथं संयमनादयो योज्यन्ते ? संयमनादिभिश्च शृङ्गारानुभावेष्वालिङ्गनादिषु योगितेषु कामपि निरतिशयां प्रीतिमापेति विरोधपरिहारः । अथवा,– 'कामस्य वामा' इति वामेव गतिः वामाऽनिष्टेव गतिः । यदेवं व्यति- करेऽप्युद्रिक्तो भवति । शार्दूलविक्रीडितम् । अत्र वाक्यार्थस्य प्राधान्या- द्रसस्य च संकीर्णत्वेनाङ्गत्वाद्रसवदलंकारता ॥ 'विजयानन्दतालेन गौडीरागे विरच्यते । पद्यं पाटाः स्वरास्तेना लीला नायकसंभवाः ॥ शृङ्गारकैशिकी रीतिः कामतृप्तिपुरःसरः । कामिनीहासनामायं प्रबन्धः परिकीर्तितः ॥' इति कामतृप्तिकामिनीहासनामा पञ्चविंशतितमः प्रबन्धः ॥ ६ ॥ यदुक्तं तदेव वीरसंवलितं शृङ्गारं विवृण्वन्नाह—वामाङ्क इति । अयं श्लोकः पूर्ववाक्यशेषत्वेन योजनीयः । तदेतदन्वयः । रतिकेलिसंकुलरणारम्भे वामाङ्के वर्तमानया राधया संभ्रमात्स्मरसमराभिनिवेशात्संयमनादिभ्य उपरि कान्त- जयाय यत्किंचित्स्मरसंपल्लम्पटभटयोग्यसाहसप्रायं बालाजनायोग्यं प्रारम्भि येन जघनस्थली निष्पन्दा इति चलितुमशक्तिः । अपि च दोर्वल्लिः शिथिलिता इति प्रहाराक्षमता । अपि च, वक्ष उत्कम्पितं हृदि कम्पो जातः । अपि च,– अक्षि मीलितं दर्शनेऽशक्तं जातम् । अत्रार्थे वृद्धसंमतिमाह—स्त्रीणामबलानां पौरुषरसो वीररसः कुतः सिध्यति । अपि तु न कुतोऽपि । केलौ वामाङ्के

---

च,–तया दशनैः क्षताधरपुटः क्षतो दष्टो योऽधरपुटो यस्य तादृशः कृतः । अथ च,–तया श्रोणितटेन नितम्बेनाहत आस्फालितः । अथ च,–तया हस्तेनानमितः कचे केशे धृतेत्यर्थात् । ततोऽधरमधुस्यन्देन संमोहितः । एवंविधोऽपि कान्तः कामप्यनिर्वचनीयां तृप्तिमाप प्राप । तदहो इत्याश्चर्ये । कामस्य वामा विरुद्धा गतिः । यस्य बन्धनादि क्रियते स प्रीतिं न प्राप्नोति; अयं तु तादृशोऽपि प्रीतिमाप । कामस्य विरुद्धैव रीतिरिति भावः ॥ ३ ॥ माराङ्क इत्यादि । माराङ्के मारस्य चिह्ने । युद्धपक्षे मारस्याङ्के चिह्ने । रतिकेलिसंकुलरणारम्भे रतिकेलि- भिश्चुम्बनालिङ्गननानाबन्धादिलक्षणाभिः संकुले व्याप्ते रणारम्भे कामयुद्धारम्भे तया

---

पाठा०–१ 'माराङ्के' RM., D., S., P., G. २ 'यत्साहसात्' S.

निष्पन्दा जघनस्थली [1]शिथिलिता दोर्वल्लिरुत्कम्पितं
वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति ॥ ३ ॥
तस्याः [2]पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ
[3]निर्धौताधरशोणिमा विलुलितस्रस्तस्रजो मूर्धजाः ।
काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निखातैर्दृशो-
रेभिः कामशरैस्तदद्भुतमभूत्पत्युर्मनः कीलितम् ॥ ४ ॥[4]

---

ललनाया दक्षिणाङ्गस्थपुंसः भानुनाडीसंबन्धात्सुरतान्तकारी कामोद्भवो भवतीति वात्स्यायनमतवेदिनां मतम् । तस्मिंश्च ललनानामेवं चेष्टाः प्रसिद्धाः । अथवा,–रतारम्भादुपरि इति योजना । इदमेव वाक्यं निरपेक्षं व्याख्येयम् । अत्र दोष्णोर्वल्लित्वेन विशेषणे शैथिल्ये औचितीमावहति । अत्र 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।' ( का. प्र. १०।१०७ ) इति विशेषोक्तिरलंकारः । संभोगाख्यः शृङ्गारो रसः । कुतः सिध्यतीत्यनेन समरसकरणं व्यज्यते । गीतादि प्रसिद्धम् । 'जयश्रीसंज्ञतालेन पद्ये पादाः स्वरास्तथा । स्रोनाश्च यत्र बध्यन्ते संभोगे रस उत्तमे ॥ रागे कर्णाटबङ्गाले स पौरुषरसात्परः । प्रेम्णा विलासनामायं प्रबन्धो माधवप्रियः ॥' इति पौरुषरसप्रेमविलासनामा षड्विंशः प्रबन्धः ॥ ३ ॥ इदानीं संभोगसंतुष्ट्याऽऽसर्गसमाप्तेः संभोगान्ते लीलामाह—तस्या इति । एभिः पञ्चभिः कामशरैः पत्युः श्रीकृष्णस्य मनः कीलितम् । तदेतदद्भुतमाश्चर्यकारि अभूत् । किंभूतैः कामशरैः ? इत्यनेन प्रकारेण प्रातर्दृशोर्निखातैः । बाणास्तु दृशोर्लग्नास्तैर्विद्धं

राधया साहसप्रायं साहसबहुलं कान्तजयाय तदुपरि तस्य कान्तस्योपरि किञ्चित्कौतरं प्रारम्भि पुरुषायितमारब्धम् । परसंभ्रमात्संवेगात्तस्या राधिकाया जघनस्थली निष्पन्दा निश्चला जाता । दोर्वल्लिर्बाहुलता शिथिलिता शिथिलीभूता । वक्षो हृदयमुत्कम्पितम् । अक्षि मुद्रितम् । ततः स्त्रीणां पौरुषरसः पराक्रमाभिलाषः कथं सिध्यति ? अपि तु न सिध्यत्येवेत्यर्थः । 'मारो मृतौ विषेऽनङ्गे' इति विश्वः । 'रभसो वेगसंभ्रमौ' इत्यमरः ॥ ३ ॥ तस्या इति । एतैः कामशरैः पत्युर्दृशोर्लोचनयोः प्रातर्निखातैर्मनः कीलितं विद्धम् । इत्यद्भुतमाश्चर्यम् । अन्यत्र निखातैर्बाणैरन्यत्कीलितमित्याश्चर्यमित्यर्थः । कैः कामशरैः ? तस्या राधायाः पाटलेन श्वेतरक्तेन पाणिजेन नखेनाङ्कितमुरः । निद्राकषाये निद्रया

---

पाठा०–१ 'शिथिलता' S., P., D. २ 'पाटव°' O. ३ 'निर्धूताऽधर°' RP., D., P., O., 'निर्धौतोऽधर°' S. ४ 'त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे शङ्के सुन्दरि ! कालकूटमपिबन्मूढो मृडानीपतिः । इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वामाञ्चलं राधायाः स्तनकोरकोपरि चलन्नेत्रो हरिः पातु वः ॥' O.

व्याकोशः केशपाशस्तरलितमलकैः स्वेदमोक्षौ कपोलौ
क्लिष्टा बिम्बाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः ।
काञ्चीकान्तिर्हताशा स्तनजघनपदं पाणिनाच्छाद्य सद्यः
पश्यन्ती सत्रपा सा तदपि विलुलिता मुग्धकान्तिर्धिनोति ॥५

अत इत्येतदद्भुतम् । कोऽर्थः ? प्रातः प्रियायामेतानि दृष्ट्वा पुनर्नव इव कामः संजात इत्यर्थः । तान्येव च कामबाणपञ्चकव्याजेन वस्तून्युपदिशति । तथा राधाया उरो हृदयं पाटला ये पाणिजास्तैरङ्कितं दृष्ट्वा । अनेन पाटलापुष्पं स्मरबाण उक्तः । अपि च,–निद्रया कषाये कलुषिते दृशौ दृष्ट्वा । अनेन कमलाख्यः पुष्पबाणोऽभाणि । अपि च,–निर्धौतोऽधरशोणिमा । तं दृष्ट्वा । अनेन बन्धुजीवपुष्पं स्मरशरोऽगादि । अपि च विलुलितस्रस्तस्रजो मूर्धजाः । तानपि दृष्ट्वा । स्रस्ता स्रक् येभ्यस्ते तथा । विलुलिताश्च ते स्रस्तस्रजश्च । अनेन मालतीदाम मीनकेतनेषुरुद्दिष्टः । अपि च दरस्खलदञ्चलमीषच्छुथप्रान्तं काञ्चीदाम मेखलादाम दृष्ट्वा । अनेन सुवर्णशाखादिपीतकुसुमैः कुसुमाकरशरो वर्णितः । एतानि दृष्ट्वा पुनः स्मरपरवशो जात इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । अत्रापि वाक्यस्यान्यपरत्वाद्रसवदलंकारता । रसश्चाङ्कुरोपबृंहितः शृङ्गार एव । 'यतितालेन तालेन पदं पाटस्वरास्तथा । क्षेनासदन्त आलापः शृङ्गारः प्रेमनिर्भरः ॥ रागो मल्लकृतिर्यत्र स प्रबन्धो निगद्यते । कामाङ्कुशाभिनवता सृगाङ्कलेखाभिधानतः ॥' इति कामाङ्कुशाभिनवसृगाङ्कलेखाभिधः सप्तविंशः प्रबन्धः ॥ ५ ॥ व्याकोश इति । सा मुग्धकान्तिर्यत एव विलुलिता रतिपरिमर्दिता तथापि कृष्णं धिनोति प्रीणयति । किं कुर्वती ? सत्रपा सती । सद्यस्तत्काल स्तनजघनपदं पाणिना आच्छाद्य पश्यन्ती । कथं विलुलितेत्याह—केशपाशः ( कबरी ) व्याकोशः शिथिलो जातः । अपि च,–अलकैश्चूर्णकुन्तलैस्तरलितमित्यन्वौ

कषाये ते दृशौ लोचने वा । निर्धौताधरशोणिमा निर्धौतश्चुम्बनादिना क्षालितो योऽधरस्य शोणिमा लौहित्यम् । मूर्धजाः केशाश्च कीदृशाः ? विलुलितस्रजो विलुलिताः केशग्रहणपूर्वकचुम्बनादिदानेन म्लानाः । अत एव स्रस्ताः शिथिलाः स्रजः पुष्पमाला येषु तादृशाः । काञ्चीदाम च मेखलासूत्रं च दरस्खलदञ्चलं दरमीषच्छ्लथं शिथिलमञ्चलं प्रान्तं च ॥ ५ ॥

पाठा०–१ 'व्यालोलः' P., C. २ 'स्वेदलोलौ' P., D., S., C. ३ 'दृष्टा बिम्बाधरश्रीः' D., S.; 'क्लिष्टा दृष्टाधरश्रीः' P.; 'स्पष्टा दृष्टाधरश्रीः' C. ४ 'काञ्ची काञ्चिद्गताशां स्तन°' P., D., C. ५ 'पश्यन्ती सत्रपं मां' D., S. 'पश्यन्ती स्वा(चा° P.)त्मरूपं तदपि विलुलित(°तं P.) स्रग्धरेयं धिनोति' C. ६ '°विलुलितस्रग्धरेयं' C., S.

ईषन्मीलितदृष्टि मुग्धविलसत्सीत्कारधारावशा-
दव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम् ।
शान्तस्तब्धपयोधरं भृशपरिष्वङ्गात्कुरङ्गीदृशो
हर्षोत्कर्षविमुक्तनिःसहतनोर्धन्यो धयत्याननम् ॥ ६ ॥

---

गतम् । कपोलौ स्वेदमोषौ जातौ । अनु च,–बिम्बाधरकान्तिः क्लिष्टा जाता । अनु च हारयष्टिः कुचकलशरुचा हारिता कुतोऽपि नाशिता । अनेन कञ्चुकाभावाद्धारयष्टिः शरीरशोभयैव निगीर्णा । अपि च,–काञ्चीकान्तिर्हृतावा जाता । इयमपि वस्त्राभावात्तद्देशशोभयैव लुप्ता । निरलंकरणापि सर्वातिशायिन्या शरीरशोभयैव पत्युर्मनोहारिण्यभूदित्यर्थः । स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' ॥ ५ ॥ इदानीमन्यापदेशेनात्मानं धन्यमिति ध्वनयति—ईषन्मीलितेति । हर्षोत्कर्षविमुक्तनिःसहतनोः हर्षोत्कर्षेण नानारतजनितानन्दातिशयेन विमुक्तालसत्वेन निर्व्यापारा निःसहा च कामावेशवशादन्यव्यापारासहा तनुर्यस्याः । एतावता सुरतमनु श्रान्ततनोः कुरङ्गलोचनाया धन्य एव मुखं धयति पिबति नाकृतपुण्यकर्मा । कथं यथा स्यात् ? भृशपरिष्वङ्गाद्दृढालिङ्गनाच्छान्तस्तब्धपयोधरं शान्तौ विपुलौ स्तब्धौ कठिनौ किंचिदानतौ पयोधरौ यस्मिन्कर्मणि तद्यथा स्यात् । एतावता सुरतान्ते नितान्तं कान्तं तन्मुखं दृष्ट्वा पुनरालिङ्ग्याधरपाने स्पृहाभवदित्यर्थः । किंभूतमाननम् ? ईषन्मीलितदृष्टि किंचिन्मुकुलिते दृष्टी यत्र । किंभूतमाननम् ? मुग्धं मनोहरं यथा स्यात्तथा विलसन्त्यो याः सीत्कृतानां धाराः श्रेणयस्तद्वशादव्यक्ता आकुलाश्च सुरतक्रीडायां याः काकवो ध्वनिविकारास्तासु विकसन्तो ये दन्तांशवस्तैर्धौतोऽधरो यत्र तत्तथा । कस्मात् ? दृढालिङ्गनवशात् । एतेन वृक्षाधिरूढकमित्यालिङ्गनमुक्तम् । तल्लक्षणम्—'चरणेन चरणमाक्रम्य द्वितीयेनोरुदेशमाक्रमन्ती वेष्टयन्ती च तत्पृष्ठासक्तैकबाहुर्द्वितीयेनांसमवनमयन्ती ईषत्प्रवृत्तान्तःश्वसितसीत्कृतकूजिता चुम्बनार्थमधिरोढुमिच्छेदिति वृक्षाधिरूढकम्' । तत्र घट्टितमिति चुम्बनविशेषः । ईषत्प्रगृह्य निमीलितनयनावाच्छादयन्तीति घट्टितं नाम' । एतच्च तद्दालिङ्गनतोषेण आत्मनि धन्यत्वमारोप्य स्वात्मगतार्थचिन्तनपरं पद्यम् । शार्दूल-

---

अथेति । अथानन्तरं राधा कान्तं कृष्णं मण्डनवाञ्छया निजगाद । कीदृशं कान्तम् ? रतिश्रान्तमपि रतिखिन्नचित्तमपि । कीदृशी राधा ? निर्गता बाधा

---

पाठा०–१ 'मीलदृष्टि°' S. २ मुग्धहसितं('°तः P.) सीत्कार°' C; 'मीलत्कपोलपुलकं' S. ३ 'श्वासोत्कम्पिपयोधरोपरि परिष्वङ्गात्' P., C. 'श्यामोत्तुङ्गपयोधरो°' S. ४ '°विमुक्ति°' C.

अथ सहसा सुप्रीतं सुरतान्ते सा नितान्तखिन्नाङ्गी ।
राधा जगाद सादरमिदमानन्देन गोविन्दम् ॥ ७ ॥

**रामकरीरागयतितालाभ्यां गीयते ॥ प्रबन्धः ॥ २४ ॥**

कुरु यदुनन्दन ! चन्दनशिशिरतरेण करेण पयोधरे ।
मृगमदपत्रकमत्र मनोभवमङ्गलकलशसहोदरे ॥ १ ॥

---

विक्रीडितं वृत्तम् । जातिरलंकारः । पाञ्चाली रीतिः । मागधी गीतिः । भारती वृत्तिः । स्थितलयं गानम् ॥ ७ ॥ अथानन्तरं तयोः परस्परानन्दसंदोहरूपसुरतावसाने राधा गोविन्दमानन्दयतीत्युत्तरकृत्यानि प्रति प्रोत्साहयन्ती जगाद—अथ सहसेति । अथ राधा आनन्देनोपलक्षितं गोविन्दमिदं वक्ष्यमाणं सादरं जगाद । किंभूतं गोविन्दम् ? सहसा वेगेन सुप्रीतम् । प्रीतिपरे हि नाथे विज्ञप्तिः सिद्धिमेतीति नीतिविदः । अथ सहहासेन वर्तत इति राधाविशेषणमानन्देति वचने हेतुः । किंलक्षणा राधा ? संभोगावसाने नितान्तमतिशयेन खेदं प्राप्तमङ्गं यस्याः सा तथा । इदं पथ्या आर्या छन्दः ॥ ८ ॥ अत्रान्वयसौकर्यार्थं पूर्वं ध्रुवपदं व्याक्रियते—निजगादेति । सा राधा वक्ष्यमाणं प्रोवाच । क सति ? यदुनन्दने क्रीडां कुर्वति सति । किंभूते ? हृदयानन्दकारिणि इति ध्रुवः ॥ अथ पदानि । कुरु यद्विति । हे यदुनन्दन ! अत्र स्तनकलशे चन्दनवच्छीतलतरेण करेण कस्तूरिकया पत्रावल्यादि रचय । किंभूते कुचकलशे ? कामस्य जगज्जयार्थमङ्गलकलशसदृशे । मङ्गलार्थकलशो हि पयःपूर्णो भवति सुनीलाम्रपल्लवैरुपचितश्च । एवमत्र पयोधरस्यौचिती । अनेन मयूरपदकं नाम नखक्षतं व्यज्यते । तथा चाह वात्स्यायनः—'नान्यत्पटुतरं किंचिद्रागस्यास्ति विवर्धनम् । नखदन्त-

---

पीडा यस्याः सा । पुनः कीदृशी ? स्वाधीनभर्तृका । तल्लक्षणं शृङ्गारतिलके (१।७४)—'यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति । विचित्रविभ्रमासक्ता स्वाधीनपतिका यथा ॥' इति ॥ ८ ॥ तदेव गीतेन कथयति—कुर्विंत्यादि । गीतस्यास्य रामकरीरागो यतितालः । गीतार्थस्तु—सा राधा यदुनन्दने निजगाद उक्तवती । कीदृशे यदुनन्दने ? क्रीडति । पुनः कीदृशे ? हृदयानन्दजनके । किं निजगाद इत्याह—कुर्विति । हे यदुनन्दन कृष्ण ! अत्र शृङ्गारागे मम पयोधरे स्तने करेण मृगमदपत्रकं कस्तूरिकावलिं कुरु । कीदृशेन करेण ? चन्दनशिशिरतरेण चन्दनादपि शीतलेन । कीदृशे पयोधरे ? मनोभवस्य कामस्य यो मङ्गलकलशो माङ्गल्याय स्थापितः पूर्णकुम्भस्तस्य सहोदरे सदृशे

---

पाठा०–१ 'अथ कान्तरतिश्रान्तमपि मण्डनवाञ्छया । निजगाद माधवं मुग्धा राधा स्वाधीनभर्तृका' RM., S.; 'अथ सा निर्गतबाधा राधा स्वाधीनभर्तृका । निजगाद रतिश्रान्तं कान्तं मण्डनवाञ्छया ॥' RM., P.

निजगाद सा यदुनन्दने क्रीडति हृदयानन्दने ॥ ध्रुवपदम् ॥
अलिकुलगञ्जनमञ्जनकं रतिनायकसायकमोचने ।
त्वदधरचुम्बनलम्बितकज्जल उज्ज्वलय प्रिय! लोचने । निज० २
नयनकुरङ्गतरङ्गविकासनिरासकरे श्रुतिमण्डले ।
मनसिजपाशविलासधरे शुभवेश! निवेशय कुण्डले । निज० ॥३॥
भ्रमरचयं रचयन्तमुपरि रुचिरं सुचिरं मम संमुखे ।
जितकमले विमले परिकर्मय नर्मजनकमलकं मुखे । निज० ॥ ४ ॥

---

समुत्थानां कर्मणां गतयो यथा ॥' इति ॥ १ ॥ अपि च,–अलिकुलेति । हे प्रिय! लोचने पुनर्नूतनकज्जललेखां कुरु । किंभूतमञ्जनकम्? भ्रमरसमूहस्य तिरस्कारकम् । किंभूते लोचने? कामबाणानां मोचने इति कटाक्षविक्षेपलक्षिते । पुनः किंभूते? त्वदधरचुम्बनेन लम्बितं प्रसृतं कज्जलं यत्र । अनेन रागसंधुक्षणार्थं नयनयोश्चुम्बनमुक्तम् ॥ २ ॥ अपि च,–नयनेति । शुभो वेशो नेपथ्यविशेषो यस्येति हे शुभवेश ! श्रुतिमण्डले कुण्डले निवेशय । किंभूते श्रुतिमण्डले? नयनयोस्तरङ्गा निरीक्षणविशेषा कृष्णपक्षयास्त एव कुरङ्गविलासास्तेषां निरासं करोतीति । पुनः किंभूते? मनसिजस्य भुवनमोबन्धनार्थं पाशशोभाधरेति । अनेन नेत्रयोः श्रुतिगामिता उक्ता ॥ ३ ॥ अपि च,–भ्रमरचयमिति । 'हे यदुनन्दन' इत्यनुषञ्जनीयम् । मम मुखेऽलकं परिकर्मय अलकानां प्रसाधनं कुरु । किंविशिष्टे मुखे? जितकमले पद्मसदृशे । पुनः किंभूते? विमले । पुनः किंभूते? प्रसादवति । किंभूतमलकम्? नर्मपरिहासवचनजनकम् । अलकभ्रमरपङ्क्त्या मुखं पद्ममित्युत्प्रेक्षितम् । इति

---

॥ १ ॥ अलिकुलेति । हे प्रिय ! लोचने नेत्रे त्वदधराभ्यां यच्चुम्बनं तेन लम्बितं गलितं यत्कज्जलं तदुज्ज्वलय पुनर्दीपय । नयनयोः कज्जलं पुनरर्पयेत्यर्थः । कीदृशे लोचने ? रतिनायकस्य कामस्य सायकान्बाणान्कटाक्षरूपान्मुञ्चतीति रतिनायकसायकमोचनं तस्मिन् । कीदृशं कज्जलम् ? अलिकुलस्य भ्रमरसमूहस्य यद्गञ्जनं तिरस्कारस्तस्य जनकम् । 'उज्ज्वलो दीप्तिशृङ्गारविशदेषु विकाशिनि ।' इति विश्वः ॥ २ ॥ नयनकुरङ्गेति । हे शुभवेश ! शुभः शोभनो वेशोऽलंकरणं यस्य तादृश । मम श्रुतिमण्डले कर्णप्रदेशे कुण्डले विनिवेशय अर्पय । कीदृशे श्रुतिमण्डले ? नयने एव यौ कुरङ्गौ मृगौ, अतिवेगवत्त्वात् । तयोस्तरङ्गस्य यो विकासः प्रसरणं तस्य निरासकरे निरासकारिणि नयनयोर्दैर्घ्यवियोगकारिणि, अन्यथा कियद्दूरं तयोर्वृद्धिः स्यादित्यर्थः । पुनः कीदृशे श्रुतिमण्डले ? मनसिजस्य कामस्य यः पाशोऽस्त्रविशेषस्तस्य विलासधरे तल्लीलाभृति ॥ ३ ॥ भ्रमरचयमिति । मम संमुखे मुखे रुचिरं मनोहरमलकं चूर्णकुन्तलं

---

पाठा०–१ 'गञ्जनसंजनकं' RM., S. २ 'कज्जलमुज्ज्वलय' RM., D. ३ 'सुचिरं रुचिरं' S.

मृगमदरसवलितं ललितं कुरु तिलकमलिकरजनीकरे ।
विहितकलङ्ककलं कमलानन ! विश्रमितश्रमशीकरे । निज० ॥ ५ ॥
मम रुचिरे चिकुरे कुरु मानद ! मनसिजध्वजचामरे ।
रतिगलिते ललिते कुसुमानि शिखण्डिशिखण्डकडामरे । निज० ६

---

उत्प्रेक्षालंकारः ॥ ४ ॥ अपि च—मृगमदेति । हे कमलवदन ! मम अलिकरजनीकरे ललाटचन्द्रमसि ललितं मनोहरं तिलकं कुरु । किंभूतं तिलकम् ? कस्तूरिकारसेन संभक्तम् । किंभूतम् ? विहिता आरोपिता कलङ्कस्य कला येन । एतेन अलिकमष्टमीचन्द्रेणोपमीयते, कस्तूरीविशेषकं कलङ्केनेत्युपमालंकारः । किंभूते मुखे ? विश्रमिताः शान्तिमिताः श्रमजलकणा यत्र । एतेन पुनरुद्दीपनविभावाः सूचिता भवन्तीति ॥ ५ ॥ अपि च,—मम रुचिर इति । हे मानद मानिनीमानखण्डन ! अथ च-हे पूजाप्रद ! मम चिकुरे कुसुमानि कुरु । किंभूते चिकुरे ? रुचिरे रुचिप्रदे । पुनः किंभूते ? मनसिजः कामस्तस्य ध्वजः तत्र चामरवच्चामरस्तस्मिन् । पुनः किंभूते ? रत्या संभोगेन लुलिते विशकले । पुनः किंभूते ? मनोहरे । पुनः किंभूते ? शिखण्डिनो मयूरस्य शिखण्डकं बर्हभारः तस्य डामरे भयदे, जेतरीत्यर्थः । रासकच्छन्दः ॥ ६ ॥ अपि च,—

---

परिकर्मेव भूषय । कीदृशमलकम् ? नर्मजनकम् । कीदृशे मुखे ? विमले निर्मले । पुनः कीदृशे ? जितकमले जितं तिरस्कृतं निजशोभया कमलं येन तादृशे । कीदृशमलकम् ? मुखिरं चिरात् उपरि मुखस्योपरि भ्रमरचयं भ्रमरसमूहं रचयन्तम् । स्वकान्त्या भ्रमरभ्रमं जनयन्तमित्यर्थः ॥ ४ ॥ मृगमदेति । हे कमलानन पद्ममुख ! अलिकरजनीकरे अलिके ललाटमेव रजनीकरश्चन्द्रस्तस्मिन् । तिलकं कुरु । कीदृशं तिलकम् ? मृगमदरसवलितं मृगमदरसेन कस्तूरीरसेन वलितं निर्मितम् । पुनः कीदृशं तिलकम् ? विहितकलङ्ककलम् । विहिता कलङ्कस्य लाञ्छनस्य कला शोभा येन तादृशम् । अत्र 'कमलानन' इति विशेषणेन आननरूपकमलविरोधिन्यलिकरूपरजनीकरे मृगमदतिलकच्छलेन कलङ्कदानमुचितमेवेति ध्वनितम् । कीदृशे अलिके ? विश्रमितश्रमशीकरे विश्रमितो विश्रामं प्रापितो यः श्रमस्तज्जनितः शीकरोऽम्बुकणो यत्र तादृशेऽलिके ॥ अत्र 'विश्रमित' इत्यनेन व्यजनवातादिभिस्त्वनुभूतानां प्रस्वेदबिन्दूनामतिशयिततया हिमकणत्वमाक्षिप्यते । तेन चालिकस्य चन्द्रत्वरूपणं साङ्गं निर्वहतीति ध्वनितम् । 'ललाटमलिकं गोधिः' इत्यमरः ॥ ५ ॥ ममेति । हे मानद ! मादृशप्रणयनायिकाभिमानप्रद ! मम रुचिरे मनोहरे चिकुरे केशे कुसुमानि कुरु रचय । कीदृशे चिकुरे ? ललिते मनोहरे मनसिजस्य कामस्य ध्वजचामरे पताकाचिह्नभूते चामरे । पुनः कीदृशे ? रतिगलिते रतौ सुरतसमये गलिते मुक्तबन्धने । पुनः कीदृशे ? शिखण्डिनां

सरसघने जघने मम शम्बरदारणवारणकन्दरे ।
मणिरशनावसनाभरणानि शुभाशय! वासय सुन्दरे । निज० ॥७॥
श्रीजयदेववचसि रुचिरे सदयं हृदयं कुरु मण्डने ।
हरिचरणस्मरणामृतनिर्मितकलिकलुषज्वरखण्डने । निज० ॥ ८ ॥

रचय कुचयोश्चित्रं पत्रं कुरुष्व कपोलयो-
र्घटय जघने काञ्चीं मुग्धस्रजा कवरीभरम् ।

---

सरसघन इति । हे शुभाशय शोभनहृदय! अथ शुभ आ सामस्त्येन शयः करो यस्य । मणिरशनादीनां करसाध्यत्वाद्यमर्थो युक्तः । मम जघने श्रोण्यां मणिमया रशना च वसनानि च आभरणानि च वासय निवेशय । किंविशिष्टे जघने? सरसं च सघनं च स्निग्धसान्द्रे । पुनः किंविशिष्टे? शम्बरवारणः कामः स वारण इव तस्य निवासार्थकन्दर इव कन्दरे । पुनः कीदृशे? सुन्दरे मनोहरे । गजगतीत्यादि । अनुकूलो नायकः । प्रगल्भा नायिका । संभोगः शृङ्गारः ॥ ७ ॥ अपि च,-श्रीजयदेवेति । हे यदुनन्दन! मण्डने इति मण्डननिमित्तं हृदयं सदयं कुरु, दयापरो भूत्वा मण्डनानि विधेहीत्यर्थः । किंलक्षणे मण्डने? रुचिरे जयदेवपत्नीसकाशादुत्कर्षप्रदे । पुनः किंलक्षणे? श्रीजयदेववचसि विषयभूते । अथवा,-'च'शब्दमध्याहृत्य मण्डने जयदेववचसि च हृदयं सदयं कुर्विति व्याख्येयम् । अन्यानि पदानि उभयविशेषणत्वेन योजनीयानि । किंलक्षणे वचसि? सहृदयालंकरणे । जयदेववचसि किंविशिष्टे? हरिचरणस्मरणमेवामृतं तत्र कृतो यः कलिकलुषज्वरो दोषरूपसंतापः स एव ज्वरः तस्य खण्डने । हरिचरणस्मरणामृतेन पापखण्डने वचसीत्यर्थः । अथवा,-हरिचरणस्मरणामृतेन कृतं पापस्य खण्डनं येन वचसा तस्मिंस्तादृशे ॥ ८ ॥ इदानीमष्टपदीक्रमेण श्लोकेनावतारयति—रचयेति ।

---

मयूराणां शिखण्डस्य पिच्छस्येव चामरे तादृशे ॥ ६ ॥ सरसेति । हे शुभाशय शोभनहृदय! मम सुन्दरे जघने मणिमयी या रशना क्षुद्रघण्टिका वसनं वस्त्राभरणान्यलंकरणानि च वासय परिधेहि । कीदृशे जघने? सरसघने सरसे शृङ्गाररससहिते घने निबिडे । पुनः कीदृशे? शम्बरं शम्बरनामानं दैत्यं दारयतीति शम्बरदारणः कामः स एव वारणो हस्ती; महाबलत्वात् । तस्य कन्दरे । अपरोऽपि हस्ती पर्वतकन्दरायां तिष्ठतीति भावः । 'कुञ्जरो वारणः करी' इत्यमरः । 'दरी तु कन्दरो वा स्त्री' इति च । वासयेति च 'वस आच्छादने' ण्यन्तः ॥ ७ ॥ श्रीजयदेवेति । हे देव कृष्ण! जय सर्वोत्कर्षेण वर्तस्व । अथ जयदेवस्य कवेर्वचसि वाक्ये सदयं दयासहितं यथा स्यादेवं हृदयं कुरु । कीदृशे मण्डने? जयदेवस्यालंकारजनके । पुनः कीदृशे? हरिचरणस्मरणमेव यदमृतं तेन निर्मितं कलिकलुषज्वरस्य कलियुगसंचितपापरूपज्वरस्य खण्डनं नाशनं येन तादृशे ॥ ८ ॥ रचयेति । हे कृष्ण! कुचयोः पत्रं मकरिकापत्रं रचय ।

---

पाठा०-१ 'हृदयं सदयं' S. २ 'काञ्चीमञ्चय स्रजा कबरीभरे' BM., S.

कलय वलयश्रेणीं पाणौ पदे मणिनूपुरा-
विति निगदितः प्रीतः पीताम्बरोऽपि तथाकरोत् ॥ ९ ॥

यद्गान्धर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं
यच्छृङ्गारविवेकतत्त्वरचनाकाव्येषु लीलायितम् ।

---

पीताम्बरः श्रीकृष्ण इति राधया निगदितः प्रीतः सन्यथा निगदितं तथा सर्वमकरोत् । 'अपि'शब्दसमुच्चितं यद्यदभीष्टं तत्तदकरोदित्यपिशब्दार्थः । ब्रवीति किम् ? 'हे यदुनन्दन' इत्यनुषङ्गः । कुचयोः पत्रं पत्रवल्लीं रचय । अनु च कपोलयोर्मकरिकादि चित्रं रचय । जघने श्रोण्यां काञ्चीं मेखलामारोपय । अनु च मुग्धस्रजा मनोहरमालया कवरीभरं कलय बन्धय । अनु च वलय-श्रेणीं पाणौ कलय । अनु च पदे मणिमयनूपुरौ कलय । अत्र यथासंख्यम-लंकारः । हरिणीवृत्तम् । प्रगल्भा नायिका । तल्लक्षणम् ( शृं. ति. १।४२ )— 'लब्धा पतिं प्रगल्भा स्यात्समस्तरतकोविदा । आक्रान्तनायका वाढं विराज-द्विभ्रमाय या ॥ स्वामिन्भङ्गुरयालकं सतिलकं भालं विलासिन्कुरु प्राणेश ! त्रुटितं पयोधरयुगे हारं पुनर्योजय । इत्युक्त्वा सुरतावसानसुखिता संपूर्ण-चन्द्राननास्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥' दक्षिणो नायकः । 'यो गौरवं भयं प्रेम दाक्षिण्यं पूर्वयोषिति । न मुञ्चत्यन्यरक्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा' ( शृं. ति. १।२६ ) ॥ ९ ॥ इदानीं विद्वत्प्रार्थना-व्याजेन आत्मप्रशंसां तनुते—यद्गान्धर्वेति । हे सुधियः ! जयदेवपण्डित-कवेर्मत्सर्वं गीतगोविन्दतः । अत्र तसिल् सार्वविभक्तिकत्वात्सप्तम्यर्थे उपपत्तिः । गीतगोविन्दे परिशोधयन्तु शुद्धं कुर्वन्तु । अथवा,–गीत-गोविन्दादेव शुद्धं जानन्तु । अत्र 'यद्यपि संख्यावान्पण्डितः कविः' इति

---

कपोलयोश्चित्रं चित्रकाख्यं विशेषकं कुरु । अथ जघने काञ्चीं त्रुटितां क्षुद्रघण्टिकां घटय अर्पय । कवरीभरे केशसमूहे स्रजं माल्यमलय प्रापय । वलयश्रेणीं कङ्कणपङ्क्तिं पाणौ हस्ते कलय अर्पय । पदे चरणे नूपुरौ मञ्जीरौ कुरु । इत्यनेन प्रकारेण राधया निगदित उक्तः सन् पीताम्बरः कृष्णोऽपि तथैवाकरोत् । यथा यथा राधोक्तवती तथैवाकरोदित्यर्थः ॥ ९ ॥ यद्गान्धर्वेति । हे सुधियः

---

पाठा०–१ 'पदे कुरु नूपुरा—' RM. २ 'पर्यङ्कीकृतनागनायकफणा-श्रेणीमणीनां गणे सङ्क्रान्तप्रतिबिम्बसंवलनया बिभ्रद्विभुमक्रियाम् । पादा-म्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः कायव्यूहमिवाचरन्नुपचितो भूतो हरिः पातु वः ॥ त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे शङ्के सुन्दरि ! कालकूटमपिबन्मूढो मृडानीपतिः । इत्थं पूर्वकथाभिरन्यमनसा विक्षिप्य वक्षोञ्चलं राधायाः स्तनकोरकोपरिमिलन्नेत्रो हरिः पातु वः ॥' ४. ३ 'सर्वं-मपि यत्काव्येषु' RM., ४.

तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः
सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ॥ १० ॥[1]
श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य[3] ।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु ॥ ११ ॥[2]
साध्वी माध्वीक ! चिन्ता न भवति भवतः शर्करे ![4] कर्कशासि
द्राक्षे ! द्रक्ष्यन्ति के त्वाममृत ! मृतमसि क्षीर ! नीरं रसस्ते ।

---

एकार्थपर्यवसायित्वं, तथापि 'विकटैकशमसताम्' इत्यादिवत्पण्डितेत्यपि कविः सम्यग्दर्शीति विशेषणपरं बोद्धव्यम् । तदिति किम् ? यद्गान्धर्वकलासु कौशलम् । गान्धर्वो मार्गदेशीवत् तस्य कला अङ्गविन्यासवैचक्षण्यादिकाः तत्र कौशलम् । तत्र गान्धर्वस्य स्वपदात्मकत्वेन मार्गकत्वात् (?) । अत्र संभविऽपि केवलदेश्यां गान्धर्वशब्दवृत्तिरुपचाररूपा बोद्धव्येति सुचितम् । अनु च यच्च वैष्णवमनुध्यानम् । अनु च चिन्तनम् । अनु च यच्च शृङ्गारस्य विवेकः संभोगविप्रलम्भत्वेन पृथग्भावलक्ष तत्त्वं सम्यक्त्वेन निरूपणम् । तस्य रचनाविशेषवन्ति यानि काव्यानि तेषु यल्लीलायितं विलसितमिति यावत् । एतावता गाने विष्णुभक्तौ शृङ्गाररसनिरूपणे च यदेतस्य काव्यकौशलं तत्सानन्दाः सुधियोऽस्मादेव प्रबन्धात्परिशोधयन्तु । किंभूतस्य कवेः ? कृष्णे एकतान एकाग्रचित्त आत्मा स्वरूपं यस्य । तथाविधस्येत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । वैदर्भी रीतिः । आरभटी वृत्तिः ॥ १०–११ ॥

इदानीं कविरात्मनः प्रबन्धस्य माधुर्यादिगुणवत्त्वं ख्यापयति—साध्वीति । जयदेवस्य वैदग्ध्यवाचः शुभमिव शुभवत् । यावत्सारं यावत्सारस्य संभव इति यावत्सारम् । यत्रकुत्रापि सारं विद्यते तत्र शृङ्गाररसस्य सारं तत्त्वं ज्ञातुमिच्छति । यथा यत्रकुत्रचिच्छुभं मङ्गलं विद्यते तत्र जगन्मङ्गलचरिता-

---

पण्डिताः ! सन्तो जयदेवकवेः श्रीगीतगोविन्दशास्त्रं परिशोधयन्तु जानन्तु । तत्किमित्याह—यद्गान्धर्वकलासु कौशलं नैपुण्यम् । अथ च,—वैष्णवं विष्णु-संबन्धि यदनुध्यानमनुक्षणचिन्तनम्, यच्च शृङ्गारविवेकतत्त्वं शृङ्गारस्य शृङ्गार-रसस्य यो विवेकः संभोगविप्रलम्भादिरूपेण तद्विवेचनं तस्य तत्त्वं यथार्थज्ञानम् । यदपि च काव्येषु कविकर्मसु कविजनिर्माणकर्मेषु लीलायितम् । तत्सर्वमित्यर्थः । कीदृशस्य जयदेवकवेः ? कृष्णैकतानात्मनः कृष्णैकतानतत्पर आत्मा मनो यस्य तादृशस्य । 'एकतानोऽनन्यवृत्तिः' ॥ १० ॥ अधुना पितृमातृनाम निबध्नन्प्रार्थयते सज्जनानिति स्वगुणान्प्रकाशयितुम्—श्रीभोजदेवेत्यादि ॥ ११ ॥

---

पाठा०–१ 'स्वच्छन्दं' BM. २ 'साधूनां खल एव संमतिरिह स्यादेव भक्त्यार्थिनामालोच्य प्रथनश्रमं च विदुषामस्मिन्भवेदादरः । ये केचित्पर-कर्तृपदश्रुतिपरास्तानर्थये मत्कृतिं भूयो वीक्ष्य वदन्त्वयमिह चेत्ता यासना स्थास्यति ॥' S. ३ 'राधादेवी' D. ४ 'न भवतु भवती शर्करे' D.

माकन्द ! क्रन्द कान्ताधर ! धर न तुलां गच्छ यच्छन्ति भावं
यावच्छृङ्गारसारं शुभमिव जयदेवस्य वैदग्ध्यवाचः ॥ १ ॥

इत्थं केलिततीर्विहृत्य यमुनाकूले समं राधया
तद्रोमावलिमौक्तिकावलियुगे वेणीभ्रमं बिभ्रति ।

---

तुलनेनाथवा गन्तुमिच्छन्ति तथाह—तर्हि हे माध्वीक ! तवैवं चिन्ता काऽपि न भवति । एतत्सदृशं भवामीति चिन्ता न कार्या । कथम् ? त्वयि तत्-साराभावात् । तदा 'भवतु' इति पाठान्तरम् । अथ भवतीति पाठपक्षे—हे शर्करे ! भवती कर्कशासीति योज्यम् । तद्वैवर्ण्यं योग्यं (?) त्वयि सारं नास्त्येव । हे द्राक्षे ! त्वं मा भैः । त्वां के वा द्रक्ष्यन्ति ? न केऽपीत्यर्थः ! हे अमृत ! त्वया नाम्नाऽनेन गर्वो न धार्यः । तदपेक्षया त्वं मृतमसि । हे क्षीररस ! रसोऽहमिति त्वं मा गर्वीः । तव रसो नीरमेव । निरन्तरमीर्यते प्रेर्यत इति नीरम् । हे माकन्द पक्वरसफल ! त्वं क्रन्द वैकल्यं प्राप्नुहीति किम् ? विकलस्य चिन्तामपि ते न करिष्यन्ति । हे कान्ताधर ! त्वं ताभि-स्तुलां न धर । अहं तत्तुल्यो भवामीति मा संप्रतिपद्येथाः । अथ,—हे कान्ताधर ! वैकल्यं न गच्छेत्यर्थः । यतो जयदेवस्य वैदग्ध्यवाचो यावत्सारं यावद्भिः सारैः सह तुलां गन्तुमिच्छन्ति । तर्हि यावता न तुलयन्ति तावत्त्वद्भिरेवमुक्तप्रकारेण स्थातव्यम् । किंभूता वाचः ? शुभं मङ्गलं शृङ्गार-सारमिव । अत्र 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति न्यायमाश्रित्य प्रबन्धान्ते 'शुभ'शब्दोपादानम् । अत्र तिरस्कृतो-पमालंकारः । स्रग्धरा वृत्तम् । आरभटी वृत्तिः । वैदर्भी रीतिः । गुणकीर्तनं नाम शब्दालंकारः । तल्लक्षणं सङ्गीतराजे—'बहूनां गुणिनां यत्र नामार्थ-ज्ञापितैर्गुणैः । एकोऽप्यतिशयते तत्तु कीर्तितं गुणकीर्तनम्' ॥ १२ ॥ इत्थमिति ।

---

एतत्काव्यविवेचनप्रणयिनां चर्चासमोन्मूलना-
त्पुण्यं यच्च हरिस्तुतौ प्रतिपदव्याख्यासु मे संचितम् ।
तेन श्रीरमणानुगोऽस्तु सततं प्रेयो मम श्रीपतिः
शश्वन्मङ्गलमातनोत्वपि सतां सेवावतां शृण्वताम् ॥

इति श्रीमहामहोपाध्यायविद्येश्वरमिश्रात्मजश्रीमहामहोपाध्यायशंकरमिश्र-विरचितायां श्रीशालिनाथकारितायां गीतगोविन्दटीकायां रसमञ्जरी-समाख्यायां द्वादशः सर्गः समाप्तिमगात् ॥

---

पाठा०—१ 'कान्ताधर धरणितलं गच्छ' ४. २ 'सारस्वतमिह वच' ५.
३ ''देवस्य विष्णुवचांसि' ४.

'रत्नाह्लादिकुचप्रयागफलयोर्लिप्सावतोर्हस्तयो-
र्व्यापारः पुरुषोत्तमस्य ददतु स्फीतां मुदां संपदम् ॥ १३ ॥

इति श्रीजयदेवकृतौ गीतगोविन्दे सुप्रीतपीताम्बरो
नाम द्वादशः सर्गः ॥

॥ समाप्तं चेदं काव्यम् ॥

---

पुरुषोत्तमस्य हस्तयोर्व्यापारः स्फीतां मुदां संपदं ददतु । किंविशिष्टयोर्हस्तयोः ? तत्र वेण्यामाह्लादो विद्यते ययोस्ते आह्लादिनी । कुचावेव प्रयागफले वटफले, आह्लादिनी च ते कुचप्रयागफले च आह्लादिकुचप्रयागफले, तयोर्लिप्सां वाञ्छां बिभ्रत इति लिप्साभृतौ, तयोर्लिप्साभृतोः । किं कृत्वा ? कृत्वं पूर्वोक्तप्रकारेण स्वाधीनभर्तृकया राधया सह यमुनाकूले क्रीडापरंपरा विहृत्येति स्वेच्छया विधानपरम् । क्व सति ? तद्रोमावलिमौक्तिकावलियुगे । तस्या रोमावलिर्मौक्तिकानामावलिर्हारस्तयोर्युग्मे । 'वेण्या' इति गङ्गायमुनयोः सङ्गमस्य भ्रमं विलासं बिभ्रति सति । रोमावलिर्यमुनयोपमीयते; कृष्णत्वात् । मौक्तिकावलिश्चोज्ज्वलत्वाद्गङ्गयोपमीयते । तत्संगमे प्रयागो भवत्येव । कुचौ तत्फलाभ्यामुपमीयेते । कुचप्राप्तेः प्रयागफलप्राप्तिरिति रूपकमलंकारः । शार्दूलविक्रीडितं वृत्तम् । स्वाधीनभर्तृका नायिका । तल्लक्षणम्—( शृं. ति. १।७४ ) 'यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति । विचित्रविभ्रमासक्ता सा स्वाधीनपतिका यथा ॥ लिखति कुचयोः पत्रं कण्ठे नियोजयति स्वजं तिलकमलिके कुर्वन्नाबध्नाति उद्ग्रथति कुन्तलान् । इति चटुशतैर्वारंवारं वपुः परितः स्पृशन् विरहविधुरो नास्याः पार्श्वं विमुञ्चति वल्लभः ॥' पाञ्चाली रीतिः । भारती वृत्तिः । पाञ्चाली गीतिः । आदितालस्तथा पञ्च द्रुतयुक्तसमुद्भवः । प्रतिमण्ठश्चतुर्मात्रो मण्ठश्चैवाद्रुतालकः ॥ तालो वर्णयतिश्चैव जयमङ्गलसंज्ञितः । विजयानन्दनामा च जयश्रीसंज्ञकः परः ॥ प्रतितालं पदानि स्युः पाटास्तदुभयं तथा । मध्ये मध्ये यथाशोभालिखितार्थविशेषवत् । विशेषतो वर्णयतो यदा श्रीसंज्ञिकोऽपि च ॥ तेनकाः स्युः पदस्थाने प्रतितालेन वेष्टते । शुक्तिवाद्यालङ्कैर्युतैरालापेन पुरस्कृतैः ॥ पदान्येवं षोडश वै तालाः एकोनविंशतिः । गौडः स्याद्देशतालादिरागः सर्वपदाश्रयः ॥ धीरोदात्तगुणैर्युक्तो वर्ण्यो ह्युत्तमनायकः । छन्दः स्यात्स्वेच्छया बद्धं समानादिगुणा दश' ॥ १३ ॥ इति श्रीसुप्रीतपीताम्बरतालवेणिनामाऽष्टाविंशः प्रबन्धः ॥

यस्य द्वादशराजकं वितनुते सेवां स्थिरं किङ्करं
यस्मिन्द्वादशभानुभानुनिकरो भात्येककालोद्गतः ।
यश्च द्वादशभाःप्रभः प्रकृतिवत्प्राप्यैव शोभां स्थितः
सोऽयं द्वादशसर्गगं विवरणं श्रीकुम्भकर्णो व्यधात् ॥

# गङ्गास्तवप्रबन्धः ।

मधुमथनमूर्तिवर ! इन्दुकरकामुकं वहसि बहु वारि सुतरङ्गे ।
हरिचरणनखभिदुरजगदण्डनिर्गता ब्रह्मजलपात्रकृतसङ्गे ॥ १ ॥
नमो देवि गङ्गे ! नमो देवि गङ्गे ! हर निखिलमघमलकनन्दे ॥ध्रुवम्॥
त्वमसि जनपाविनी चतुरुदधिगामिनी सप्तर्षिकुलसुकृतसारे ।
कनकगिरिलङ्घिते सकलमुनिवन्दिते हरमुकुटसितकुसुममाले ॥न० २
सगरसुतसङ्गमे लसदमरसुन्दरीदूतिके दुष्कृतिदुरापे ।
निरयगतिबाधिके निर्वाणसाधिके भक्तजनहृतसंतापे ॥ नमो० ॥ ३

मधुमथनेति । हे देवि हे गङ्गे ! तुभ्यं नमः । आदरे द्विरुक्तिः । हे अलकनन्दे ! त्वं निखिलं समग्रमघं पातकं हर नाशय । मधुमथनस्य श्रीकृष्णस्य या मूर्तयस्तासां वरा श्रेष्ठा तस्याः संबुद्धौ हे मधुमथनमूर्तिवरे ! त्वं बहुवारि अतिजलं वहसि । सुष्ठु उत्तमास्तरङ्गा यस्यास्तस्याः संबुद्धौ । हे ब्रह्मजलपात्रकृतसङ्गे ! त्वं हरिचरणनखैर्भिदुरं भिन्नं यज्जगतोऽण्डं ब्रह्माण्डं तस्मान्निर्गतासि प्रकटितासि ॥ १ ॥ त्वमसीति । हे सप्तर्षिकुलस्य सुकृतं पुण्यं तस्य सारे सारभूते कनकगिरिर्मेरुर्लङ्घित उल्लङ्घितो यया तस्याः संबुद्धौ हे कनकगिरिलङ्घिते ! हे सकलैः समस्तैर्मुनिभिर्वन्दिते । हे हरमुकुटस्य सितकुसुमानां श्वेतपुष्पाणां माले मालाभूते । त्वं जनानां विशेषां पावनी पवित्रकर्त्री असि । पुनः कीदृशी ? चत्वारश्च ते उदधयश्च तान्प्रति गच्छति सा चतुरुदधिगामिनी असि ॥ २ ॥ सगरेति । हे सागरसुतसङ्गमे सागरसुतानां सङ्गमो यस्यास्तस्याः संबुद्धौ । सङ्गमेन पावनकर्त्रीत्यर्थः । हे लसन्त्यः शोभमाना या अमरसुन्दर्यो देवाङ्गनास्तासां दूतिके प्रापिके ! हे दुष्कृतिभिर्दुष्कर्मकारिभिर्दुःखेनाप्राप्यमाणे । हे निरयगतिबाधिके नरकगतिनिवारिके ! हे निर्वाणसाधिके मोक्षप्रदे ! हे भक्तजनहृतसंतापे ! भक्तजनानां

१ यद्यप्यस्य प्रबन्धस्य 'भणतीह सादरं धीरजयदेवकविरुदारमतिः' इत्यावन्तिमपद्यार्थेन गीतगोविन्दकर्तृजयदेवकविप्रणीतत्वमापाततः प्रतीयते, तथापि गीतगोविन्दस्याखिलप्रबन्धसाधारणानां पदलालित्य—रचनाचातुरी—शब्दनादचमत्कार—वर्णनानैपुण्यादीनां—मिश्रजयदेवकवितानुरूपाणामत्र लेशतोऽप्यनधिगमान्नायं प्रबन्धो गीतगोविन्दकाव्यकर्तुः श्रीजयदेवस्य कृतिरिति नहीयोऽनुमानं विजृम्भतेतराम् । अतोऽस्य प्रबन्धस्य प्रणेता मिश्रजयदेवाद्भिन्नो धीरजयदेवनामा अन्यः कोऽपि कविः स्यादिति निष्कर्षः ।

तीर्थवरकारिणि पूर्वजोद्धारिणि हिमशैलपाषाणभेदे ।
नागरं प्लावयसि पूरयसि सागरं संगता विन्ध्यगिरिपादे ॥ नमो० ॥ ४

शुभसलिलनिर्धौतपुलिनवति कुर्वतस्तव नामनिर्मलालापम् ।
वन्दिता वीक्षिता चिन्तितावगाहिता मज्जिता मम हरसि पापम्॥न०५

इह निखिलमुनिगणैरिह निखिलसुरगणैरिह निखिलवेदैरुदारे ।
पीयसे गीयसे स्तूयसे जह्नुमुनिकन्यके! संसारसारे ॥ न० ॥ ६ ॥

गण्डूषमिह मेऽघशमनमधिजयतु तव करनिकरगम्भीरतोये ।
परलोकबन्धुरसि सुन्दरसिन्धुरसि तटिनि सुरसदनसाधनोपाये ॥ न

---

हृतः संतापो यया तस्याः संबुद्धिः ॥ ३ ॥ तीर्थवरेति । हे हिमशैलस्य हिमाचलस्य पाषाणानां भेदो भेदनं यस्यास्तस्याः संबुद्धौ त्वं तीर्थवरस्य श्रेष्ठतीर्थस्य कारिणी असि । पुनः कीदृशी ? पूर्वजानामुद्धारिण्यसि । हे गङ्गे ! त्वं नगराणां समुदायो विद्यते यत्र तन्नागरं भूमण्डलं प्लावयसि पूर्णं करोषि । पुनः कीदृशी ? सागरं समुद्रं पूरयसि । पुनः कीदृशी ? विन्ध्यगिरिपादे विन्ध्याचलमूले संगता मिलितासि ॥ ४ ॥ शुभेति । हे शुभसलिलेन पवित्रोदकेन निर्धौतं क्षालितं यत्पुलिनं तटं तद्वति यस्यास्तस्याः संबुद्धौ । त्वं मम पापं हरसि नाशयसि । कथंभूतस्य मम ? तव नाम्नो यो निर्मलालापः पवित्रालापस्तं कुर्वतः । कथंभूता त्वम् ? वन्दिता नमस्कृता । वीक्षिता दृष्टा । चिन्तिता स्मृता । अवगाहिता प्रविष्टा । मज्जिता स्नाता सती एभिः प्रकारैः पापं हरसि ॥ ५ ॥ इहेति । हे उदारे महाम्बे ! हे संसारसारे ! संसारे सारभूता त्वमसीत्यर्थः । हे जह्नुमुनिकन्यके हे जाह्नवि ! त्वमिह संसारे । अथवा,—ब्रह्माण्डे निखिलमुनिगणैः समस्तमुनिसमूहैः पीयसे । इह निखिलदेवगणैः समस्तदेवसमूहैः गीयसे । निखिलवेदैः समस्तवेदैः स्तूयसे ॥ ६ ॥ गण्डूषमिति । हे करनिकरगम्भीरतोये कराणां लहरीणां निकरः समूहस्तेन गम्भीरमक्षोभ्यं तोयं यस्यास्तस्याः संबुद्धौ हे सुरसदनसाधनोपाये । सुराणां देवानां सदनं स्थानं तस्य साधनं प्राप्तिस्तस्योपायभूते । हे तटिनि तटवति हे गङ्गे ! त्वं परलोकबन्धुः परलोके बन्धुरूपासि । पुनः कथंभूतासि ? सुन्दराणां देवानां सिन्धुर्नद्यसि । अतस्तव गण्डूषमाचमनं मे मम अघशर्म

इति रामलक्ष्मणकौशिकानुज्ञया सुरसरित्कृतनमस्कारम् ।
भणन्तमिह सादरं धीरजयदेवकविमुत्तारयसि भवजलधिपारम् ॥ ८

इति गङ्गास्तवप्रबन्धः समाप्तः ।

---

पातकजालमपि जयतु नाशयतु । इहास्मिँल्लोके ॥ ७ ॥ इतीति रामेति । रामलक्ष्मणकौशिकानुज्ञया । कौशिको विश्वामित्रः । रामलक्ष्मणकौशिकानामनुज्ञया आज्ञया । सुरसरितो गङ्गायाः कृतो नमस्कारो यस्यां क्रियायां यथा भवति तथा । सादरमादरपूर्वकं यथा भवति तथा । इति पूर्वोक्तप्रकारेण । इहास्मिँल्लोके भणन्तं कथयन्तं धीरजयदेवकविं भवजलधिपारं भवरूपो यो जलधिः समुद्रस्तस्य पारमन्तमुत्तारयसि प्रापयसीत्यर्थः ॥ ८ ॥

इति श्रीजयदेवकृतगङ्गास्तवप्रबन्धटीका समाप्ता ॥



## टीकोद्धृतार्थश्लोकाः ।

भवोन्मूलन ! भद्रमस्तु भवते गङ्गाक्षमाले शुभं
द्वा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे ॥ (पृ. ५)

  

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान् ।
न तन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥

# गीतगोविन्दस्थपद्यानां सूचिः ।

## रसिकप्रिया-रसमञ्जरीटीकोदाहृतग्रन्थ-ग्रन्थकृन्नामनिर्देशकं

## परिशिष्टम् १

## गीतगोविन्दगत-राग-तालानां विधि

| स० | प्र० | दीपिका रागः | दीपिका तालः | रसमञ्जरी रागः | रसमञ्जरी तालः | रसिकप्रिया रागः | रसिकप्रिया तालः |
|---|---|---|---|---|---|---|---|
| १ | १ | मालवगौड | रूपक | मालवगौड | रूपक | मालवगौड | रूपक |
| | २ | गुर्जरी | मंठ | गुर्जरी | प्रतिमंठ | गुर्जरी | निःसार |
| | ३ | वसन्त | यति | वसन्त | रूपक | वसन्त | यति |
| | ४ | रामकरी | यति | रामकरी | रूपक | रामकरी | यति |
| २ | ५ | गुर्जरी | ,, | गुर्जरी | प्रतिमंठ | गुर्जरी | यति |
| | ६ | मालवगौड | एकताली | गौडमालव | एकताली | मालवगौड | एकताली |
| ३ | ७ | गुर्जरी | यति | गुर्जरी | यति | गुर्जरी | यति |
| ४ | ८ | कर्णाट | एकताली | कानर (डी) | एकताल | कर्णाट | एकताली |
| | ९ | देशाख | एकताली | देशाख | एकताली | देशाख | एकताली |
| ५ | १० | देशीवराडी | रूपक | देशीवराडी | रूपक | देशी | रूपक |
| | ११ | गुर्जरी | एकताली | गुर्जरी | एकताली | गुर्जरी | एकताली |
| ६ | १२ | गुणकरी | रूपक | गुणकरी | रूपक | गोण्डकरी | रूपक |
| | १३ | मालव | यति | गौडीमालव | प्रतिमंठ | मालव | यति |
| | १४ | वसन्त | यति | वसन्त | एकताली | वसन्त | यति |
| ७ | १५ | गुर्जरी | एकताली | गुर्जरी | एकताली | गुर्जरी | एकताली |
| | १६ | देशवराडी | रूपक | देशाख | रूपक | देशवराडी | रूपक |
| | १७ | भैरवी | यति | भैरवी | यति | भैरवी | यति |
| ८ | १८ | गुर्जरी | यति | गुर्जरी | यति | गुर्जरी | यति |
| ९ | १९ | देशवराडी | अष्टताली | देशवराडी | अष्टताली | देशवराडी | अष्टताली |
| १० | २० | वसन्त | रूपक | वसन्त | रूपक | वसन्त | यति |
| ११ | २१ | वराडी | प्रतिमंठ | वराडी | प्रतिमंठ | वराडी | रूपक |
| | २२ | वराडी | यति | वराडी | यति | वराडी | यति |
| १२ | २३ | विभास | एकताली | विभास | आदि | भास | आदि |
| | २४ | रामकरी | यति | रामकरी | यति | रामकरी | यति |

## कानुसारि नामपरिचायकं परिशिष्टम् २

| ० | प्र० | पद्द्योतनिका | | बालबोधिनी | | सञ्जीविनी | |
|---|---|---|---|---|---|---|---|
| | | रागः | तालः | रागः | तालः | रागः | तालः |
| १ | १ | मालव | रूपक | मालवगौड | रूपक | मालवगौड | रूपक |
| | २ | गुर्जरी | प्रतिमंठ | गुर्जरी | प्रतिमंठ | गुर्जरी | परिमंठ |
| | ३ | वसन्त | रूपक | वसन्त | रूपक | वसन्त | यति |
| | ४ | रामकरी | रूपक | रामगिरी | यति | रामकरी | रूपक |
| २ | ५ | गुर्जरी | रूपक | गुर्जरी | " | गुर्जरी | प्रतिमंठ |
| | ६ | मालवगौड | एकताली | मालवगौड | एकताली | मालव | एकताल |
| ३ | ७ | गुर्जरी | मंठताल | गुर्जरी | यति | गुर्जरी | मंठताल |
| ४ | ८ | कर्णाटक | एकताली | कर्णाट | एकताली | कर्णाट | एकताली |
| | ९ | देशाख | एकताली | देशाख | एकताली | देशाख | एकताली |
| ५ | १० | देशीवराडी | रूपक | देशीवराडी | रूपक | देशीवराडी | रूपक |
| | ११ | गुर्जरी | एकताली | गुर्जरी | एकताली | गुर्जरी | एकताली |
| ६ | १२ | गुणकरी | रूपक | गुणकरी | रूपक | गुणकरी | रूपक |
| ८ | १३ | गोंडीमालव | प्रतिमंठ | मालव | यति | गोंडीमालव | प्रतिमंठ |
| | १४ | वसन्त | एकताली | वसन्त | यति | वसन्त | एकताली |
| | १५ | गुर्जरी | एकताली | गुर्जरी | एकताली | गुर्जरी | एकताली |
| | १६ | देशाख | रूपक | देशाख | रूपक | देशाख | रूपक |
| | ७ | भैरव | यति | भैरवी | यति | भैरवी | यति |
| | ८ | गुर्जरी | यति | रामकरी | यति | गुर्जरी | रूपक |
| | ९ | देशवराडी | अष्टताली | देशवराडी | अष्टताली | देशवराडी | अष्टताली |
| | २० | वसन्त | रूपक | वसन्त | यति | वसन्त | रूपक |
| | १ | वराडी | रूपक | वराडी | एकताली | वराडी | प्रतिमंठ |
| | : | वराडी | रूपक | वराडी | यति | वराडी | यति |
| | | विभास | आदि | विभास | आदि | विभास | आदि |
| | | रामकरी | यति | रामकरी | यति | रामकरी | यति |

## महाकविजयदेवकवेः समयपरिचायकं

# परिशिष्टम् ३

पुरा किल ११९८ शकमिते संवत्सरे शहाबुद्दीन-गोरीसुल्तानस्य दासीसुतः कुतुबुद्दीनाख्यो दिल्लीपतिरासीत् । तेन कतिपयसंवत्सरावधि दिल्लीपति-पादशाहपदं प्रशास्य, बख्तियार-खिलजीसेनाधीशादियोद्धसाहाय्येन बङ्गदेशः पादाक्रान्तो कृत इत्यनुशुश्रुमः । तदा विद्वंशज उदीच्यक्षत्रियकुलजो लक्ष्मणसेनाख्यो विद्वान्नृपो नदियाशान्तिपुरे राज्यमशासीत् । वङ्गोत्कलमभि-व्याप्य समुद्रतीरावधि पूर्वदिश्यस्य राज्यप्रदेश आसीत् । तदन्तर्वर्तिराजन्या नृपालस्याज्ञाप्रतिपालनपरा आसन्निति श्रूयते । यदा बख्तियार-खिलजीमध्य-पूर्वोक्तः सेनाधीशो नदियाशान्तिपुरस्थान्मुहुर्मुहुर्धर्षयाञ्चक्रे, तदा लक्ष्मण-सेनः स्वदेशं परित्यज्य जगन्नाथपुरीं निर्जगाम । एवमुदीच्यराजाश्रितो वङ्ग-देशो दिल्लीपतिना सह सन्धितो बभूवेति चानुश्रूयते । अस्यैव पण्डितसभा-रत्नमासीज्जयदेवः । स एवैतद्गीतगोविन्दकाव्यमरचयत् । तत्र 'वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः ।' (गी. गो. १।१।४) 'स्पर्धो कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ॥' इति प्रशंसनपरं श्लोकं स्वयं प्रणीय अन्यान् निर्दिष्टवानित्यनेनायं महाकवी राजसभायां संलब्धप्रतिष्ठ आसीदिति स्फुटं भवति । अयं तिन्दुबिल्वाभिजनः कौण्डिन्यगोत्रजश्च, अस्य पितुर्नाम भोजदेवः । तद्वंशानुक्रमस्त्वित्थम्—

शेखरराकरः
|
पारिजातः
|
विद्याधरः
|
भोजदेवः
|
जयदेवः

महाकविजयदेवविषयकं गीतगोविन्दविषयकं चान्यद्वृत्तं प्राक् उपो-स्फुटमिति तत्तत एवावसेयम् ।

